# संस्कृत
# प्रबन्ध प्रदीपः

स चाय
Fuller Exhibitioner फुल्लर ऐगजीबिशिनर भाजा
स्वर्णपदक प्राप्तेन,
सस्कृत–हिन्दी–साहित्य–विषयकानेकग्रन्थनिर्मात्रा,
'लुध्याना'स्थ गवर्नमैंट कालजे, सस्कृताध्यक्षेण,
पजाब विश्वविद्यालये सस्कृत बोर्ड सदस्येन,
'एम. ए' उपाधिधारिणा, 'पी ई एस' इति प्रशस्ति भाजा,

**अग्रवालोपाह्वेन हंसराजेन**
निर्मित



प्रकाशक
**शक्ति प्रकाशन**
माडल टाउन
लुधियाना ।

वितरक
**राजपाल एण्ड संज**
कश्मीरी गेट, दिल्ली ।

मूल्यम्—५)

पूर्वाज्ञया

परम साहित्यिकाना

विविध-ग्रन्थ-निर्मातृणा

सस्कृतसाहित्यपरमानुरागिणा

विद्वद् वन्द्याना देशभक्ताना

सस्कृत विश्व परिषदोऽध्यक्षाणा

उत्तर प्रदेशस्य राज्यपालाना

समादरणीय श्रीयुत

**कन्हैयालाल मानिकलाल मुन्शी**

महोदयाना

करकमलेषु

सादर

**श्रद्धया**

# नम्र निवेदनम्

अद्यत्वे संस्कृतपरीक्षासु प्रबन्धरचनापरिपाटी विशिष्टं पदम-धितिष्ठति। विश्वस्य समस्तासु समुन्नतिमुखासु भाषासु सर्वत्र प्रबन्ध-ग्रन्थानां रचना महता रंहसा वरीवर्तते। इह संस्कृतसाहित्ये परीक्षा-र्थिभिः प्रबन्धकलायां पाटवं कामयमानैरतिशयेन काठिन्यमनुभूयते। न च सन्ति विबुधभारतीबद्धाः प्रभूताः प्रबन्धग्रन्थाः। सन्तोऽपि केचन न तावद्राजनीतिविज्ञानसमाजनागरिकशास्त्राणां विषयानधि-कृत्य प्रबद्धाः। एतेषां विषयाणां ज्ञानं कियदुपयोगि साम्प्रतमिति नातितिरोहितं विपश्चिदपश्चिमानाम्। सत्स्वपि कतिपयेषु प्रबन्ध-पुस्तकेषु सुरसरस्वत्यैव संस्कृतच्छात्रा इमानन्यांश्च विषयान् अभ्यस्य गीर्वाणवाण्यां पाटवं विषयाणां च प्रबोधं लभेरनिति मनसि कृत्वैव ममास्य प्रबन्धप्रदीपस्य प्रणयने प्रवृत्तिः।

किञ्च सन्तीह शास्त्रसिद्धान्तसंगताः प्रबन्धाः पद्यपद्यांशानधि-कृत्य प्रतिपादिता केचन तादृशा येऽस्य प्राचीनतागौरवं नापकर्षन्ति केऽपि नितान्तमभिनवा राजनीतिविज्ञानसमाजशास्त्रसम्बन्धिनो ये चास्याभिनवरमणीयं कमपि नवीनमेव वैशेष्यं व्यक्तं साधयन्ति।

इदञ्च सविनयं विज्ञायते यदस्य प्रबन्धप्रदीपस्य प्रणयनेऽभि-नवपुराणविषयस्नेहसंवर्धितस्यापूर्वोऽयं मम प्रयासः। स च एष

परीक्षार्थिनः संस्कृतच्छात्रान् प्रदीपवत्प्रबन्धपद्धतिं प्रकाश्य भृशमुपकरिष्यतीति विश्वसमि ।

'स एष मम विद्यार्थिहितानुरोधेन कृतः प्रयासः कियत्साफल्यं लभते' इत्यत्र गुणगणमण्डिताः पण्डितपुङ्गवाः एव प्रामाण्यमर्हन्ति । विद्यार्थिनां सुकुमारमतीनां हितमनुरुध्यैव यथामतिप्रबद्धा विषयविशेषशालिनी पदावली सुधीवराणामपि मनःसु जनयिष्यति कमपि सन्तोषमित्यपि वर्तते मे विश्वासः ।

ग्रन्थस्यास्य प्रणयने तिक्कूपाह्वेन श्री श्रीनाथेन शास्त्रिणा मम मित्रेण मे महती सहायता कृता, इत्यहं तस्याभारं मन्ये ।

यद्यत्र प्रमादः क्वापि स्खलनं वा भवेत्तन्मानवस्याऽसर्वज्ञतां समाकलय्य क्षन्तुमर्हन्ति करुणावरुणालया गुणैकपक्षभाजो धीमद्वरिष्ठाः ।

ये च सूरिवरा अत्रत्यान् प्रमादान् सूचयेरन् तेषां महान्तमुपकारभारं ज्ञास्यमि—इति

विदुषां पादपद्मोपजीवी
अग्रवालोपाह्वो हंसराजः

# विषयानुक्रमणिका

## प्रथमः प्रदीपः

---

## द्वितीयः प्रदीपः

### विचारात्मकाः प्रबन्धाः(साहित्यिका आधुनिकाश्च)

---

# तृतीयः प्रदीपः

## वर्णनात्मकाः प्रबन्धाः

# चतुर्थः प्रदीपः

## आख्यानात्मकाः प्रबन्धाः

# पञ्चमः प्रदीपः

## संकेतार्थकाः प्रबन्धाः

---

## परिशिष्टानि

# प्रथमः प्रदीपः

## प्रबन्धकला

प्रबन्धो निबन्धः प्रस्तावश्चेति त्रयोऽपि शब्दाः समानार्थकत्वेन प्रयुज्यन्ते। व्युत्पत्तेरनुसारं सत्सु अपि तेषाम् अर्थ-

परिभाषा

भेदेषु व्यवहारे तु तेषां समानार्थता प्रसिद्धैव।

प्रबन्धस्तु गद्यात्मकाया रचनाया विशिष्टा शैली, **प्रकर्षेण बध्यन्ते** विचारा ह्यस्मिन् इति। यतो हि विचारा अस्मिन् **निःशेषेण बध्यन्ते** अतो निबन्ध एष उच्यते। यतः कोऽपि विशिष्टो विचारोऽस्मिन् **प्रस्तूयते** अतो जाताऽस्य 'प्रस्ताव' इति संज्ञा। आंगलभाषायां साहित्यस्य इयं विधा ऐस्से (Essay) इति कथ्यते, तस्य तात्पर्यं तु प्रयासः, प्रयत्न इति। सीमितसमये सीमितस्थाने च निज प्रमुखविचारस्य अभिव्यक्तेः **प्रयत्न** इति। स च विचारः सोपपत्ति सोदाहरणं संक्षेपत एव प्रस्तोतुं शक्यते। यदाऽध्यापको निर्दिशति स्व विद्यार्थिनः, 'अमुकविषये प्रबन्धं वा निबन्धं वा प्रस्तावं वा लिखत', तस्यायमेवार्थो भवति यद् अस्य विषयस्य संबन्धिनी याऽपि युष्माकं विचारधारा वर्तते सा सीमितसमये सीमितस्थाने (निर्दिष्टासु पंक्तिषु शब्देषु वा) सरल-सुन्दर-भाषया रोचकशैल्या सोपपत्ति सोदाहरणं प्रस्तोतव्या—इति।

## प्रबन्धकलाया महत्त्वम्

गद्यं कवीनां निकषं वदन्ति, प्रबन्धं तु गद्यलेखकानाम्। प्रबन्धलेखनाद् अस्मद् विचाराः सुदृढा निश्चिताश्च भवन्ति। यदि

वयं कस्यचिद् विषयस्य सम्बन्धे स्व विचारान् प्रकटयितुम् असमर्थाः तर्हि कथं नाम शिक्षिता वयम्। अत एव परीक्षासु, विशिष्य उच्च-परीक्षासु, प्रबन्धलेखनस्य परमं महत्त्वं विद्य सर्वासु भाषासु, संस्कृतेऽपि । ये तु विद्यार्थिनः प्रबन्धलेखने चतुराः भवन्ति, ते स्वलेखनीबलेन अन्यपत्रेष्वपि बहूनि अंकानि अधिगन्तुं शक्नुवन्ति। द्वितीयाश्रमं प्रविश्यापि तैः साफल्यम् अनुभूयते । प्रबन्धलेखनं तावत् साफल्यस्य प्रथमं सोपानम्। वक्तारोऽपि, अन्ये महान्तश्च सर्वे, प्रथमं स्व विचारान् लिपिबद्धान् कुर्वन्ति, तत साफल्यस्य द्वितीयं सोपानम् अधिरोहन्ति। विद्यार्थिनां प्रायः प्रबन्धलेखनं प्रति अरुचिर्भवति, सर्वस्मिन् खलु प्रयास-साध्ये कर्मणि स्वाभाविकी मनोवृत्तिरेषा मनुष्याणाम्। 'परं प्रमादालस्यजा तामसिकी वृत्तिरेषा' इति न विस्मर्तव्यम् अस्माभिः । लेखनकार्यस्य कानिचिद् अंकानि विधाय, तानि च परीक्षाऽङ्केषु समाकलय्य, पुरस्कारादिभिश्च विद्यार्थिषु उत्साहम् उत्पाद्य संवर्धितव्या एषा प्रबन्धकला ऽध्यापक-प्रवरैः । उच्चश्रेणीनां विद्यार्थिभिः स्वहितम् अवलोकयद्भिः स्वयमपि अभ्यसनीयैव एषा कला।

## २. प्रबन्धभेदाः

अनन्ताः खलु विषया. । आ पिपीलिकायाः गजपर्यन्तं, आ पत्र-पुष्प-फल-कण्टकेभ्यः दिवाकर-निशाकरपर्यन्तं, जन्मनः पूर्वं मृत्योरनन्तरं, भूत-वर्तमान-भावी सर्वोऽपि विषयः प्रबन्धयितुं शक्यः। सत्यपि एवं ते चतुर्धा विभाज्याः।

(क) विचारात्मकाः

(अ) कस्यचित् गुणदोष स्वभावादीनां विचारः ।

(आ) सामाजिकानां, राजनैतिकानां, पारिवारिकाणां वा विषयाणां विचारः ।

(इ) विवादास्पदानां विषयाणां विमर्शः ।

(ई) साहित्यिकानां समालोचनात्मकानां वा विषयाणां विवेचनम् । कस्यचित् कवेर्वा लेखकस्य वा तस्य कृतेर्वा समालोचना । कस्यचित् महापुरुषस्य सूक्ते' सिद्धान्तस्य वा विचार. ।

बुद्धिपरा ह्येते प्रबन्धाः विवेचनात्मका अपि कथ्यन्ते । उच्चपरीक्षासु प्रायः एतादृश एव प्रबन्धा' पृच्छ्यन्ते । एतेषामेवाऽस्मिन् ग्रंथे प्राचुर्यं वर्तते ।

## (ख) वर्णनात्मकाः

(अ) नदी नगर-समुद्र-पर्वतदेशानां वा योजनानां वा पदार्थानां निर्माणविधेर्वा वर्णनम्—यथा भारतस्य राजधानी, हरिद्वार तीर्थम् ।

(आ) प्राकृतिकानां दृश्यानां वर्णनम्—यथा सूर्योदयस्य, उपवनस्य, नदीतटे सायंकालीन-दृश्यस्य वा वर्णनम् ।

(इ) प्रसिद्धभवनानां वर्णनम्—यथा 'आगरा'स्थ ताजप्रासादस्य ।

(ई) पर्वमहोत्सवादीनां वर्णनम्—यथा वैशाखी पर्व, विजयदशमी ।

(ङ) संस्थानां वर्णनम्—यथा काशी विश्वविद्यालयस्य, संयुक्त राष्ट्रसंघस्य वा वर्णनम् ।

साधारणतयाऽयं विधिरनुसर्तव्यो वर्णनात्मकेषु निबन्धेषु—

### १. गंगायमुनादि नदीनां वर्णने

(क) कुतः सा प्रादुर्भूता कुत्र च विलयं याति ।

(ख) कुत्र सा समभूमिं स्पृशति ।

(ग) तस्याः तटवर्तिनां प्रसिद्धानां नगराणां संकेतः ।

(घ) तस्याः महत्त्वम्—आर्थिकं, राजनीतिकं, धार्मिकं वा ।

(ङ) ततः प्रसूतानां कुल्यादीनां वर्णनम् ।

### २. प्रसिद्धानां नगराणां वर्णने

(क) भौगोलिकावस्थितिः—कस्मिन् प्रदेशे तटिनीतटे वा तस्यावस्थितिः ।

(ख) नामधेयस्य हेतुः, जनगणनादि वर्णनञ्च ।

(ग) तन्नगरस्य माहात्म्यं—के के च पदार्थास्तत्र उत्पाद्यन्ते निर्मीयन्ते वा ।

(घ) राजनैतिकम्, ऐतिहासिकं, धार्मिकं वा महत्त्वम् ।

(ङ) के के च तत्र महोत्सवा भवन्ति ।

(च) कानि कानि च तत्र प्रसिद्धानि दर्शनीयानि स्थानानि ?

### पर्वमहोत्सवादीनां वर्णने

१. तस्य नामधेयस्य हेतुः

२. तस्येतिहासः—कस्मात् कालात् स प्रवृत्त इत्यादि ।

३. कस्मिन् मासे कस्मिंश्च दिवसे पक्षे वा स भवति ?

४. महोत्सवस्य महत्त्वं—तस्य माननात् के के च लाभाः भवन्ति ?

५ महोत्सवः कथं मान्यते जनै. । का वा कुप्रथास्तत्रान्तर्गताः । कथं च ता दूरीकर्तुं शक्या' ।

६. अन्य प्रदेशेषु तस्य किं स्वरूपं विद्यते ?

## संस्थानां वर्णने

१. किन्नामधेया सा संस्था ? कुत्र चावस्थिति. ?

२. कदा केन वा संस्थापिता ?

३. के च तस्योद्देश्याः ? का च कार्यप्रणाली ?

४. पदाधिकारिणां परिचयः, भवनस्य च वर्णनम् ।

५. यदि सा शिक्षणसंस्था तर्हि आचार्यस्य, अध्यापकानां, श्रेणीणां, विद्यार्थिनां च परिचयोऽपि देय' । अध्यापन-प्रकारः क्रीडादि-प्रबन्धश्च विशेषेण वर्णनीयः । छात्राणां गोष्ठ्य , विविधाः चेष्टाः, परीक्षा-परिणानाश्चापि वर्णयितव्याः ।

# (ग) आख्यानात्मकाः (विवरणात्मकाः)

(अ) महापुरुषाणां पूतात्मनां चरितम्—यथा महात्मनो गान्धेश्चरितम् ।

एत आख्यानात्मका निबन्धाश्चरितात्मका अपि कथ्यन्ते । एष खलु तेषां साधारणो विधिः ।

१. कदा कुत्र च स जन्म लेभे ? कं वंशं च सोऽलंचकार ?

२. तस्मिन् समये देशस्य का परिस्थितिरासीत्—धार्मिकी, राजनीतिकी, सामाजिकी च ।

३. बाल्यस्य परिचयः । विद्यार्थि-जीवनस्य वर्णनम् ।

४. गार्हस्थ्य-प्रवेशः, तद् वर्णनं च ।

५. जीवनस्य विशिष्टा घटनाः ।

६. विविधानि उपकार कार्याणि ।

७ प्रतिष्ठा सम्मानं च ।

८ जीवितश्चेत् दीर्घायुष्याय शुभाशंसनम् ।

(आ) कल्पनापराणाम् ऐतिहासिकानां वा युद्धानां विवरणम् ।

(इ) दर्शनीयानां दुर्गमानां वा स्थलानां यात्राविवरणम् ।

(ई) कल्पनामूला कस्यचित् पशो पदार्थस्य वा आत्मकथा-
यथा धेनोरात्मकथा, रूप्यकस्यात्मकथा ।

(उ) ऐतिहासिकानां घटनानां विवरणम् ।

## (घ) व्याख्यात्मकाः

व्याख्यात्मकेषु प्रबन्धेषु कस्याश्चित् सूक्तेः कस्यचित् सिद्धान्तस्य वा व्याख्या क्रियते—यथा 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन', सहसा विदधीत न क्रियामविवेकः परमापदां पदम्' ।

एते प्रबन्धा अपि बुद्धिपरा भवन्ति । कैश्चित् तु प्रबन्धा एते विचारात्मकानामेवान्तर्गता मन्यन्ते ।

## ३. प्रबन्धरचनाया उपकरणानि

प्रबन्धरचनायां विषयस्यापेक्षया लेखकस्य व्यक्तित्वं विशेषं महत्त्वम् आवहति । प्रस्तावे खलु शोभनो विचारः प्रसादमय्या सरलया भाषया रुचिरया च शैल्या प्रस्तोतव्यो भवति । विचारः

खलु प्रबन्धस्यात्मा, भाषा-शैल्यौ च तस्य शरीरम्। यदि शोभना अपि विचारा. सदोपया भाषया ऽरुचिरया वा शैल्या प्रस्तूयन्ते तर्हि ते नाकर्षन्ति पाठकानां श्रोतॄणां वा चेतांसि यथा विकृत-शरीराः पुरुपाः कुरूपाश्च नार्यो दर्शकानाम्। किञ्चित् कालानन्तरं ते मरुभूम्यां प्रक्षिप्तानि बीजानि वत् स्वयमेव विलयं यान्ति। यदि भाषा सरला सुन्दरा भवेत्, शैली च रुचिरा स्यात्, परं विचारा उदात्ता न स्युः, तर्हि सुभूषितं स्वलंकृत मृतशरीरं वत् तत्सर्वं व्यर्थ-मेव। अतः प्रबन्धस्य इमानि त्रीणि अपि उपकरणानि आवश्य-कानि सन्ति :—

१. शोभनो विचारः। २ प्रसादमयी भाषा। ३ रुचिरा शैली।

**विस्तृतम् अध्ययनम्**—आवश्यका यदि विचाराः प्रबन्ध-लेखने तर्हि ते कथम् अधिगन्तव्या इति पृच्छायाम् उच्यते—ननु विस्तृताध्ययनेन। द्विधा खलु तद् अध्ययनम् :—

(अ) साहित्यिकं। (आ) प्राकृतिकं।

द्व एव आवश्यके मिथ एकैकस्य पूरकत्वात्।

**(अ) साहित्यिकम् अध्ययनम्**—साहित्यं खलु मानवस्य परमं मित्रम्। तदस्मै विचारं ददाति, स्फूर्त्तिम् ओजोऽपि च। यदि लेखनं कठिनं तर्हि अध्ययनमपि सरलं नास्ति। विरला एव जानन्ति अध्ययनविधिम्। आंगलभाषाया लब्धप्रतिष्ठेन प्रबन्ध-कारेण 'बेकन' महोदयेन कथितं कस्मिंश्चित् स्थले, 'कानिचित् पुस्तकानि आस्वदनाय भवन्ति, कानिचित् च चर्वणाय'। अन्यत्र च 'अध्ययनेन वयं विचारान् अधिगच्छामः, संवादेन चातुर्य्यं,

लेखनेन च निश्चिततताम्' इति। किमपि पुस्तकम् उद्विग्नमनसा उदासीनेन वा नैव अध्येतव्यम्। समयनाश एव सः। एष खलु साधारण ऽध्ययनस्य सफलो विधि :—

१. 'देवो भूत्वा देवं यजेत्' इति वत् लेखको भूत्वा लेखकं पठेत्। लेखकस्य मानसिक्याम् अवस्थायां स्वात्मा प्रक्षेप्तव्यः, तत्कालीना परिस्थितयश्च सुष्ठु स्मर्तव्या अध्येतृभिः।

२. प्रभावोत्पादकानि स्थलानि पौन पुन्येन अध्येतव्यानि।

३. अधमसाहित्यं नैव अध्ययनीयम्। एतेन विचारा भाषाशैल्यौ अपि च विकृतिं यान्ति। सत्साहित्यमेव अध्येतव्यम्। यदि यूय तन्निर्णये ऽसमर्था स्थ, तर्हि अध्यापकप्रवरा वो मार्गं निर्देक्ष्यन्ति। सुरभारत्या कानिचित् पत्रपत्रिकाण्यपि विद्यन्ते, यथा काश्या. 'सस्कृत रत्नाकरम्' ( संस्कृत साहित्य सम्मेलनस्य पत्रिका ), अयोध्याया 'साकेत.', 'जयपुर' नगर्या. 'भारती', 'नागपुर' नगर्याः न्भवितव्यम्' इति। तानि खलु नियमेन पठितव्यानि।

४. उत्तमलेखकानां महापुरुषाणां च सूक्तय. सावधानं लिपिबद्धाः करणीया.। ताभिरलंकृतस्य प्रबन्धस्य महत्त्व वर्धते खलु।

(आ) प्राकृतिकम् अध्ययनम्—'किन्नाम प्राकृतिकम् अध्ययनम्' इति पिपृच्छायाम् उच्यते, 'ननु सहृदयेन प्रकृते सूक्ष्मं निरीक्षणम्'। पुस्तकपरो मा भू.। यदपि पुस्तकेषु अधीयते तत् सर्वं प्रकृतेः अध्ययनेन सन्तोलनीयम्। चक्षुषी उन्मील्य चलनाद् वयं प्रकृते र्बहुविचारान् प्राप्नुम। क्षणदायां छात्रेण केनचिद् भित्तौ कीटमेकं दृष्टम्। तत् तु विद्युत् प्रदीपस्य प्रभया भासते स्म। तदव-

लोक्य झटिति गदितं मेधाविना तेन, 'ज्ञातमधुना, कथं नु चन्द्रमाः प्रकाशते' इति। भारतीया तु संस्कृतिर्वन्या संस्कृतिरेव। अस्माकं ऋषिमुनितपस्विभिः सिद्धकविविचारकैः यदधिगतं तत् प्रकृतेः सहभावेन। प्रकृते र्निरीक्षणेन, विशेषतया तु विविक्ते, नवनवा विचारा उत्पद्यन्ते, कल्पना वर्धते, प्रतिभा संवर्धते, साहित्यिकं ज्ञानञ्च परिपुष्टं भवति। ईशा वास्यमिदं सर्वं, जडं वा चेतनं वा, परं श्रोतार एव तच्छृण्वन्ति, द्रष्टार एव च पश्यन्ति।

प्रकृतिजनन्या वरमप्राप्य न कोऽपि लेखको महान् भूतः, भवति, भविष्यति वा। कविकुलगुरु कालिदास, महाकविर्भारवि, भवभूतिः, भर्तृहरिश्च सर्वं एते प्रकृतेरुपासका बभूवः। न किमपि महाकाव्यं रचयितुं शक्यं विना नदीपर्वतसूर्योदय-चन्द्रोदय-जलक्रीडादि-प्राकृतिकदृश्याना रुचिरवर्णनात्। हिन्दीभाषायां कविशिरोमणि. तुलसीदासः, महाकविः सूरदासः, कबीर-रहीम-केशवादयश्च, आंगलभाषायां वर्डस्वर्थकीट्स-प्रभृतय, एवम् अन्यासु अपि भाषासु ये के च महान्तः कवयो जाता', तैः सर्वैः प्रकृतेः साहचर्य्यम् अनुभूतम्।

वर्णनात्मकेषु प्रबन्धेषु तु प्रकृतेः सूक्ष्मं वर्णनं विशिष्य आवश्यकम्। सफलाः प्रबन्धकारा भवितुम् इच्छन्ति यदि भवन्तः, तर्हि प्रकृतेः सूक्ष्मं निरीक्षणं नित्यं सावधानं कार्य्यम्।

**(ख) मननं सहानुभावश्च**—यथैकेनापि पुरुषेणाऽश्वो जलस्य निकटे नेतुं शक्यः परं विंशतिः पुरुषैरपि स वारि पाययितुं न शक्यः, तथाऽध्यापकेन छात्रोऽध्ययने प्रवर्तयितुं शक्यः परं स

यत्नशतैरपि तस्येच्छाविरुद्धं मननशील' कारयितुं न शक्यः । तथापि कर्तव्यपरायणोऽध्यापकः कांश्चिद् उपायान् कर्तुं शक्नोति यैः छात्रस्य रुचिर्भूत्वा जिज्ञासा जायेत । यथाहि यन् तेनाधीतं स्यात् तत् सम्बन्धि प्रश्नाः पृच्छ्यन्ताम् । लेखकानां मतभेदोऽपि दर्श्यताम् । समस्याया अपरः पक्षोऽपि विद्यार्थिनः सम्मुखे स्थापयितव्य' । छात्रैरिदं सुष्ठु बोधनीयं यत् सर्वं मुद्रितं सत्यं न भवति । अपरीक्ष्य परेषां मतग्रहणं तदनुकरणं वा दासमनोवृत्तेर्लक्षणम् । यदा भारतस्य शिक्षाप्रणाली मननपराऽऽसीन् तदास्यां भूम्यां वाल्मीकि-व्यास-कपिल-कणाद-जैमिनी-यास्क-गौतम-पाणिनि-पतञ्जलि-शंकरप्रभृतयः परमविचारका अजायन्त । तदनन्तरं मध्ययुगे एतादृशोऽपि काल आगच्छत् यदा देववाण्यां यत् किञ्चिदपि लिखितं तद् वेदवाक्यम् अमन्यत । तर्को विलयं गत., वाममार्गश्च सुष्ठु प्राचरत् । परिणामतो वयं परतन्त्रा जाताः । अधुना यद्यपि अस्माकं शरीरं स्वाधीनं भूतं, परं मनोबुद्धी तु पराधीन एव । अद्य यावत् वयं पराचीन विचारकान् सुष्ठु अवगन्तुमपि न शक्नुमः, अतिशयितुं तु कथं समर्था भवेम ।

साफल्यस्य तूपाय एषः—यत्किञ्चिदपि साहित्यावलोकनं कुर्याम, यत्किञ्चिदपि प्रकृतिनिरीक्षणं कुर्याम, तस्य सुष्ठु मननं कुर्याम । मननाद् एव मानवो यथार्थनामा भवति ।

## (ग) अभ्यासः

सफललेखकेनाभ्यासोऽपि अवश्यं कार्य्यः । अभ्यासेन जडोऽपि वैदुष्यं याति । उक्तमपि—

जलमभ्यासयोगेन शैलानां कुरुते क्षयम् ।
कर्कशाना मृदुस्पर्शो किमभ्यासान्न साध्यते ॥

न हि कोऽपि जलप्रवेशाद् बिना तरणं शिक्षते । लेखनाभ्यासाद् भाषाशैल्यौ निर्मीयेते । लेखनाशुद्धयोऽपि एतस्माद् आशु दूरीभवन्ति ।

## ४. प्रबन्धस्याङ्गानि

प्रबन्धस्य चत्वारि मुख्यानि अंगानि भवन्ति ।

(क) उपक्रम (ख शरीरम ग) दृष्टान्त' (घ) उपसंहार' ।

**(क) उपक्रमः**—उपक्रमस्तु प्रबन्धस्य भूमिकैव भवति । कैश्चिद् विद्वद्भिः स 'प्रतिज्ञा' इत्युच्यते, अन्यैस्तु 'अवतरणिका' इति । प्रबन्ध उपक्रमस्य तदेव स्थानं भवति यच्छरीरे शिरस' । महत्त्वपूर्णं खल्विदम अगम् । उपक्रमो लघुरेव शोभते । स प्रभावोत्पादको, रोचक, प्रासंगिकश्च स्यात् येन पाठकानां चेत आकृष्टं भवेत् । नास्ति तस्य कोऽपि निश्चितो विधि । प्रसंगानुसारं लेखकस्य वृत्तेरनुसारं च विविधास्तस्य प्रकारा', यथाहि केनापि कथया घटनाया उल्लेखेन वा, केनापि विषयसम्बन्धिसूक्त्या उद्धरणेन वा, केनापि सिद्धान्त-वर्णनेन, केनापि समस्याद्वारेण, केनापि परिभाषया, अन्येन केनापि च वस्तु-निर्देशेन प्रबन्धस्योपक्रमो विधीयते । अवधेयं खल्वेतद् यद् वर्णनात्मकेषु विवरणात्मकेषु च निबन्धेषु **क्रमस्य** पालनम् अनिवार्यं भवति । तथाहि भवनस्य वर्णने प्रथमं तस्य स्थितिः, ततो बाह्यरूपं, ततो द्वाराणि, तत

आन्तरिको भागो महत्त्वादि च वर्णनीयम्। चरितात्मकेषु प्रस्तावेषु घटनानां वर्णनेषु च तिथिक्रम पालनीयो भवति, तथाहि प्रथमं जन्म शैशवं च, ततो यौवन, ततो वार्धक्यं, ततो निर्वाणं दीर्घायुष्याय शुभाशंसनं वा।

सङ्क्षेपत' प्रतिज्ञायां प्रस्तूयमानस्य विषयस्य स्पष्टतया निर्देशो भवति, 'साध्यनिर्देश प्रतिज्ञा' इति लक्षणात्। अत्र हि विषयस्य स्वरूपं लक्षणं वा, विधेयस्य विधिः निन्द्यस्य निषेध', लेखकस्य विचार। धारणाश्चेति सम्पूर्णाऽपि रूपरेखा संक्षेपेण दर्शयितव्या भवति। अत्र यदि विस्तारः स्यात् मध्ये च संक्षेप स्यात्, तर्हि अयं बृहच्छिरस्तनुमध्यं विकृतशरीरमिव न कस्मैचिद् रोचयेत्।

(ख) शरीरम्—शरीर खलु प्रबन्धस्य मध्यं भवति। प्रमुखतमम् इदम् अंगम्। उपक्रमो यदि मुखद्वारं, तर्हि इद निवासस्थानम्, उपसंहारश्च तस्य पक्षद्वारम्। अत्र खलु पूर्वं निर्दिष्टस्य विषयस्य हेतुभिस्तर्कवितर्कैश्च अन्वयव्यतिरेकाभ्यां समर्थनं भवति, अत इदम् उपपत्तिरिति अभिधीयते। अत्र हि विषयस्य लाभा अलाभाश्च, विख्याततमानां विदुषां ( पौर्वात्यानां पाश्चात्यानां च ) मतं, तदुपयोगित्व, सामाजिक-राजनीतिक-वैज्ञानिक महत्त्वम्, इति सर्वम् उल्लेख्यं भवति। गौणानां वस्तूनां वर्णनं परिहार्य्यम्। यदि निबन्धनीयो विषयो वैज्ञानिक', ऐतिहासिकः, भौगोलिको वा स्यात्, तर्हि यथासंभवम् आकार-तिथि-नियमादीनां सूक्ष्माणां वस्तूनाम् उल्लेखो न कार्य्य', जनसाधारणाय स रुचिमावहेदिति।

(ग) दृष्टान्तः—एवम् उपक्रमे निर्दिष्टस्य मध्ये चोपपत्तिभिः

समर्थितस्य विषयस्य पुराभवेन आधुनिकेन वा केनापि इतिवृत्तेन यत् परिपोषणम् इष्यते स एव दृष्टान्त उच्यते। यथा प्रकाशेन पदार्थस्य तथा दृष्टान्तेन विषयस्य बोधः स्फुटतरो जायते। कुशलैर् लेखकैर एतस्य प्रयोगः प्राचुर्य्येण क्रियते। एवं प्रबन्धस्य प्रभावात्मकता वर्धते एव।

(घ) उपसंहारः—( परिणामः, अन्तः ) उपसंहारस्तु प्रबन्धस्यान्तिमो भागः। उपक्रमवद् एतेनापि सङ्क्षिप्तेन भाव्यम्। उपसंहारः स्वाभाविकः स्याद्, न तु प्रयासपूर्णः। विविधाः खलु तस्य प्रकाराः। क्वापि चरमं प्राप्य प्रबन्धस्तत्रैव समाप्यते। क्वापि मध्य आगतानां विचाराणां सारो दीयते। क्वापि पूर्वक्तस्य सकलस्यापि वर्णनस्य सिंहावलोकनं क्रियते। प्रबन्धस्य शीर्षकवाक्यं पदं वा केनापि हृदयहारिणा विधिना संस्मार्यताम् अत्र। अधोलिखितैः प्रकारैः प्रबन्धस्यान्तः परिहार्य्यः, यतो ह्येते लेखकस्य विचाराभावं द्योतयन्तोऽरुचिं जनयन्ति पाठकस्य परीक्षकस्य च।

(अ) खेदोऽस्मासु यत् समयः समाप्तः।

(आ) समयोऽधुना आगतो यद् वयं प्रबन्धस्योपसंहारं कुर्याम।

(इ) समय एव समाप्तः, अन्यथा मया बहु लेखितव्यं विवेचनीयं चासीत्।

(ई) अन्ते एतद् वक्तव्यं भवति।

(उ) परिणामे वयं कथयितुं शक्नुमः।

## ५. प्रबन्धानां गुणदोषविवेचनम्

गुणाः—

(क) ओजः—ओज' खलु गद्यस्य निकषं, विशेपतस्तु प्रबन्धस्य। शब्दार्थयो ग्रन्थनकौशलेन विचित्रं खलु प्रभावं जनयन्ति पाठकानां हृत्सु चतुरा प्रबन्धकारा। यथोक्तम्—

त एव पद्यविन्यासा ता एवार्थविभूतयः।
तथापि नव्य भवति काव्यं ग्रन्थनकौशलात्॥

अन्यत्र च,

यानेव शब्दान् वयमालपामो
यानेव चार्थान् वयमुल्लिखामः।
तैरेव विन्यासविशेपभव्यै.
संमोहयन्ते कवयो जगन्ति॥

(ख) प्रसादः (भाषा सौष्ठवम्, पांचालीप्राया च रीतिः)

सरल-सुन्दर-स्वाभाविकभाषया विचाराणां वर्णनम् अभिमततरं भवति सर्वेषाम्। भाषायाः क्लिष्टत्व कृत्रिमत्वं वा क्लेशं जनयति पाठकस्य। कृत्रिमताया निदर्श यथा—

न नो न नुन्नो नुन्नोनो नाना नाना नना ननु।
नुन्नोऽनुन्नो न नुन्नेनो नानेना नुन्ननुन्ननुत्॥ (भारवेः पद्यम्)

अद्यत्वे एतादृशी प्रयासपूर्णा शैली न रोचते पाठकेभ्यः परीक्षकेभ्यो वा। प्रसन्न संस्कृत एव स्व वक्तव्यस्याभिव्यक्तिः स्यात्। रामायण-महाभारत-पुराणानि पञ्चतन्त्र हितोपदेशादयश्च ग्रन्थाः

प्रसन्नसंस्कृत एव रचिताः सन्ति । अत्र खलु विख्याततमानां शब्दानां प्रयोगः, द्वित्राणाम् एव पदानां समासो वर्तते । याः खलु वैदर्भी गौड़ी पाञ्चाली रीतयः सन्ति वर्णनस्य, तत्र तु वैदर्भी रीतिर् अर्थालंकारप्रचुरा भवति, गौड़ी च शब्दालंकारप्रधाना, अत एव पांचाली रीतिरनुस्त्रियते कुशललेखकै शब्दार्थालंकाराणां साम्यात् । नदी प्रवाहवन् विचाराणां भवत. प्रवाह स्यान् , भाषा च पाठकस्य सुखबोधा स्यान् , एतदेवाभीष्ट भवत्यत्र । एतदवधेय,.यच्छब्दांरायोः आन्तरिक-सन्धि-करणमावश्यकं, परं शब्दयो बाह्य-सन्धि-करणं ल्पकम् । अतः बाह्य सन्धीनां समामानां च परिहरणाद् भाषा सरलयितुं शक्या । दण्डिन पदलालित्यमत्र अनुकरणीयम् ।

### (ग) भावगाम्भीर्यम्

भावाः खलु रचनाया आत्मा, भाषाशैल्यौ तु शरीरमात्रम् इत्युक्तचरम् । शरीरी शरीराद् अतिरिच्यत इति सम्मतं सर्वेषाम् । प्रबन्धे विचाराणां स्वोपज्ञताऽऽवश्यकी । भावगाम्भीर्य्य विशिष्टां रुचिम् आवहति पाठकस्य । नद्रहितः शुष्कः प्रस्तावस्तु मृतशरीरवत् कस्यापि प्रियं न भवति ।

**(घ) अनुपातः** —यथा चित्रकलायां तथा प्रबन्धेऽप्यस्य नानाभागेषु अनुपातः परमावश्यकः । यदि कस्यचिन्मनुष्यस्य चित्रे विशालं मस्तक तनु च मध्यं स्यात् तर्हि दर्शका एतच्चित्रम् अशोभनम् इति वदन्तोऽस्य निर्मातारम् एव निन्दिष्यन्ति एवं यदि कस्यचित् प्रबन्धस्य उपक्रमस्तु विस्तृतः स्यात् , मध्यं च लघु स्यात् तर्हि अनुपातहीना रचनैषा न सहृदयैः स्तुत्या भवेत् ।

परीक्षकास्तु एतादृशीं रचनां लघ्वीं मन्यन्ते । अंकदाने तु संकोचः स्वाभाविकः ।

आ—दोषाः

(क) व्याकरणप्रमादाः —

व्याकरणस्य प्रमादा' परिहर्तव्या' शिक्षार्थिभि सावधानतया । नैते शोभन्ते कस्यामपि रचनायां, यतो ह्येते लेखकस्याल्पज्ञत्वं द्योतयन्ति । लिङ्गस्य व्यवहार , विभक्तीनां प्रयोग, शब्दानां धातूनां च उच्चारण, उपसर्गाणा प्रत्ययानां च प्रयोग, कारकस्य च व्यवहार इति सर्व साधु स्यात् । शुद्धा भाषैव प्रिया भवति सर्वेषाम् । विरामादिचिह्नानामपि लेखे सावधानतया प्रयोग कर्तव्य' । विरामचिह्नानाम् अशुद्धप्रयोगेण अर्थस्य अनर्थो जायते । यथाहि कयापि गर्भिण्या 'पुत्रो भविष्यति पुत्री वा' इति पृष्टे दैवज्ञो ब्रवीति—पुत्रो न पुत्री । विराम-चिह्नाद् बिनाऽर्थो ऽस्पष्ट एवात्र । 'पुत्रो, न पुत्री' इत्यस्यार्थो 'पुत्रो भविष्यति, पुत्री न भविष्यति ।' 'पुत्रो न, पुत्री' इत्यस्य तात्पर्यं 'पुत्रो न भविष्यति, पुत्री भविष्यति ।' "पुत्रो न पुत्री" इत्यस्यार्थो "न पुत्रो भविष्यति, न पुत्री भविष्यति ।" विरामचिह्नानां प्रयोगोऽपि सुष्ठु बोद्धव्यः ।

तानि खल्विमानि—

| | |
|---|---|
| पूर्ण विराम चिह्नम् | । |
| अर्ध विराम चिह्नम् | ; |
| अवान्तर विराम चिह्नम् | , |

| | |
|---|---|
| प्रश्नचिह्नम् काकुचिह्नम् च | ? |
| सम्बोधन खेदाश्चर्यादि चिह्नम् | ! |
| निर्देश चिह्नम् | :— |
| प्रसग समाप्ति चिह्नम् | ॥ |
| पर्यायचिह्नम् संयोगचिह्नम् च | = |
| त्रुटि-पूर्ति चिह्नम् | ^ |
| समासे पदावगति चिह्नम् | — |
| मध्ये भावादि दर्शकं चिह्नम् | ( ) |

**(ख) समास भूयस्तवम्—**

प्रतीयते यद् 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति मन्यमानैर दण्डिसुबन्धुबाणादिभिर् विख्याततमैर् लेखकैः समासबहुला ग्रन्था रचिता' । अद्यत्वे खलु समासबहुला रचना न रोचते पाठकेभ्य , यतो ह्येषा प्रयासपूर्णा सती प्रसादगुणाद् व्यपेता भवति। प्रसादगुणस्तु आवश्यको भवति रचनायाम् इति उक्तचरम्, अतः समासभूयस्त्वं यथाशक्ति परिहर्तव्यम् ।

**(ग) अक्रमः—**प्रबन्धस्य विचारा यथाक्रमं स्युरित्यावश्यकम्। वर्णनात्मकेषु विवरणात्मकेषु च प्रस्तावेषु क्रमस्याभावो विशिष्य दुनोति हृदयानि पाठकानाम् । यथाहि यात्रावर्णने प्रथमं तत्स्थानस्य दर्शनीय-भवनानां वर्णनं पश्चाच्च प्रस्थानोद्योगस्य, कस्यचिन् चरितवर्णने प्रथमं यौवनस्य वर्णनं पश्चाच्च बाल्यस्य । एतद् दोषस्य निवारणाय प्रथमं प्रबन्धस्य रूपरेखा निर्मातव्या,

तदनन्तरं लेखनाय लेखनी उत्थातव्या। रूपरेखा-निर्माणस्य साधारणो विधिस्तु अधो लिख्यते—

(1) प्रथमं निर्दिष्टस्य विषयस्य मुख्यान् विचारान् अंकितान् कुरुत, तांश्च १, २, ३, ४, इत्यादि लिखत।

(ii) प्रतिविचारस्य अन्तर्गता या या वार्त्ताः स्युः, ताः (क), (ख), (ग) इति अंकितव्याः।

(iii) ततस्ते सर्वे यथाक्रमं कर्तव्याः।

(iv) विचाराणां तदन्तर्गतानां वार्त्तानां मिथो विरोधो मा भूत्' इति अवधेयम्।

**(घ) पुनरुक्तिः**—पुनरुक्तं नाम मुख्यया वृत्त्याऽसकृदुक्तं व्यर्थं वचः। लक्षणया पुनः पूर्वेण सदृशम् अनपेक्षितम् अर्थमात्रम् इति। "पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः" इति स्मर्तव्यं प्रबन्धकर्तृभिः। "व्यापारैः पुनरुक्तभूत-विषयैः" इति गदितं भर्तृहरिणा। विचाराणां वाक्यांशानां वाऽसकृद् वचनं विरसं भवति। एतेन व्यर्थं समययापनं भवति लेखकस्य पाठकस्य च। समयो हि नोऽमूल्यो निधिः। पुनरुक्त्या वाचोऽर्थस्य वाऽरुचिर्जायते परीक्षकस्य लेखे तस्मिन्। अतः शिक्षार्थिभिः पुनरुक्तिदोषः सर्वथा सावधानतया परिहर्तव्यः। वक्तृभिरपि स त्याज्य एव।

## ६. परीक्षासु छात्रैः किमवधेयम्?

**(क) प्रश्नपत्र-निर्वचनम्**—सर्वमपि प्रश्नपत्रं प्रथमं सावधानतया निर्वचनीयम्, तदनन्तरमेव लेखनी उत्थातव्या। केचिद्

अनुभव-हीनश्छात्राः प्रथमं प्रश्नमेव पठित्वा लेखनम् आरभन्त। नैतद् उचितम्। संभवति, उत्तर. प्रश्नो भवतां सुकरो भवेत्।

एतदपि अवधेयं यद् यथासंभव सर्वेषामपि अपेक्षित प्रश्नानाम् उत्तराणि दीयन्ताम्। नास्ति परीक्षकः शत्रुः परीक्षार्थिनां न्यूनांकदातुकामो वा। स तु स्वभावतया तेषां हितैषी भवति। यदि परीक्षार्थिन किमपि लिखेयु स सहृदयतयांकानि ददात्येव। यदा परीक्षार्थिन. किमपि न लिखन्ति तदा स शून्यं दातुं विवशो भवति।

(ख) चिन्तनम्—प्रश्नपत्रस्य सर्वथा निर्वचन कृत्वा सम्यक् चिन्तनीयस्तदुत्तरप्रकारविधि, कस्य प्रश्नस्योत्तरं प्रथमं देयं, कस्य तत, कस्य तदनन्तर च क्रमश इति। एवं प्रतिप्रश्नान्ते 'कः प्रश्नोऽधुना क्रियेत' इति समययापन न भवति। अन्यदपि, सुविज्ञातस्य प्रश्नस्योत्तरं प्रथम दातु शक्यते, परीक्षकस्तु स्वयोग्यतया प्रभावयितुं शक्यते। मेधाविनो विद्यार्थिन एतं विधिम् अनुसृत्य बहूनि अंकानि लभन्ते परीक्षासु। प्रबन्धलेखने निर्दिष्टस्य विषयस्य विचारा उपविचाराश्च सुष्ठु चिन्तनीया अंकितव्याश्चेति उक्तचरम् एव।

(ग) सुलेखः—यत् किञ्चिदपि लिख्येत, सुन्दरैरक्षरैर्लिख्येत, सुपठं भवेद् अक्ष्णोश्च प्रभावं जनयेद् इति। नातिविरलं, नाति संकीर्णं, नैकस्य शब्दस्य अक्षराणि द्वितीये मेलयित्वा। यो वर्णो लिख्येत स एव पठ्येत। त त, म भ, ध घ, र व ख, इत्यादि वर्णाः स वधानतया विस्पष्टं लिख्येरन्। लेखो मलिनो न कार्यः। यदि

कोऽपि शब्द. शोधनीय स्यात् तर्हि शब्द मध्ये रेखा द्वयेन = न तु गुणन × इति चिह्नेन। सुलेख. परीक्षकं प्रभावयति बहूनि अंकानि दापयति च परीक्षार्थिने।

(घ) **अन्ते**—केचित् परीक्षार्थिन उत्तरपत्रस्यान्त एतत्-समानानि वाक्यानि लिखन्ति—

(अ) अनुकम्पनीयोऽस्मि। आजीवनं भवतां ऋणं मस्ये।

(आ) नास्ति मे सुलेख। प्रार्थये क्षम्यताम् एष मे दोषो दयालुना भवता।

(इ) विनम्रं निवेद्यत एतद् यन् सफलताङ्कानि मह्यं ददातु भवान् अतिकृपालुतया, अन्यथा मे भविष्य नंक्ष्यति।

(ई) किं कुर्याम्, लेखनी दुष्टा शिरसि च मे महती वेदना वर्तते।

परीक्षार्थिनां विचारो भवति यद् एतादृशैर् दैन्यवचोभिस्तेषां लाभो भविष्यति परन्तु भ्रममात्रम् एतत्। परीक्षकस्यानुभव. तेभ्योऽतिरिच्यते अतो न स सहेलतया वंचयितुं शक्य। वाक्यैरेतादृशैर हानिरेव भवति, न तु लाभ कश्चित्।

(ङ) **आवृत्तिः**—परीक्षा भवनात् समयात् पूर्वं बहिर्नागन्तव्यम्। तत्रैव स्थितेन उत्तरपत्रस्यावृत्तिः करणीया। एव वहवः प्रमादाः शोधयितुं शक्यन्ते। लिखितस्य पुनरावृत्ति क्रियत एव सर्वैः कुशलैः प्रबन्धकारै। शोभन एष स्वभावः। बहिरागत्य तु वृथा समय-यापनम्। तत्र स्थितस्य किमपि नूतनं स्फुरेत्।

(च) विशेषः—

(अ) स्थानं पूरयितुम् अप्रासंगिकं मा लिखत। एतेन परीक्षकस्योपरि सुप्रभावो न जायते।

(आ) उत्तरपत्रस्य वामभागेऽङ्गुलीद्वयमितं स्थानं सर्वदा रिक्तं परित्यजत।

(इ) यदि उत्तरपत्रस्य द्वितीयपृष्ठे लेखनस्य संकेतो न भवेत् तर्हि एकस्मिन्नेव पृष्ठे लेखितव्यम्।

(ई) लेखे प्रसगसमाप्तौ प्रघट्टक. परिवर्त्यताम्।

(उ) लेखस्य सर्वा पक्तय समाना विरला ऋजवश्च स्यु।

(ऊ) प्रघट्टकस्य प्रथमां पंक्तिम् अंगुलीद्वयमितं स्थानं रिक्तं परित्यज्य लिखत।

## ७. अध्यापकानां विषये

(क) **प्रबन्ध-शिक्षा**—प्रबन्धकलायां चातुरी कथं प्राप्या विद्यार्थिभिरिति अत्र विद्यतेऽध्यापकानाम् अपि महत् कार्य्यम्। तैः खलु शिक्षार्थिभ्यो निर्दिष्टविषयस्य सामग्री देया। विचाराणाम् उपविचाराणाञ्च चर्चया तेषां उत्कण्ठा संवर्धनीया।

### (ख) पुस्तकालयानाम् आयोजनम्

न कोऽपि साहित्यिकाध्ययनाद् विना प्रबन्धकलायां सफलतां [illegible] शक्नोति। साहित्यिकाध्ययनाय पुस्तकालयानां वाचनालयानाञ्चायोजनम् आवश्यकमेव। पुस्तकालयेषु विचारकाणां महापुरुषाणां च सद्ग्रन्थाः संग्राह्याः। वाचनालयेषु सुन्दराणां पत्रि-

काणां प्रबन्धः कार्य्यः । एतत् सर्वम् अध्यापकानां साहाय्येन प्रेरणयैव च सुष्ठु भवितुं शक्नोति ।

## (ग) छात्राणां प्रोत्साहनम्

अध्ययनं सरलं, लेखनम् तु कठिनम् । सन्ति बहवो विद्यार्थिनो अध्ययन-कुशला लेखन-संकोचाः । आलस्यप्रमादत्यागपूर्वकः परिश्रम आवश्यको भवति लेखनाभ्यासाय । अतोऽध्यापकैर् नियमेन गृहकार्यं दत्त्वा छात्रा लेखने प्रवर्तयितव्याः, समये समये चांकदानैः पुरस्कारैः प्रमाणपत्रादिभिश्च प्रोत्साहनीयाः । अध्यापकाध्यापितानां पारस्परिक-सहयोगेन एषा प्रबन्धकला सुखेन प्राप्या भवति ।

---

# द्वितीयः प्रदीपः

## विचारात्मकाः प्रबन्धाः

अवतरणिका—

न पुराणैव कुतर्ककर्कशा न च मुग्धाभिनवैव चञ्चला ।
सरसा सुगुणा क्रमोज्ज्वला मितभूषा गुरुभावमञ्जुला ॥
ललिता कुलकामिनीव मे रचना बालविबोधशालिनी ।
अनुरञ्जयितु सुधीवरान् विशतां मानसवासवेश्मनि ॥

( युग्मकम् )

विचारात्मकेषु प्रबन्धेषु विषयस्य प्रतिपिपादयिषया समुपक्रान्तस्य सम्यक् प्रतिपादनमिष्यते । पद्यै· पद्यांशै र्व्यञ्चितो विषयः पूर्वं स्थिरी कार्य । प्रसिद्धोऽपि विषय पौन पुन्येन विचारणीय· । भावगाम्भीर्यमिह बह्वाद्रियते । मितै· पदैर्गुरुभावगर्भितैरुज्ज्वल प्रबन्धो भवेत् । क्वापि विस्तरोऽपि नानपेक्षितो युक्तीनां संगति द्रढयितु भाववैशद्यञ्च जनयितुम । कोमला कान्ता च पदावली नन्द्यते । क्रमः सर्वत्रानुचिन्तनीय । विषयोपसंहृतौ मितै पदै सर्वः प्रतिपादितो विषयः भूयोप्यासूत्रणीयस्तया यथा भंग्यन्तरेण स सर्वः प्रतिपादितं द्रढयेत्पुनरुक्तिञ्च न स्पृशेत् ।

एतच्च भूयोऽपि हृदि कार्यम्—विचारात्मकेषु प्रबन्धेषु पदार्थादिवर्णना मिता भवति । विषयस्त्र प्रमाणैर्युक्तिभिरुदाहरणैश्च प्रतिपादना प्रधानतया समाश्रयणीया ।

---

## "सतां हि सन्देह पदेषु वस्तुषु
## प्रमाण मन्तः करण प्रवृत्तयः"

**विमर्श सारः**—१ उपक्रमः २ सन्तः के ? सन्देह स्थानानि च कीदृशानि ! ३ सतां विशेषता । ४. प्रामाण्य स्वीकरणं सोपपत्तिकम् ।

इह मानवै प्रत्यक्षानुमानोपमान शाब्दै रिति चतुर्भि प्रमाणैः पदार्थ बोधो द्रव्यज्ञानं वा विधीयते । 'घटोऽयम्. अश्वोऽयम्, रामोऽसौ' इत्येप अविकल्प प्रत्यक्ष पदार्थबोध. । स चासौ घटाश्वरामाणां प्रत्यक्षवर्तिनां विषये नाणुना पि संशयलेशेनोपेतः ।

उपक्रम

किञ्च कदाचन लोचनगोचरी भूतानामपि पदार्थानां प्रत्यक्षादिभिः प्रमाणैर्न निर्बाधो निस्सन्देहकरो वा बोधो भवति । तथाहि यत्र कदाचिन्नयनविपयी भूतोऽपि पुरुषसादृश्यनावभासमानः स्थाणुः 'स्थाणुर्वा पुरुषो वा' इति सन्देहं जनयति, दृष्टुर्मनसि तत्रोत्तर कालमेव स्थाणु समाश्रित सन्निकृष्ट प्रदेशे गत्वा तत्र स्थाणौ दाहबुद्धिर्जायते पुरुपबुद्धिश्च निवर्तते । एवं सत्यपि प्रत्यक्षवर्तिद्रव्याणां क्वचन संशये सन्देहनिवारण समर्था सुलभा सामग्री सन्निहितैव भवति । परं यत्र कदाचित्केपुचिन्मानवादिषु प्रत्यक्षवर्तिष्वपि संस्तवविहीनेषु द्रष्टृणां जिज्ञासा भवति 'कि-देशीयोऽयं स्यात् ? किमभिजनो वा ?' इत्यादिस्वरूपा । तत्र मन्देह मपाकर्तु कि तावत्सप्रमाणं

साधनं स्यात् ? इति विचारणायां कविकुलललाटिकाकल्पस्य महाकवे. कालिदासस्य पद्यम्—

"सतां हि सन्देह पदेषु वस्तुषु
प्रमाण मन्तः करण प्रवृत्तय." इति।

अत्रोच्यते—चाक्षुषादिज्ञानसाधन भूतानि प्रत्यक्षादीनि प्रमाणानि। यथा प्रत्यक्षे तथानुमित्यादावपि कदाचन सन्देहा सम्भो भवन्ति तेषां तेषां पदार्थानां याथार्थ्यबुद्धौ।

सन्देहस्य स्वाभाविकानि स्थानानि

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्याह श्रुति। अत्रापि 'अस्ति परलोको न वा' इत्यादि सशयपतिताः केऽपि सन्दिहन्ते। दृश्यते तावत्—प्रातिदिवसेष्वस्माकं व्यवहारेष्वपि सन्देहपदाना मुद्भवो नाऽप्रायिकोऽस्वाभाविको वा। तथाहि—"अमुष्मिन् वत्सरेऽहं परीक्षामिमामुत्तरिष्यामि न वा ?, प्रवासप्रयातस्य मम प्रियवयस्यस्य किं स्विदितिवृत्तम् ?; गोधूमान् निवपतो मे कियान् लाभो भवेदस्मिन्नब्दे ?, गुर्विणीयं सुतं प्रसवेत्सुतां वा ?" इत्येवं विधा नाना रूपाः सन्देहाः प्रतिकालं लौकिकेष्वप्यस्माकं क्रियाकलापेषु सम्भवन्ति। कर्मपरायणस्य मनुजस्य कर्मणां फलानि प्रति विविधा शंका जायं जायमातंकयन्ति मानसम्। स्वभाव एवायम्। नरस्तु कदाचनात्र मूकी भावं भजते कदाचिच्च विमुग्धमिव स्वमनुभवति। जातुचित्स्वीयाः स्ववचन प्रतिवचनैरेव शंकाः समाधत्ते। कदाचन च पराननुयुङ्क्ते। परं न हि नाम सर्वदा सर्वेषु संशयस्थानेषु समेषां वचनानि प्रवृत्तयो वा प्रमाणत्वेन पर्यवसिता दृष्ट-

चरा । स्यान्नाम कदाचनैवं विधेषु स्थानेषु क्वापि कस्यचित् प्रवृत्ति: प्रमाणतां याता परं तद् घुणाक्षरन्यायेनैव ।

परं कृपाञ्जिन्निरस्ततमसां लोकोत्तर चरित शीलानां जनानां सन्देहस्थानेषु प्रवृत्तय स्वत एव प्रमाण भूताः । एते हि संशय-

के सन्त

ग्रस्तेषु विषयेषु यद् यत् कल्पयन्ति, तर्कयन्ति वा तत्तत् सततं सत्यमेव प्रमाणी भवति न तत्राणीयानपि व्यभिचारलेशो दृश्यते, ये ह्येव विधा नीरजस्तामसः पुरुषपुंगवास्त एव सन्तः । यथोक्तं भगवता—

'सद्भावे साधुभावे च सच्छब्दः यदि युज्येत ।
प्रशस्ते कर्मणि तथा सदित्येतत् प्रयुज्यते ॥'

एतेन सद्गुणवन्तः प्रशस्त कर्माण एव सन्त इत्युक्ताः ।

अत्रेदं विमर्श्यम्—मनोऽधीन ज्ञानम्, तस्य नैर्मल्यं च विशुद्धज्ञान जनने हेतुभूतम् । निर्मलान्तः करणवतामेव प्रवृत्तयः प्रामाण्यं लभन्ते । दृश्यते हि निर्मले खलु दर्पणतले बाह्यानां पदार्थानां पतितानि प्रतिबिम्बानि न जातु भिन्नानि भवन्ति स्वपदार्थेभ्य. । स्वच्छे स्फटिकादौ सन्निहितीकृतानां कुसुमादीनां रागादयः यथार्थस्वरूपा एव प्रतिफलन्ति परिचाययन्ति च पदार्थान् ऋते तद्दर्शनात् । एवं रागादिमालिन्यरहितानां सज्जनानां सत्पदाभिधेयानां सुविमलेष्वन्त करणेषु न जातु विरुद्धा मिथ्यारूपा वा विचाराः प्रादुर्भवन्ति । ते तु यच्चिन्तयन्ति यद् वा कथयन्ति न तत् त्रिष्वपि कालेषु व्यभिचरति । एवं विधानां सतां मनांसि रजोरहितानि ।

लोभमोहमदमत्सराद्यो दोषा न जातु तेषां मनांसि स्पृशन्ति। न च बलवत्तमा अपि विकारास्तान् सततं विषयचिन्तनलीनान् साधारणान् नरानिव कलुषयन्ति। हर्षोद्रेकोऽपि न मन आवर्जयति, न च शोको विकरोति। अर्थस्योष्मा नोष्णीकरोति न वा दारिद्र्यस्य जाड्यं जडीकरोति। ये किल मनसाप्यन्येषा महितं न चिन्तयन्ति, सदा ममेषां सुख दुःखं वा स्वात्मौपम्येनैव पश्यन्ति। कायिकान् मानसान् वाचिकान् च भावान् सदा शुद्धतमानेव भजन्ते। नासत्यं वदन्ति, न कस्मा अपि द्विषन्ति, न कमपि निन्दन्ति' न गर्हितं किमपि कर्म समाचरन्ति। न क्रौर्यं कुर्वन्ति, आहारे विहारे व्यवहारे च शुद्धिं भजन्ते, परेषामुपकरणे सदा समाहितमनस्का भवन्ति, आर्तानां दुःखोपतापैर्द्रवन्ति, लघीयस्यपि प्राणिनां पीडा येषां हृदयानि व्यथयति, ये सर्वेषु सदा दयालवो न कामपि हिंसां मनसाऽपि कुर्वन्ति। त एवंविधा लोकोत्तरगुणगणगर्भिताः पुरुषशिरोमणिभूता जना एव सन्तः, कमनीयानि तेषां चरितानि सदैवानुकरणार्हाणि, स्पृहणीयानि तेषां वचनानि, श्लाघनीयानि कर्माणि। सदा सर्वास्ववस्थासु निर्विकारास्ते समभ्यर्चिततमाः सन्त। शुद्धतमेषु तेषामन्तःकरणेषु ये केऽपि विचाराः प्रादुर्भवन्ति ते स्वत एव प्रामाण्यमर्हन्ति। यथा चक्षुष्मतां प्रकाशे घटादि पदार्थज्ञानं वस्तुरूपमेवाऽनवबाधं तथा करामलकवत्सर्वानेव भावान् प्रेक्षमाणानां तेषां हृदि या याः प्रवृत्तयो जायन्ते ताः सततं प्रामाण्यं भजन्ते।

वीतरागाणां काननौकसां मुनिदारिकाणां मध्ये कमनीयरूपां शकुन्तलां निर्वर्ण्य कण्वाश्रमे प्रयातस्य नृपतिवर दुष्यन्तस्य निर्मलतरेऽन्तः करणेऽविदि नामगोत्रायामपि तस्यां मन. सरागमभूत्, अतएव स ताम् 'असशय क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलापि मे मन ' इति क्षत्रियकन्यामेव निश्चिकाय सकारणम् ।

उदाहरणम्

अद्यत्वेऽपि राजनीतिगम्भीरान विषयानधिकृत्य विशुद्धमतय स्त्यागशीला अस्माकं केचन नेतारो यां कामपि किलोदर्ककाल विषये तर्कबुद्धि कुर्वन्ति सा सा सदा सत्यैव प्रमाणभूतेव च भवति । इत. सप्तवर्षात्प्राक् कश्मीर समस्यां राष्ट्रसंघसमक्षमुपस्थापयितुं सम्मन्त्रितो श्रीगांधिमहोदयो न वरमकलयन् त श्रम समाचचक्षे च 'राष्ट्रसंघ समक्षमुपस्थापिता कश्मीर समस्या विकटतरा भविष्यति, समययापनमेव केवलमिदं स्यात्' इति । वरं विचार्यतां तावत् श्रीगान्धिमहाभागस्योक्तिरेपा प्रत्यक्षर मत्या प्रमाणभूता चावर्तत ।

एवमेतादृशो भवन्ति सन्तो गम्भीरान् दुरूहान् संशयाकीर्णानपि सकलान् भावान् स्वकीयया शुद्धतमया मत्या करामलकवदिव निभालयन्त. । किमिवापोहितं तेपां पुर ? ते हि सदा सर्वानेव पदार्थान् प्रत्यक्षभूतानिवोत्पश्यन्त परं प्रमाणभूता. सर्वेष्वेव सन्देहवस्तुषु । अतः 'सतां हि सन्देहपदेषु वस्तुपु प्रमाणमन्त. करणप्रवृत्तयः' इति सम्यगेवोक्तम् ॥

उपसंहार.

---

# धर्मार्थ काम मोक्षाणां शरीरं साधनं यतः

विमर्शसारः—१ शरीरप्राधान्यम् २. चतुर्वर्ग संसिद्धिः ३. स्वस्थदेहेन सर्व साध्यम् ४. शरीरव्यवहारयो सम्बन्ध ।

उपक्रम.

शरीरमाश्रित्यैव लब्धजन्मनां मानवानां सर्वे क्रियाकलापा भवन्ति ।न हि देहभृतां देहमुपेक्ष्य कर्माणि संभवन्ति। दृष्टफलानां कृषिवाणिज्यादीनां कामार्थनिर्देश्यानामदृष्टफलानां यागादीनां धर्मव्यपदेशभाजां शाश्वत शान्तिमयस्य मोक्षस्य च साधने शरीरमेव तावदाधार-भूमिः । इदमेव हृदये कृत्वा केनाप्युक्तम्—

'धर्मार्थकाममोक्षाणां शरीरं साधनं यत.' इति ।

कि नाम शरीरम् ?

भूम्यादिपञ्चभूतोपादानं रसरक्तमांसमेदोऽस्थिमज्जा शुक्रेति सप्तधातूपचितं वातपित्तकफाख्य धात्वन्तर संभृत पिण्डं शरीरम्। एव पोष्यपोषक सम्बन्धिनां रसादीनां संयोगेन समुपचिते वातादि संभृते पिण्डे सत्त्वमात्मा प्राणाश्चेति त्रयोऽवक्रान्ता-श्चैतन्यं जनयन्ति । ततश्च तत्पुमर्थानां साधनं स क्षमते । कौमार-यौवनजराभिधासु तिसृष्ववस्थासु क्रमेण प्रविशच्छरीरमिदं वृन्ता-च्च्युतं पक्वफलमिव सत्त्वात्म प्राणै र्वियुज्यते निश्चेतनं निष्कर्म च भवति । अतएव शृणातीति शरीरमिति यथार्थैव पिण्डेस्मिन् शरीर संज्ञा । तदेतच्छरीरमेव मानवानां समस्तव्यापारकलापस्य साधने प्रधान वस्तु ।

सत्त्वमात्माप्राणाश्च पृथगवस्थिता न तावत्कर्माणि साधयितुं

पारयेयुः पिण्डमाश्रित्यैव ते प्राणिन' श्रेयोभिः संयोजयितुं
क्षमा'। सत्त्वादिपिण्ड मंयोग' कर्मा-
धर्मार्थकाममोक्षाणां नुष्ठाने सापेक्ष'। कर्मभूमिम वतीर्णः
सम्बन्ध' प्राणी न जातु विना कर्मणा तिष्ठति।
यदुक्तम् भगवता—'कार्यते ह्यवश' कर्म सर्वः
प्रकृतिजैर्गुणैः'। कर्माण्यपि भिन्नानि। तत्र यानि तावदभ्युदयकराणि
स्वर्गादिसाधनभूतानि यागादीनि तानि धर्मेऽन्तर्भूतानि। यानि किल
लौकिकव्यवहाररूपाणि धनादि समृद्धि कराणि तानि खल्वर्थव्यप-
देश्यानि। शरीरोपभोगमयानि रूपादि विषयसाधनभूतानि कर्माणि
कामसञ्ज्ञयाभिहितानि। सैषा त्रयी त्रिवर्ग नाम्नापि व्यपदिष्टा।
सकलनि श्रेयसकर शाश्वतशान्तिमय स्तुरीयो वर्गो मोक्षाख्यः।
धर्मादि चतुर्वर्गस्य साधने मानवानां समस्ता व्यस्ताश्च प्रयत्नाः
प्रचलन्ति। तथाहि केचन धर्ममेव सकलनिश्रेयसकरं मत्वा तमेवा-
हर्निशं भजन्ते। अपरेऽर्थस्यैवार्जनाय नक्तन्दिनं प्रयतन्तेतराम्। परे

'यावज्जीवं सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुत' ॥'

इति सिद्धान्त मवलम्ब्य नानाविधान् कामानेव सेवन्ते। तदुप-
युक्तानेव च कार्यकलापान् आचरन्ति। इतरे विरल विरलाः केऽपि
नरपुङ्गवा समवहेल्य काम्यानि कर्माणि सन्यस्य सर्वान् कामान्
मोक्षार्थमेव प्रयतन्ते। स एप सकल एव चतुर्वर्गसाधनपटु र्व्यापारः
सति शरीर एव संभवति।

यद्यपि सत्यमिदं यत् किमपि कर्म शरीरेणैव साध्यमस्ति। पर
न केवलं लोहकारभस्त्रेव श्वसन् देह
स्वस्थ शरीरगेव किञ्चित्कर । स्वस्थेन बलवता च देहेनैव
विभूतिः सकलं साधयितुं समर्था मानवा । उक्तं च
सम्यक् केनापि—

इति धनभोगशरीरान् मत्वा नित्यान सदैव यतनीयम ।
मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे ॥

आस्तां तावज्ज्ञानस्य मुक्ते र्वा कथा। भोग्यानां पदार्थानामुप-भोगोऽपि न तावत् रुग्णेन देहेन भवितुं शक्यते। इद तावदुच्यते धनेन सर्वं साध्यते। परं सत्यामपि धनादि विभूतौ शीर्णदेहा गद-ग्रस्ता नराः कथमुपभोक्तुं प्रभविष्णव कामान्। मन्दाग्निर्मानव आढ्यतमोऽपि किं सुस्वादून् गरिष्ठान पदार्थान् भोक्तुं शक्त ? मन्द दृष्टिर्मनोहरान् भावान द्रष्टुं बधिरो वा श्रुतिमधुर संगीतं श्रोतु किं पारयेत् ? दृश्यन्ते लोके गगनचुम्बिषु कमनीयेषु प्रासादेषु वसन्तो बाष्पशकटैरेव प्रक्रमन्त. कनक कोटिभिर्विहरन्तोऽपि केचन श्रीमन्त. शरीरस्वास्थ्याभावात् परमां दयनीयां दशां प्राप्ता । ते हि परेषां स्वस्थदेहेभ्योऽसूयन्ते, स्वीयां परमां सम्पत्तिमपि तृणाय मन्यमाना मनसैवाऽहर्निशं दूयन्तेतराम्। सत्यमेव शरीरस्वास्थ्य मानवानां परमा विभूतिः। न च स्वस्थदेहात् किमपि धनमतिरिच्यते। अत-एवोक्तं शरीर शास्त्रिभि·—

नगरी नगरस्येव रथस्येव रथी सदा।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत्।

एतदुच्यते चतुरशीतिलक्षं प्राणिजातीनां सृष्टौ। सर्वस्या एवास्या सृष्टेर्मानव एव शास्ता महान् सम्राट्। मानवदेहोऽपि न तावत् सुप्राप्यः। पिपीलिकातो गजं यावत् विविधासु योनिषु भ्राम भ्रामं भूयो भूयो जन्ममरणाख्येन बलवता चक्रेण निपीड्यमानो नरो महद्भिः पूर्वसञ्चितैः सुकृतैरेव मानवीं योनिं लभते। लब्ध्वा सुदुर्लभां नरयोनिं परम कर्तव्यमिदं यत् स पालयेदनुध्यायेच्च स्वदेहं परमं निधिमिव। तिर्यग्योनिषु परवशः प्राणी न किमप्यात्मकल्याणं कर्तुमीष्टे। योगेन ज्ञानेन भक्त्या वा भगवन्तमाराधयिषव शरीरमेव द्वारीकृत्य साक्षात्कुर्वते परमं तज्ज्योति। इह युक्तं प्रतिभाति पद्यमेकं भक्तवरस्य पाशुपतस्य श्री पुष्पदन्तस्य। तच्च—

"वपुष्प्रादुर्भावादनुमित मिदं जन्मनि पुरा,
पुरारे नैवाहं क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः सम्प्रत्यततुरहमग्रे प्यनतिभाक्
महेश क्षन्तव्यं तदिद मपराध द्वयमपि॥"

लब्धदेहेनैव तावत् समाराधितो महेशः। सकृत्प्रणत्यैव मुक्तोऽनतुः संवृत्तः। एवं पशुपतिभक्तिगौरवं वर्णयता कविना शरीर सत्त्व एव भक्तिमुक्ति श्चेदपि सुष्ठु ध्वनितम्।

एवमनुशुश्रुम.—चन्द्रवंशे भरत कुले ययातिर्नाम राजा बभूव। स च पलिक्नो[1] गलितेन्द्रियशक्तिरेकदा शुक्रकन्यां देवयानीं दृष्टवा

---

१ वृद्धः

तस्यां समनुरक्तोऽभूत्। देवयान्या

उदाहरणम् वार्धक्यतयाऽवमत स स्वसुतं पुरुं वार्धक्यं विनिमयेन यौवन ययाचे। स चानुमेने।

एवं चक्रवर्ती सन्नपि स नृपति शरीरशक्तिं महतानुनयेन लब्ध्वैव कामोपभोगानां तृष्णां शमयाञ्चकार।

तथ्यमिद—शरीर पालनस्य स्वास्थ्यरक्षाया श्च विषये यूरोपीया अमेरिकावास्तव्याश्च परमं निदर्शन मर्हन्ति। ते हि स्व स्वास्थ्य रक्षयन्त स्वशरीरस्य पोषणे सर्वदा समुद्यता भवन्ति। एतदेव कारणं यत् ते महान्त आविष्कारका प्रशस्ता लेखकाः कोट्यधीशाश्च भवन्ति सर्वामेव च वसुन्धरां शासितुं समर्थाः।

विज्ञानमयेऽस्मिन् नवयुगे भौतिकवादस्यैव प्राधान्य दरीदृश्यते। आधिभौतिकानामपि पदार्थानां साधनाय बलवान् देहो बलवती च देहशक्तिरपेक्ष्यतेतमाम्। तिष्ठतां तावद्धर्ममोक्षौ।

उपसंहारः भौतिकानामपि । पदार्थानां साधनाय प्रवृत्तो नरः स्वशरीरस्यारोग्य सम्यग नुचिन्तयेत् सतत परिचरेत् स्वीयं देहम्। बलवत्येव शरीरे बलवन्मन, स्वस्थ एव देहे स्वस्थं चित्तम्, स्वस्थमेव च चित्तं सर्व साधयितु शक्तम्। आध्यात्माधिदैविकयोः पुरुषार्थयो. साधनाय भौतिकानां च पदार्थानां प्राप्तौ नीरोगं शरीरं स्वस्थेन मनसा युक्तं नितान्तमेवावश्यकम्। अतो यत् 'धर्मार्थकाममोक्षाणां शरीरं साधनं परम्' इत्युक्तिः सर्वथा सान्वर्था।

**संकेतः**

"शरीरमाद्यं खलु धर्मसाधनम्" इत्यवलम्ब्याप्ययमेव प्रबन्धः।

# 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण'

**विमर्श सारः**—१ प्रकृति परिवर्तनम् २. सुख दु:खयो. सहेतुक परिवर्तक्रम ३. महता मविकृति: ।

परिवर्तन पटीयान् संसार: । नात्र किमपि स्थास्नु ! प्रातरुदय गिरि मारूढो गभस्तिमाली मायमस्ताचल मागत्यान्तर्धत्ते ।

उपक्रम

शुक्लप्रतिपदि तनुकल. सुधांशु माली क्रमेण वर्धमान पूर्णिमायां सम्पूर्णकल. स्वीयां शुभ्रतरां कौमुदी दिगन्तेषु विसारयन् कृष्णप्रतिपदि पुनः कलाह्रासोन्मुखो भवति । कुहू निशायां निष्कलोऽदर्शनश्च जायते । स एष निसर्गस्वभावो नाशवृद्ध्यात्मक. । नराणां विचारधाराभि: कर्मकलापै: साकमेवमेव सुख-दु:खेऽपि परिवर्तेते । अयमेव च प्रकृतो विषयः । अमुमेव भावं मनसि निधाय कविकुलमौलिमुकुटस्य श्रीकालिदासस्य कदेरुक्तिः

'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इति

एतच्च विस्तरेणानुव्याख्यास्याम:—नराणां दशा न सदैकरूपा. । संसृतिः ससरणमयी । सर्गो निसर्गतयैव परिवृत्तिशीलः । ईक्षामहे

न सदैकावस्थःसंसार.

वयम्—क्व निदाघे चण्डांशोः देह दाहकर स्तिग्मतम आतप: ? क्व च शिशिरस्य शरीरवेपथुप्रदं तुषार कणगर्भ समीरेरित शैत्यम् ? क्व च मलयपवनाप्लावितः कुसुमसौरभमयः पुष्पाकरस्य नवजीवनप्रद. कमनीयतम: काल ? यत्र कृतयुगे सत्यं

दयाऽहिंसा तपःप्रवणता त्यागोऽमात्सर्यमित्यादयो दिव्या गुणा मानवेष्ववर्तन्त भूलोकः स्वर्गादप्यत्यरिच्यत। तत्रैव कलियुगे 'ऽसत्यं क्रौर्यं लोभो मत्सरो दुर्भिक्षो जनपदोद्ध्वंसः' इत्यादयो दुर्गुणा उत्पाताश्च लब्धप्रसाराः। क्व तद्रामराज्यम्? क्व चेदानीन्तनो दारुणः समयः? अतर्कणीया किल कालकलना। नैकरूपाऽसौ कदापि तिष्ठति। सुखदुःखयोः परिवृत्तिर्न केवलं कालात्कालं नरान्नरं वा समाश्रयते देशाद्देशमपि समाजात्समाजमपि। तथाहि— पाश्चात्यप्रदेशेषु ये पूर्वं वनाद्वनं वम्भ्रम्यमाणा सभ्यतारहिता अवर्तन्त त एव साम्प्रतं समृद्धिमन्तो विद्वांसः प्रशस्ताः शास्तारश्च। एवं न दुःखमनैकान्तिकं न च सुखम्। पुनरपि निर्वर्ण्यताम्—य एष कुसुमसुकुमारः कोमलांगः कुमारः कौमारे वयसि क्रीडासंलग्नो मुग्धतमः। स एव सुदृढावयवः बृहत्कायस्तारुण्ये कथं दुःसाध्यान्यपि साधयति कार्याणि। दुर्लंघनीयान्यपि लंघते स्थलानि। निर्जनान्यपि सजनीकरोति। असावेव शनैः शनैरपचीयमानमूर्तिर्वली पलितविग्रहो जर्जरीभूतो महता कष्टेनेतस्ततः प्रक्रमितुं समर्थः कथं कथमपि समयं यापयते। प्रभाततारक इव चाञ्जसा काल-कुक्षौ निलीयते। एवं यत्र पूर्वं कलगम्भीराः सरितां धाराः प्रावहन् तत्रैव वालुकापूर्णानि मरुस्थलानि। यत्र निविडानि श्वापदकुल-संकुलानि काननानि तत्रैवाधुना महापण्यविस्तृतानि सकलविलासवन्ति रमणीयानि नगराणि चकासन्तेतराम्। एवं पश्यामस्तावत् समस्ता एव स्थास्नवश्चरिष्णवश्च भावा नैकावस्थाः। अयमेव सर्गस्य निसर्गगम्भीरो विलासः। यदि हि सर्वे भावा एकरूपावस्थायिनो

ऽभविष्यन् तदा जगति न किमिव वैशिष्ट्यमभविष्यत्। परिवर्तन शीलत्वमेवास्य तावद्रामणीयकत्वम्, अत एव कश्जिज्जगौ—

'क्षणे क्षणे यन्नवता मुपैति तदेव रूपं रमणीयता या ।' इति

अत्रेदं भूयोऽप्यन्वेयम्—निसर्गस्य भावा परिवर्तन्ते प्रतिक्षण-मित्यत्र यदृच्छा विधातुर्विलासो वा भाव-स्वभावो वा हेतुः स्यात् ?

**सुखदुःखयोः परिवृत्तौ बीजम्**

परं नराणां सुखदुःखयो. परिवृत्तिः कैमर्थिकी तावत् ? अत्र विचार्यते—मनुष्यस्य पूर्वं संचितानि शबलानीमानि कर्माण्येव भाग्येति व्यपदेशगतानि यानि चक्रवत्कालवशेन । बंभ्रम्यमाणानि कदाचन सुखमुपनयन्ति कदाचन च दु खम् । पूर्वजन्मसु नरस्य कर्मराशौ संभृतानि कर्माणि सुकृतमयान्यपि भवन्ति दुष्कृतमया-न्यपि । यथा केदारे प्रक्षिप्तं बीजं काले फलति । गोधूमो गोधूमं चणकश्चणकं राजिका[1] राजिकामेव जनयति न चेतरत्। तथा तस्मिन् तस्मिन् काले तानि तानि कृतानि कर्माणि शुभानि चाशुभानि फलानि परिणामयन्ति सुखव्यपदेश्यानि दुःखव्यपदेश्यानि च। बीजस्य केदार पतितस्य समनुकूलै र्जलादिभि पोषितस्य परिणामो यथा स्वभावतयैवावश्यम्भावी तथा कर्मणः परिपाकोऽपि । स एष कर्मपरिणाम एव सुखदु खयो र्महान् बलवत्तमश्च हेतु. । यदि नैवं स्यात् तर्हि कथं जनानां दशाः किलावितर्कितं परिवर्तेरन्। आलोकयामस्तावत् योद्य बृहद्यन्त्रपति कोटिकनकाधीशः, यो महाप्रासादेष्वेव वसति, दासैर्दासीभिश्च सेव्यते, पदमपि

---

१ आसुरी (राई)

पद्भ्यां न चरति विमानै र्वाष्पयानैरेव च उह्यते स एवान्येद्युः सहसैव विशीर्णव्यापार त्रुटितवाणिज्यो निष्किञ्चनो भवति कृच्छ्रेण च जीवति । अथापि कोऽप्यन्य· पर्याप्तं भोजनमपि लब्धुमसमर्थः, स्वकुटुम्बस्य क्षुधामपि निवारयितुं नालम्, निरुपानत्कोऽर्धसंवीत एव बम्भ्रमीति । जीर्णमृत्कुटीषु वसति, दारुणानि कष्टानि धनोपार्जनाय साहं साहं मनाचरणीयान्यपि कर्माणि कारं कारम् नाढ्यवराणां कक्षासु क्षुद्रदासोचितमपि पदं लभते । स एव स्वानुकूलेन भाग्येन मनागपि समनुगृहीत· कायाकल्पमिव भजते झटिति । निर्मिणोति खचुम्बिन प्रासादान्, प्रतिष्ठापयति वितता उद्योगशाला· । खोलयति[२] महासेवक गण परिवृतान् यन्त्रालयान्, स्तूयतेऽर्थिभि·, परिचर्यते परिचारकै·, प्रशंस्यते च श्रीमद्भि·, जङ्गम्यते यानै, मोमुद्यते विनोद पदार्थैः, न च केनाऽपि पूर्वसंस्तववता परिचीयते स एवायमिति । सैषाऽविचिन्तनीया सुखदुःखयोर्दशा ? अनिवार्या चैतयो· परिवृत्ति ? अलङ्घनीयश्चानयो परिपाकः ।

अथावश्यं परिवर्तनशीले सुखदुःखे । मार्गे प्रचलतश्चक्रस्य या एव नेमय उपर्यायान्ति ता एव झटिति नीचैर्यान्ति । इत्थमेव न कदाप्येकान्तेन सुखदुःखे ऽप्येकरूपतया

अविकारः

ऽवतिष्ठेते । एवं विद्वान् नरो न जातु संपत्सु प्रहृष्यति न च विपत्स्ववसीदति । गगनाङ्गन मध्यमाप्राप्तस्याम्बरमणे रवपातो निश्चितः । अस्तमितस्य चोदयो

---

२ खोल् गति प्रतिघाते ।

ऽपि प्रत्यूपसि निश्चितएव। नात्र किमप्याश्चर्यं दुःखं वा ? तथा चोक्तं केनापि कविना—

'पादन्यासं क्षितिधरगुरो मूर्ध्नि कृत्वा सुमेरो'
क्रान्तं येन भवनद्वितय मध्यमं धाम विष्णो'।
सोऽयं चन्द्र' पतति गगना दल्प शेषै र्मयूखै
रत्यारूढि र्भवति महतामाप्यपभ्रं शनिष्ठा ॥'

सत्यं न च कस्यापि नैरन्तर्येणोच्चतमे नीचतमे वा पदेऽवस्थिति र्दृष्टचरा। सुखदुःखयो. परिवृत्तौ न कोऽपि विकारश्चेतसि समाधेयः। उद्योगः समाश्रयणीय.। कालश्च प्रतीक्षणीय.। एतेनैव शान्ति रनेनैवो पायेन सुखमय. समय' मोदप्रदो दुःखमयश्च काल' सह्य सुयाप्यो भवेत्।

प्रकृतविषये भगवतो रामस्य, जगद्वन्दिताया जानक्या., महाराजस्य हरिश्चन्द्रस्य, वीर धौरेयाणां गुणवतां पाण्डु पुत्राणा ञ्च ते त इतिहासा प्रसिद्धतरा एव। अथा उदाहरणम् पीहैकं सत्यमाधुनिकं निदर्शन मुदाहरामः —एको बृहद्धन. कोऽपि वैदेशिको भारते विहर्तुं सकुटुम्बो मुम्बानगर्यां पोतादवातरत्। पोतावतरण समये तस्य जायायाः करशाखायाः पंचसहस्ररूप्यक मूल्यमङ्गुलीयकं समुद्रे पपात। सा च गौराङ्गी चिरं तदर्थ मनुतेपे। एकस्मिन्न सशुल्के महा पान्थावासेऽवस्थितः स गौरांगः परेद्य र्नगर दर्शन कौतुकेन ससुतदारो विजहार। स चैक बृहत्कायं मत्स्यम क्रैषीत्। स्वावास मागत्य यावत्तस्य भार्या तं मत्स्य खण्डयामास तावदेव

तस्य जठरात् सा स्वीयं प्रभ्रष्ट मंगुलीयकं लेभे न च तदा तस्याः स्तनौ हर्षोद्रेकं जग्मतु । गौरांगोहि 'सुखस्य पराकाष्ठेय मधुना दुःख मापतिष्यति नि सशयम्' इति विचिन्तयन् स्वदेशमेव प्रतिगन्तुं त्वरयामास । अमेरिकाया प्राप्तस्य तस्य कतिचिन्मासानन्तरमेव स्वीया सर्वा सम्पत्तिर्नष्टा हुताशेनोपप्लवेन च। स च क्षुत्क्षामो हृतसर्वस्वो दारिद्र्यं भेजे ।

महामहिमशालिनां मानवतराणां सुखमिति दु'खमिति च खेलैव । यथा रथस्थित उच्चावचासु भूमिषु जवेन प्रचलतो रथमुपर्यधो जङ्घम्यमानयो श्चक्रयोर्दशाया न मनागपि दत्तावधानो भवति केवल गन्तव्यप्रदेशं प्रतीक्षमाणो रथमेव निभृत. समाश्रयते तथैव परिवर्तमानयो' सुखदु खयोर्दशया न तावत् स्थिरमतयो बलवत्स्पृष्टा भवन्ति । दशाविपर्यासस्तावन्स्वाभाविक. । निश्चय एव च सुखस्यानन्तरं दु.खस्य दु.खस्यानन्तरं च सुखस्योद्गमः ।

उपसहार'

यत्र छाया तत्र क्षणानन्तर मातपोऽपि, यत्रातपस्तत्र छायाप्येवमेव सुतरां पततीति हि जन-भणितिः । सार्था चैषा । मानवानां जीवन सरणिरपि सुखदु'खाख्याभ्यां छायातपाभ्यां संवलिता । मतिमान हि मानवो महता रहसा चंक्रम्यमाणं सुखदुःखयोश्चक्रं शान्तमनसा पश्यन् 'पर्यन्तत. परम एव शिवः प्रमाणम्' इति स्मयमानाननः सदैव स्वान्तस्तोपाय कल्पते ।

**संकेतः**

अनयैव दिशा

(क) चक्रवत्परिवर्तन्ते सुखानि च दुःखानि च ।

(ख) सम्पत्तौ च विपत्तौ च महतामेकरूपता ।

(ग) कालक्रमेण जगतः परिवर्तमान चक्रार पंक्तिरिव गच्छति भाग्यपंक्तिः ।

इत्यादि पद्यभागानवलम्ब्य सुखदुःखयोः परिवर्तनमधिकृत्य प्रबन्धा विरचनीया ।

---

## जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

[विमर्शसार :—१. जननी-जन्मभूम्योर्महत्त्वम् २ चेतनाचेतनेषु मातृभूमेः स्नेहः ३ मातृतोऽपि जन्मभूमेर्गौरवम् ४. भारतीय आदर्श ।]

अहो ! कियन्मधुरमधुरं जननीति नाम ? समस्ता एव प्राणिनः प्रायः कष्टकाले मातुः स्मरन्ति जीवन्मातरो मृतमातरश्च । सर्वजनसवेदगोचरमेवैतत् यत् दुःखावसरे समेषां

जननी वात्सल्यम्

वदनात् 'हा ! मातः !' इति ध्वनिः स्वभावत एव निर्याति । मातुर्नाम्नि कियद्वैद्युतमिव बलम् ? कियन्माधुर्यम् ? कियच्च गौरवम् ? इति किलानुभवस्यैव विषयः सहृदयानाम् । का खलु स्तनन्धयस्यार्भकस्य क्षुधां निवारयितुं समर्था ऋते प्रस्नुतस्तन्या वात्सल्यपूर्णाया जनन्याः ? धूलिधूसरित-

भूमौ विलुठन् क्रीडनकपरानपि परिक्षिपन् रुदनपरवशो माणवको मातरं दृष्ट्वैव नन्दते क्रीडते च। कुसुमकोमलायां शय्यायां लालितो मधुरमधुरैरपि पदार्थैः पालितो रमणीयतमै क्रीडनकैरपि विनोदित शिशु स्वजननी विना रोदिति, दूयते म्लायते च। स हि मलिनाया जीर्णवस्त्रखण्डसंवीताया अपि मातुरुत्सगे गत स्वर्गादप्यधिकं सुखमनुभवति नि शंकं च स्वपिति। जनन्यपि स्व सुतस्य कृते यथा पर्याकुला यथा च प्रेमप्लुता भवति न तथा कोऽप्यन्य। तदेतन्मातृपुत्रयोर्वात्सल्यं सहज दिव्यमिव विभूतिप्रदम्।

मातृवत् मातृतोप्यधिक वा किमस्ति किञ्चिद् यद्वात्सल्य जनयति मातृवत् पालयति यस्या ऋण च मातृवद् दुष्परिहार्य मन्यन्ते जनाः? इति जिज्ञासायां ब्रूमः—एषाहि जन्ममेदिनी या

जन्मभूमेः स्नेह

मातेव रक्षति पोषयति वर्धयति च मानवम्। सचेतना जन्मदात्री माता गर्भे धृत्वा रक्षति, दुग्ध पाययति शैशवे स्निह्यति च स्वार्भकाय। परं जनिभूस्तावत् मातुरप्यधिक पर सहस्रैः प्रकारैर्भृशमुपकरोति। मातरि तावत्प्रत्युपचिकीर्षा भावो न जन्मभुवि, जनन्याः सक्रियं सप्रकाशं च प्रेम, जन्मभूमे मूकरूप मप्रकाशञ्च तत्। न तावन्नरं माता यावज्जीवं पोषयति पालयति परं जन्मभूमि र्यावज्जीव निरपेक्षं पोषयति पालयति च। जन्मभूमे स्तावत् सूक्ष्मेक्षिकया पर्यालोचनीया उपकृतय स्नेहगर्भाः। एषा हि धृतजन्मने देहिने चंक्रमणाय निवासाय च स्थानम्, भक्षणायान्नम्, पानाय जलम्, विहरणाय रमणीयान् प्रदेशान्, देहाच्छादनाय कार्पासोर्णा कौशेयमयानि विविधान्यम्बराणि

परिष्काराय मनोमोदाय च महर्घान मणीन् भ्राजमाणान् चामीकर रुक्ममयानलङ्कारान् च प्रयच्छति, अस्माक पादाहतोर्मलमूत्रोत्सर्ग-भारं च तितिक्षते। सैषा भगवती जन्मवसुन्धरा कथ न वन्द्या कथञ्चास्या आनृण्य भवितुं शक्यम्? भारतीयास्त्वस्माकं वृद्धाः प्रात शयनतलादुत्थायैव

"वसुन्धरे नमस्तुभ्यं भूनधात्रि नमोऽस्तु ते।
रत्नगर्भे नमस्तुभ्यं पादस्पश क्षमस्व मे॥"

इति जन्ममेदिनी गौरव स्मरन्त क्षमां याचन्ते ताम्। सर्वसहाया जनिज्याया गौरवं कै र्वचनै. स्तुम? कया च तूलिकया चित्रयामः?

क्षुद्रप्राणिषु जडेषु च जन्मभूमेः प्रेम

नेदमगोचर चेतोवताम्—कनकमयपिञ्जरे सादरं स्थितो दाडि-मीनां मधुराणि फलानि खादन्नपि कीरो न तथा सुखं विन्दते यथा जन्मपरिचितासु स्वैरचारासु कण्ठकाकीर्णासु वनभूमिषु। सम्राजां प्रासादेषु निवसमानः सेवकसमूहेन परिचर्यमाणोऽपि द्विपेन्द्रो न स्वानन्दं विन्दते तादृश यादृशं स्वजन्मभूतासु काननस्थलीषु। खगा अपि वियद्विहारिणो दिनं दिगन्तेषु समुड्डीय-माना नक्तं स्वावास प्रदेशस्थ स्वीयमेव तरुनीडं समाश्रयन्ते। सत्यमुक्तं केनापि—

'क्षीणोऽपि देहमिव कस्त्यजति स्वदेशम्' इति।

आस्तां तावत् द्विपदानां चतुष्पदानां वा कथा? जडास्तरुगुल्मा-दयोऽपि स्वजन्मभुवो वात्सल्येन पूर्णा.। तथाहि स्थानात्स्थानान्तर नीता वनस्पति र्म्लायते शुष्यति च प्रायः। किञ्च यदि तद्देशीयमृत्स्नया

सार्धं नीत्वा प्रतिरोप्येत तदा न शुष्यति प्रवर्धते च। यदि निष्क्रियेषु निश्चारेषु च तर्वादिषु स्वजन्मभूमेरियान् स्नेह का कथा सचेतनानां विज्ञानां मानवानाम् ?

पुरातनकालादेव भारतीयेषु जन्मभूमेर्वात्सल्यमवर्तत। साक्षात्कृतधर्माणो ऋषयोऽपि वैदिके युगे 'मही द्यौः पृथिवी च न इमं यज्ञ मिमक्षताम्' इत्यादि ऋग्भिः स्वजन्मभूमि यागेषु तुष्टुवुः। वेदेषु भारतस्य नदीनां गिरीणाञ्च स्तुतिपरा बह्व्य ऋचो वर्तन्ते।

भारतीयानां जन्मभूमिस्नेहः

अथ राजन्यदशमूर्धन्यस्य भारतरत्नस्य महाराजस्य प्रतापवीरस्य जन्मभूमि-स्नेहः कस्य न विदितः। स हि सर्वामपि सम्पदं तृणाय मन्यमान स्तृणापूपानेव च खादं खाद् प्राणपणेनापि स्वजन्मभूमे गौरव स्वातन्त्र्य चापीपलत्। अद्यत्वेऽपि त्यागशीलस्य नेतृवरस्य श्रीसुभाषस्य भारतशिरोमणे भारतीयगणराज्यस्य प्रधानसचिव धुरन्धरस्य श्रीपण्डितनेहरूमहोदयस्य च जन्मभूमेः स्नेह उदारश्च त्यागः किमविदितो जनानाम्? ये भारतीया नेतारः स्वाधीनतासंगरयागे स्वासून् सलीलं समाजुहुवुस्ते किं न विदितचरणाः? महनीयतमास्ते महामहिमशालिनो देशभक्ताः सततमेव सर्वैः।

पुरा भारते समावर्तन संस्कारकाले गुरव एव मुपादिशन् स्वान्ते वसतः —

उत्तमा देशभक्ति

सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव॥

एषा तावद्देशभक्तिर्बहुविधा। हृदि देशवात्सल्यमस्तीत्येव न पर्याप्तम्। किमनेन सेत्स्यति? य पुत्र प्राप्तवयस्क स्वमातरं पालयेत्समाद्रियेत तस्या' सर्वात्मना सुखाय चेष्टेत. तत्सेवा समुचितैं गुणै समन्वक्त प्रशस्तानि समुज्ज्वलानि च कर्माणि समनुतिष्ठेत् स एव पुत्ररत्नम्। इतरे च केवल मातुर्यौवनहारिण एव। निष्फलञ्च तेषां जन्म। इत्थमेव ये स्वजन्मभूमौ लब्धजन्मान योगं ब्रह्मचर्यं व्यायाम विद्याञ्च साकल्येनैकैकशो वा संसेवन्ते त एव प्रशस्ता देशभक्ता। देशान्तरेपूपिता अप्येते स्वजन्मभूमे हिताय प्राणपणै-रपि चेष्टन्ते। न च विस्मरन्ति जात्वपि निजां जन्मज्याम्।

आसीद् भारतीयानामयमादर्शो यत्ते स्वकीयां जन्मभुव बहुमन्य-माना अपि परेपां भूमे हितमपि कामयन्ते स्म न च मनसापि परेषां देशान् उन्मूलयितु प्रायतन्त। तथा चासीत्तेषां भणिति.।

'उदारचरितानां तु वसुधैव कुटुम्बकम्' इति।

ममैव भूमि सर्वगुणवती नापरेति प्रवचनमपि न देशभक्ति। तथा विधास्तु—

तातस्य कूपोऽयमिति ब्रुवाणा'
क्षारं जल कापुरुषा पिबन्ति॥

इति वद् हास्यास्पदा एवान्येषां भवन्ति। सुसुत' स्वप्रसवित्रीं समाद्रियते लालयते पालयते च परमन्येषामपि मातॄस्तथैवादरदृशा पश्यति। एव स्वजन्मभूमे. स्नेहः तस्यामादरदृष्टि स्वद्धितायचेष्टनं प्रशस्ततरं मन्यते यदाऽन्येषां विषयेऽपि हितचिन्तनं समादरश्च भवेत्। अयमुदाराचार एव भारतीयानां देशभक्ति विशेषा। इयमे-

तादृशी भक्तिरेवोत्तमा देशभक्तिरिति मन्तव्या ।

**मिथ्या देशभक्ताः**

अद्यत्वे तु देशभक्ते मिथ्यारूपमपि क्वचन दृश्यते । केचन स्वार्थ साधनपटीयांसो राज्यविभागेषु पदानां लाभाय देशभक्त्या अभिनयमिव रचयन्ति लब्धपदाश्च कतिपये योगक्षेमाय वेशभूषा-व्याख्यानलेखादिभिरपि स्वदेशभक्तिं परिचाययन्ति । किन्तु तेषामन्तरङ्ग व्यवहारा सर्वेऽपि परविषय रागं परेषां संस्कृति स्नेहं च पोषयन्ति । तेषां मनांसि परललनानां विलासै रिवान्यदेशानां चाक्य-चक्यगर्भैः पदार्थैरपकृष्यन्ते । नैते देशभक्ता अपि तु देशभक्ताभासा मिथ्या देशभक्ता इति यावत् । अमी नितान्तं भयावहाः समाजस्य देशस्य च । एतादृशा देशभक्ता एव देशानां पतनस्य गुप्तहेतवो भवन्ति ।

**उपसंहारः**

नात्रातिशयोक्ति र्ज्ञेया कापि यत् तथ्येन जनन्या जन्मभूमेश्च वात्सल्येन पूर्णो नरः स्वजन्मभुवं दूरङ्गतोऽपि कामयते । तत्रागमनाय पर्युत्सुकी भवति न च शर्म लभते । स्वर्गसहोदरोऽप्यन्यो विषयः किन्न स्यात् परं न तस्य मनो रमते स्वजन्मभुवं विहाय । का कथा स्वर्गस्य ? अदृष्टस्तावत् स ? कस्ततः प्रत्यागत्य तत्रत्यानि सुखानि प्रावोचत् ? प्रत्यक्षतोऽनेनैव भौतिकेन देहेनास्माभिरनुभूतसुखा कृतस्नेहा चासौ जन्ममेदिनी । वयमप्यत्र स्वगुणैः स्वर्गं रचयितुं समर्था इति ।

'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति चान्वर्थैव भणितिः ।

**संकेतः**

(क) अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम्।
रमते न मरालस्य मानसं मानसं विना ॥

(ख) जननी वात्सल्यम्

(ग) जन्मभूमिवात्सल्यम्

इत्येवं विधान् विषयानधिकृत्योपर्युल्लिखितरीत्यैव प्रबन्धो विरचनीयः ।

---

## मन एव मनुष्याणां कारणं बन्धमोक्षयोः

[विमर्शसारः—१ मनसः स्वरूपम् २ मनोविज्ञानम् ३ बन्धमोक्षयो र्विचार ४ एतयोः कारणत्वे मनस सोपपत्तिको विचारः ]

मनस परं न किमपि तरलतमं वस्तु संसारे। चञ्चलतममेतद् दुर्निग्राह्यम् । सदागतेरप्यतिशयवेगवत् । इतश्च पञ्चभूतात्मके

उपक्रम. शरीर पिण्डे मन एव समेषामेव पदार्थानां ज्ञाने विज्ञाने च करणम् । न चानेनान्तरा ज्ञानोत्पत्तिः संभवति । अत ऐहिकेष्वामुष्मिकेषु वा कर्मसु मन एव महद् द्वारम् । इति विमृश्यैवोक्तम्—'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति ।

अथैतद् विशकलय्य प्रपञ्चयिष्यामः । ननु सन्ति तावच्चक्षु-

रादीनि ज्ञानजनकानीन्द्रियाणि प्रत्यक्षाणि यानि सर्वेषां पदार्थानां ज्ञानोत्पादने करणभूतानि प्रतीयन्ते । यैर्विना न जातु लोके ज्ञानलेशोऽपि सम्भवेत् । तथाहि प्रत्यक्षमेवैतद् यद् रूपस्य चक्षुर्भ्यां शब्दस्य श्रवणाभ्यां ज्ञान भवति न च लोचनहीनोऽन्धोऽवलोकते, न च श्रुतिशक्तिहीनो बधिरो वा शृणोति । एवं रूपादीनां विषयाणां ग्रहणे चक्षुरादय एव करणभूता प्रत्यक्षाश्च कि मनस कल्पनेन ? इति चेदत्र ब्रूमः—रूपादीना विषयाणां ग्रहणे लोचनादीनि द्वारभूतानि नहि मनसा विना तानि तेषां विषयाणां ग्रहणे समर्थानि स्यु'। नो चेत्तर्हि युगपदेव रूपशब्दगन्धादीनां ज्ञानं भवेत्। चक्षुरादीनां रूपादि विषयग्रहण साधन भूतानां सत्त्वात् । न चैवं भवति । तेनैव प्रतीयतेऽस्ति चक्षुरादिव्यतिरिक्तं किमपि तावदान्तरं वस्तु यद्रूपादिबोधे करणम् । तच्च मन एव । अत एवोक्तम्—'युगपद् ज्ञानानुत्पत्ति र्मनसो लिङ्गम्' इति ।

किं मनः ?

अथ कि तावन्मनस. स्वरूपम ? इति मीमासायामुच्यते—मनो हि ज्ञानोत्पादक मान्तरं करणम् । मननान्मन इति व्युत्पत्ते' । तच्च तेषां तेषां विषयाणां ज्ञानकाले तेन तेनेन्द्रियेण संयुक्तं ज्ञान जनयति । चेतो बुद्धिरित्यपि मनस एव पर्यायौ । बहूनां मते शरीरे चैतन्यं मनस एव धर्म । शरीर शास्त्रिण स्त्वाधुनिका केचन प्राचीना अपि मस्तिष्कस्य ज्ञानतन्तूनेव मन इति निर्दिशन्ति । कतिपये तु विपश्चितो वेदनाशक्तिमेव मन इति समभिदधते । भवतु नेदं तावदत्र विस्तरेण प्रपञ्चनीयम् । एतद्धि मन. प्रयाणकालेऽपि

देहिना सहैवोत्क्रमते देहान्तरं च सक्रमते—यथोक्तं चरके—

'भूतैश्चतुर्भि· सहित सुसूक्ष्मैर्मनो जवो देहमुपैति देहात्' अतएव बलवन्त· सस्कारा अपि देहिन· देहान्तरे समुपतिष्ठन्ते । यतोहि ते मनसो धर्मा । जातिस्मरत्व मपि रागच्छते । 'एवं मन आन्तरं करण ज्ञानजनकं समस्त संस्कारकेन्द्रम्' इति नात्र कोऽपि विसंवाद ।

**को बन्ध· ? को मोक्ष· ?**

बन्धो नामाऽविद्या विजृम्भिताऽहन्तावलिनाऽपूर्णरूपा जीवत्व-बुद्धि विशिष्टाऽऽत्मन सकुचिताऽवस्था । अत्र हि जन्म मरण चक्रारूढो मनुज ससारस्य नाना विधै राधिभौतिकै राधिदैविकै सन्तापै स्तातप्यमानो न जातु शान्तिं लभते । स त्वविद्या प्रभावेण 'कि मे कल्याणकरम् ? कि वानन्त शान्तिप्रदम्' इति नावैति । जानन्नपि जातुचिदेव यतते शश्वतकल्याणाय । अत एव 'मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये' इति भगवताऽपि गीतासूक्तम । सैषा ऽज्ञानोत्थिता दुःखमयी जन्म मरण रूपावस्थैव बन्ध इत्युच्यते ।

बन्धाद् विपरीतो मोक्षोऽपुनर्भवाभिध । यदा संकोचमयीमपूर्णरूपामवस्था मुत्क्रम्य स्वात्मन्येव सर्वं व्याप्तं स्वात्मन एव चाशेषं विलसितं पश्यन् ज्ञानप्रकाशपुञ्जमय परमं तज्ज्योति साक्षात्करोति मनुजस्तदा मुक्त इत्युच्यते स चासौ तदा जन्मरणादिदुःखैर्विनिर्मुक्तः सच्चिदानन्दमय निलीयते तस्मिन्नेव परे ब्रह्मणि । यथोक्तम्—

'प्रसादे सर्वदु·खानां हानिरस्योपजायते' इति

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इति च ।

सैषा मोक्षरूपावस्था सुदुर्लभा । वीतरागाः संन्यस्तसकलकर्माणः प्रशान्तमनसो यतिवरा मुनय एव मनो निगृह्य प्रज्ञां स्थिरीकृत्य समाधिमाश्रित्य तदर्थं प्रयतन्ते । न च संसारचिन्तनलीना विषयोपभोगप्रवणाः कामनाग्रस्ता मनसो वशतामापन्नाः प्राकृताः पुमांसः ।

पूर्वमुक्तं मन एव सर्वसंस्कारकेन्द्रम् । अथ समस्तदुःखनिवृत्तिर्यदा मोक्षेणैव भवति तर्हि कथं मनस्तदर्थं मेवानुकूलासु क्रियासु न व्यापार्यते नरैरिति जिज्ञासायामुच्यते ।

दुर्निग्रहं मनः

मनस्तु चञ्चलतरमिति पूर्वमेवाभिहितम् । सांसारिका हि पदार्था आपाततो रुचिप्रदा मनो बलवदाकर्षयन्ति रश्मय इव सारथिनियन्त्रिताः प्रजविनं वाजिनम् । तत्र कामक्रोधौ रजोगुणसमुद्भवौ मानवानां परिपंथिनौ, तावेव चित्तं कलुषयन्ति न च शाश्वतशर्मप्रदं कर्मकलापमभिनयन्ति । "कथं मनो विषयासंगि सद्रजसाभिभूयते ?" इति भगवता षोडशकलाशालिना श्रीकृष्णेन गीतास्वर्जुनं प्रति सुष्ठु प्रतिपादितम् । तथाहि तत्र—

"ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ।"

विषयाणां तावदाकर्षणे वलं मनसश्च तारल्यमभिपश्यता पृथानन्दनेन सानुनयमनुयुक्तो भगवान् मनसो दुर्निग्रहत्वं सोरस्कारं स्वीकुर्वन् तन्नियमनाय

'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते'

इत्यभ्यासवैराग्ययोराश्रय मुपदिदेश।

अभ्यासश्चेह योगमार्गमवलम्ब्य परिशीलितः कायशोधनात्मक। कायशुद्धिर्मनःशुद्धौ बलवत्कारणम्। सा चाहार विहारादिशुद्धि मापेक्षा जपयोग समाधिप्रभृति विविधोपायै विधीयते। वैराग्यमपि विषयविरतिमय मशेषकामना परित्यागस्वरूपम्। एतदपि किलाभ्यासापेक्षम। तावेतौ वैराग्याभ्यासावेव मनसो निग्रहणे हेतू।

अत्र विषये पुरातनमेक मितिहासमुदाहराम। भरतो नाम कश्चिन्मुनिवर पुरा कृतयुगे परःसहस्राणि वर्षाणि दारुणं तपस्तेपे।

उदाहरणम्

स च तेन तपसा क्षपितसकलकल्मष भवाभोगेभ्यो महतीं विरतिमाप। काननाश्रमे तपस्तप्यमानस्य तस्यैकः कुरंगो वभूव। वीतरागस्यापि तस्य मुनेः कुरंगरागेण बलवन्मनोऽपाकृष्यत। स चोत्क्रमणकाले हरिणमेवानुचिन्तयामास। ततः स कुरंगयोनिमेव लेभे न च निर्वाणम्। अहो! मनसश्चंचलता दुर्निग्रहता च कियती बलवती?

यदि मनोऽधीनावेव बन्धमोक्षौ नाभविष्यताम् तर्हि सर्वे

मानवा. सुखेनैव स्वर्गादिलोकान कैवल्य वाऽलभिष्यन्त। पर न चैतद् भवति। अस्ति च मन' समेषां

उपसहार.

प्रायोविपयासगि । बध्नाति च तदेव मानवान् पौन पुन्येन च जन्ममरणकपाले भर्जयनि चणकानिव वराकान् नरान् विपयामक्तिज्वलनेन। एतदेव कृच्छ्रोपायैर्नियमयन्त कियन्तो महान्तः पुण्यवन्त शाश्वतीं शान्तिं भजन्तो मुच्यन्ते पुनर्भवान्। अत सत्यमेवोक्तं—

'मन एव मनुष्याणां कारणं वन्धमोक्षयो' इति।

---

## "साहित्य-संगीत कलानभिज्ञः
## साक्षात् पशुः पुच्छविषाण हीनः"

**विमर्श सारः**—१. जगद्वैचित्र्यम्। २ साहित्यसगीतकलानां रोचकत्वम्। ३. मनुष्यजीवनम् प्रशस्तम्। ४. साहित्यसंगीतकला-नामुत्कर्प.। ५. कालिदास कथा।

जगति नानाविधा' पदार्था सुन्दरा असुन्दराश्च। ये तु सौन्दर्य-समुज्ज्वला स्ते स्वभावतयैव कमनीया स्पृहणीयाश्च मानवानां भवन्ति। असुन्दरा अपि पदार्थाः केषा-

उपक्रमः

ञ्चिन्मनांसि मोदयन्ति। न हि तेपामनुप-योगित्वं सर्वथा सम्भवति। अस्त्येव किञ्चित्तेषां निर्मितावपि रहस्य विधातु'। सुन्दरासुन्दर पदार्थयोर्ज्ञान मितरेतरापेक्षम्। जगति कमनीया. पदार्था सर्वे प्रायः साहित्य

संगीतकलास्वन्तर्भवन्ति। एते हि मनुष्याणां परमप्रीतिपदीभूता रुचिकराश्च भवन्ति। तदेतेषां ज्ञाने पटु र्मानव एव मानवेत्यभिधा-मधिकर्तु मर्हति। नातथाविधः। इदमेव तावत्पर्यालोचयतो महाकवे र्भर्तृहरे पद्यमिदम्—

"साहित्य-संगीत-कलानभिज्ञः
साक्षात् पशुः पुच्छविषाण हीनः" इति।

अत्रेदं ब्रूमः—स्थावरजंगम रूपोऽयं लोको नानास्वरूप। प्रकृतिगर्भे वृद्धिमाप्ताः प्रकृत्यैव स्वलीलयोपलालिता समस्ता एव भावाः प्रतिक्षण परिवर्तमाना जनयन्त्येव

जगत पदार्थाना कमनीयता

कमप्यलौकिक भावं चेतोवनां चेतःसु। अय हि मनुष्याणां स्वभावो यत्ते सुन्दरेभ्यः पदार्थेभ्यः स्पृहयन्ति। सुन्दराणि हिमाच्छादितानि शैलशिखराणि दृष्ट्वा को न मोदते? समुच्छलन्तीना मापगानां कलकल, सौरभभरिताना कुसुमानां वर्णच्छटाः, मधुरध्वनिवतां सुन्दर पतत्रिणां श्रुतिमधुरा रवाः केषां न मनांस्यावर्जयन्ति? भीषणा अपि जन्तवस्तावज्जनयन्त्येव कमप्यानन्दं केषाञ्चिच्चेतस्सु। तथाहि मृगयारसिका वीरवराः सिंहनादं श्रुत्वा तन्निनादानुसृता लब्धसिद्धि मन्वाना नन्दन्त्येव। भीषणविषाणामाशीविषाणां कुण्डलिता काया हर्षयन्त्येव कांश्चिदाहितुण्डिकादीन्। एव तावदत्र जगति विचित्राः पदार्थाः, कमनीया अकमनीयाश्च। सर्वेऽप्येते भावा भगवत्याः प्रकृतिदेव्याः कमपि कुशलतमं लीलाविलासं द्योतयन्ति।

प्रकृतिपोषिताः पदार्थाः समस्ता व्यस्ताश्च मनुष्याणां मोदकराः।

किञ्चात्र जगति प्रकृतिपदार्थवत् कृत्रिमाणामपि पदार्थानां रामणीयकत्वं न केनाप्यपलपितुं शक्यते। कृत्रिमा

**कृत्रिमा पदार्थाः**

स्तावन्मनुष्य परिश्रमरचिता। एतेऽपि विविधरूपा रमणीया रमणीयतरा रमणीयतमाश्च। केऽप्यापातत कपाञ्चिदनान्दश अरमणीया अपि भासन्ते। मनोहरान् गगनचुम्बिन. प्रासादान् निर्वर्ण्य को न हृष्यति विस्मयते वा? रसगर्भाणि काव्यानि कर्णसुखदानि लयलीनानि संगीतानि च श्रुत्वा कस्य न सचेतसो मनसि जायते कोऽपि हर्षोद्रेक? चित्रकारस्य तूलिकया खचित सुन्दर चित्र विलोक्य को न नन्दति? रगभूमौ लास्यनिपुणानां नर्तकीनां नृत्यं पश्यन्त के नरा ना मन्द माह्लाद विन्दन्ते? एवं पश्यामस्तावत्—यत् किमपीह जगति कृत्रिममकृत्रिम वा भावजातं तदखिलं व्यस्तं समस्तं च मानवानां हिताय, सुखाय विनोदाय च कल्पतेतराम्।

अथ य एते प्रकृति सहचारिणो मनुज मति चातुर्य रचिता कृत्रिमा भावास्ते सर्वे साहित्ये संगीते कलायाञ्चान्तर्भवन्ति। तत्रैतेषा पृथग्विवेचनामधिकृत्य साहित्यस्य

**साहित्यस्य संगीतस्य कलायाश्च रूपम्**

स्वरूपं समासेन व्याख्यास्याम। सहितस्य भाव. साहित्यमिति। सहितत्व नाम हितेन सह वर्तत इति सहितम्, सहितं=संयुक्तं मिलितमिति च। इदञ्चोच्यते—

'चतुर्वर्ग फलप्राप्ति सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निगद्यते॥'

इत्यात्मस्मरणाच्चतुर्वर्ग फलोपलब्धि समनुकूलतया ऽत्र-हितकरत्व सिद्धम किञ्च। या परम्परया कोविदै कविवरैश्च स्वीया विचारधारा लिपि गोचरीकृता मानवानां सुखाय हिताय श्रेयसे च सा लिपिबद्धा ग्रन्थमहतिरेव साहित्यमिति निरुच्यते। इद-मेव चात्र सयुक्तत्व येन साहित्यमिति व्यपदिश्यते। किञ्चेदं साहित्यलक्षण समस्तमेव ताज्ज्ञातविज्ञानमयं ग्रन्थजात मन्तर्भाव-यदपि पकजादिवत् संस्कृतभाषायां, काव्यालकारादिषु कतिपयेष्वेव विषयेषु रूढम।

एव संगीतमपि श्रवण सुखद शब्द विशेष जनित मृदगा दिवाद्यविशेषचमत्कृतं मानवानां महते मोदाय भवति। पर' शता हि संगीत प्रकारा स्तद्भेदा उपभेदाश्च। साम्प्रत ध्वनिवाहकयन्त्रसाहा-य्येन दूरवर्तिनीनां गायिकाना मधुरमधुराणि संगीतानि सुखेनैव श्रूयन्ते। तानि हि केषां मनांसि न मादयन्ति? पाषाणशकल एव स यस्य हृदय संगीत स्वरैर्न द्रवेत्।

अथ कला नाम मानव मनीषोद्भवा जीवनांगभूतेव कल्याणकल्पने कुशला स्वान्त नितान्तशान्तिदा प्रकृष्टा चमत्कृतिविशेष.। एषाऽपि बहुविधा। प्राच्यास्तु कलायाश्चतुषष्टि रूपाण्यामनन्ति। सैषा बहुविधापि वास्तु चित्रनृत्यवाद्य भेदै' प्राधान्यमधितिष्ठति। अजन्ता-गुफानां शिला प्राचीरेषु समुत्कीर्णा विविधा मूर्तय., ताजप्रासादस्य मनोहारिण्यः स्फटिकभित्तयः केषां हृदि मोदं जनयन्त्योऽतीतं भार-तीय कला गौरव न प्रख्यापयन्ति? एवमिदानीमपि दिल्ल्यां बिरला-मन्दिरस्य रचना चातुर्य निभालयन् कस्तावत् सशिर. कम्पं भारतीय संस्कृतिगौरवं न प्रशंसते?

प्राच्यैस्तु काव्यमपि कलास्वेवान्तर्भावितम्। परमिह साहित्य-सगीतयो पृथक्निर्देशान् कलाशब्देन वास्तु चित्रनृत्यादय एव गृह्यन्ते।

इदञ्चोच्यते—आहारनिद्राभय मैथुनानि नराणां पशुभि सह समानानि। विज्ञानमेवैतद् यत् खलु मानवमितर प्राणिभ्योऽतिशा-

मनुष्य जीवनस्य वैशिष्ट्यम्

ययति। एतच्च ज्ञानं साहित्य सगीतकलात्मक मेव तावदपेक्ष्यते। यो रामायणं भारतञ्चा-धीत्य प्रथित यशसां पुण्यश्लोकानां हरिश्चन्द्र सगर राम ययाति पुरु पाण्डव यदुनन्दनादीनां स्वपूर्वजानां चरितानि नावैति, य· सकल सतीकुल-ललामभूतानां सीता ऽनसूया सावित्री सुलोचनादीना मंगना रत्नानां धवलतमा गाथा न स्मरति, य स्वकीयां साहित्यविभूतिमेव परम मक्षय निधि मन्वान उच्चै· शिरो न वहति, यस्य संगीतस्य मधुरतरै र्नादै हृत्तन्त्री र्न तावत्सोल्लासं दन्ध्वन्यते, लास्यकला कुशलानां नृत्यभृंगी यस्य चेतो नावर्जयति, कास्वरस्य प्रशस्तां वास्तुरचनां, चित्रनिर्मातु र्भावपूर्णानि चित्राणि पश्यतो यस्य रसना न प्रशंसा मुखरी भवति। स कि विज्ञानवान् मानवः ? न जातु। स तु जीवन्मुक्तो वा स्यात्पशुरेव वा स्यात्। एतानभिलक्ष्यैव पण्डित-वरस्य महाकवे र्जगन्नाथस्येय मुक्ति· सफलार्था—

'अधुन्वन् मूर्धानं नृपशुरथवायं पशुपति·'।

मनागवलोक्यतां तावत्—

'अथेदं रक्षोभि· कनकहरिण च्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।

जनस्थाने घोरे विकलकरणै रार्य चरणै—
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥'

इति पद्यं पठतो भगवतो रामस्य दण्डककानने सीता माहि-
ण्ड्यमानस्य तानि तानि विलपनानि ध्यायन कस्य नयने न प्रस्रवतः
पयःपूरम ? कस्य न हृदयं विदीर्यते ? सत्यम् रोदित्येव ग्रावा।
दलत्येव वज्रस्यापि हृदयम्। इदमेव तावन्नर जीवनस्य वैशिष्ट्यमयम।
नर-हृदयं हि कुसुमादपि सुकुमारतरं कुलिशादपि कठोरतर पर
संवेदनात्मकम्। साहित्यसगीनकलास्तु नराणां हृत्तले निलीयमानान्
सुप्तानिव च भावानुद्बोधयन्त्य कमप्यनिर्वाच्यमनन्द मानन्दसन्दो-
हमास्वादयन्त्य पुलकलया श्रिया मनोजयन्ति जनान। अत साहित्य-
सगीतकलानां ज्ञानं नितान्तमेवोपयोगि।

अत्र विषये महाकवे कालिदासस्य गाथा कर्णाकर्णिकया प्राप्ता
युक्ता प्रतिभाति समुद्धर्तुम्। सा चेत्थम्—

उदाहरणम् कस्यचन महीपतेरासीदेका लावण्यवती
परमविदुषी पुत्री विद्याभिधा। निगमागम

विशारदा शारदेवापरा सा 'यो मां शास्त्रार्थे पराजेष्यते स एव मां
वरिष्यति' इति समयञ्चकार। परं न कोऽपि पण्डितानां धुरी-
णोऽपि तां शास्त्रार्थेऽजयन्। अथ समत्सरै कैश्चित्पण्डितैरेकः सुन्दर-
दर्शनो देवानां प्रियः युवा कुतोऽप्यानीत। एनञ्च स्वगुरुत्वेन
मौनव्रतिनं प्रख्याप्य विदुष्या विद्यया सह शास्त्रचर्चा सङ्केतैरेव
विधातुं स्थिरी चक्रुरिति। भाववलेन घुणाक्षरन्यायेनैव वा संकेत-
विमुग्धा विद्या तं पण्डितवर मत्वा पतित्वेन वरयामास। परमन्ते

स्तोकैरेवाहोभिः साज्ञासीन्मूर्खोऽनधीतशास्त्रोऽसाविति। सा च परमनुतपन्ती तं पशुनिर्विशेपं मन्वानाऽर्धचन्द्रदानेन स्वप्रासादान्निष्कासयामास। अथ खिन्नचित्तोऽसावेव मूर्खो भगवत्या महाकाल्या प्रसादेन महाकविर्बभूव मनस्तामेव भारतभूमिं स्वकीयाभि शारदेन्दुसुधासाराभिरिव काव्यधाराभि प्लावयामास।

इय च श्रुतिपरम्परया प्राप्तापि कथा साहित्यसंगीतकलादिज्ञानेन विना मनुष्यस्य पशुनिर्विशेपत्वं तज्ज्ञानेन च सफलजीवनत्वमित्युभयमेव पक्षं व्यक्त पुष्णाति।

एवं प्रकृत विपय सञ्जिहीर्षवो वयं पुनरपि ब्रूम —साहित्यस्य

उपसंहार.

सगीतस्य कलानाञ्च समस्तं व्यस्तं च ज्ञानमावश्यकनम हिततमञ्च मानवानाम्। महीतलस्य या जातय पुरा साम्प्रतं वा सभ्यतमा अमन्यन्त मन्यन्ते च ता साहित्यसंगीतकलानां ज्ञानेन विज्ञानेनैव। साहित्यादय एव जातेर्देशस्य वा संस्कृतिमुत्कर्षयन्तोऽतीतेऽपि समये सन्निवेशयन्त्युदारान् गौरवगर्भान् भावान् मानवानां मन.सु। अत एतेपामज्ञाने करचरणादिमान् वाक्शक्तियुक्त सन्नपि नर पशुरेव प्राय. केवलं लांङ्गूलशृङ्गयोरेव साहित्यं भजते। स काष्ठपुत्तलिकायमान इव संवेद्य।

---

# तस्माच्छास्त्रं प्रमाणन्ते कार्याकार्यव्यवस्थितौ

विमर्शसारः—१ उपक्रम । २ मनुष्यापूर्णत्वम् । ३ शास्त्रविवेचनम् । ४. आप्तानां त्रिकालदर्शित्वम् ।

क्रियाशीलो नरो न जातु निष्कर्मा तिष्ठति । नरस्य सर्वा एव क्रिया स्वसुखायैव भवन्ति । क्रियाणाञ्च फलं कदाचित्सुखरूपेण कदाचिच्च दुःखरूपेणापि परिणमति । किं कर्म सुखपरिणामि किञ्च दुःखपरिणामीति स्तोकमापाततो जानन्नपि मनुजो मोहित एव सन्देहग्रस्त एव च भवति । अतो मतिमद्भिर्मानवैः कार्याकार्यविपायां कीदृशं कर्म कार्यं कीदृशं वा न कार्यमिति मीमांसायामर्जुनमभिलक्ष्य सकललोकानुजिघृक्षया भगवतः परमपुरुषस्य मधुनिषूदनस्य वाक्यम्—

उपक्रम.

"तस्माच्छास्त्रं प्रमाणन्ते कार्याकार्यव्यवस्थितौ" इति ।

अथैतद्विस्तार्य प्रख्यामः—शास्ते इति शास्त्रम्, अहितकर्मनिवारणपूर्वकं हिताचरणमुपदिशतीति यावत् । एतेन वेदोपनिषदादिनिगमानां स्मृतिपुराणादीनामागमानाञ्च सर्वेषां शास्त्रत्वं सिद्धम् । तत्र येषु मनुष्यसुखजनकानां लौकिकानामलौकिकानाञ्च कर्मणां साधनपद्धतय आचरणप्रकाराः परिणामाश्चैहिका आमुष्मिका वा विस्तार्य प्रपञ्चितास्तेषामिह शास्त्राणां सामीप्येन ग्रहणं भासते । एतानि च शास्त्राणि श्रुतिस्मृतिनीतिपुराणरूपाण्येवेहाभिप्रेतानि भगवतः ।

किं नाम शास्त्रम् ?

अथ कार्यस्याकार्यस्य वा कर्मणो व्यवस्थितौ शास्त्रस्यैव किमर्थं प्रामाण्यं स्वीकार्यमिति मीमांसायां समामनाम — शास्त्रकर्तारो हि

ऋषय । ते हि नीरजस्काः तप समाधि

कथ शास्त्रनेव प्रमाणम् प्रवणा क्षपितकल्मषा ब्रह्मवर्चस ।

परावरज्ञास्त्रिकालदर्शिनस्ते महात्मानो राग-द्वेषविहीना । लोकोपकारचिकीर्षयैव तेषां वचनानि जरीजृम्भन्ते । ते हि यत्किञ्चिच्चिन्तयन्ति, यदुपदिशन्ति यच्च वदन्ति तत्सर्वं सत्यं शिवं सुन्दरञ्च भवति । करामलकवत्सकलं लोकमालोकयन्ति ते त्रिकालज्ञा मुनय । ते च मन्त्रानपि स्वत प्रसादेन साक्षाच्चक्रु पुरा । व्यवस्थापयामासुश्च मानवमर्यादाम् । उपादिदिशुश्च कर्मा-कर्मणी, निर्दिदिशू राजधर्मान् प्रजाधर्मांश्च । आप्ता हि ते सत्य-व्रता । एते हि लोकव्यवस्थावरान सुखशान्तिसाधनभूतान् यान् ग्रथान् अरीरचन् त एव शास्त्रमिति व्यपदिश्यन्ते । मन्वादयो हि राजर्षयो वाचस्पत्युशनो-मुखा देवा द्वैपायन प्रभृतयश्च महामुनयो लोकानामुपकाराय पुरा युगेषु यां मर्यादां यांश्च धर्मान् व्यवस्थापयन् तेऽद्यापि तथैव सत्यमुद्घोषयन्त समनुष्ठिताः प्रयच्छन्त्येव किमपि शर्म लोकेभ्य । परावरज्ञैरेभिर्मुनिवरै रूपादिष्टे वाङ्मय एव शास्त्रसञ्ज्ञा । तच्च सर्वदा सर्वेभ्य एव प्रामाण्यमर्हति । न चात्राणीयानपि व्यभिचारलेशो दृश्यते त्रिष्वपि कालेषु ।

रागद्वेषादिभावैरबहिष्कृतो नर । स चाल्पज्ञान । न चास्य मति पर्यवतिष्ठति । स्वार्थसाधनव्यापृता तस्य मन्दा मति ।

प्रतर्कणीयानचिन्त्यपरिणामान् भावान-
अल्पज्ञो नरः विकृत्य स कुण्ठितबुद्धिरेव भवति। स तु
स्वीय देह-हितमपि न म्यगवैति।
कुतस्तर्हि विधेयानि कर्माणि जानीयात्? कुतस्तरां वा तेषा मुदर्क-
परिणामान्? पश्यामस्तावद्वयं प्रत्यहम्-मानवा केचन
क्षुद्राणामपि कार्याणां विषये मुग्धा इव स्वात्मनोऽनुभवन्त पराननु-
युञ्जते। तेषामुपदेष्टारश्चापि ते वराका मुग्धधियो स्वयमन्धतमसि
निलीना इव स्वीयमल्पज्ञत्व सम्भूयवन्त यत् किमपि निर्देक्ष्यन्ति
तज्जातुचिदेव हिताय कल्पते तेषामनुयोक्तॄणाम्।

दृष्टफलान्यदृष्टफलानि चेह बहुविधानि कर्माणि। तत्र लौकि-
कानि कृषिवाणिज्याध्ययनादीनि दृष्टफलान्येव। यागादीनि तावद-
दृष्टफलानि स्वर्गादिसाधनभूतानि। तेषां
कार्याकार्यविवेक फलोपलब्धौ सन्देह स्वाभाविक। स च
श्रुतिस्मृत्यादि शास्त्रवाक्यै निरस्यते।
आस्तिको हि जनः शास्त्रवचनेषु श्रद्दधान प्रवर्तत एवादृष्टफलानां
यागादीनामनुष्ठाने। किञ्च नास्तिकबुद्धिग्रस्ता नराः शास्त्रवचने-
ष्वविश्वसन्तो दुःखमेव लभन्ते। कुतः शान्तिं कुतस्तरां वा
निर्वाणम्? अतएव भगवतोक्तम्—

'नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुत सुखम्॥'

आस्तां तावदलौकिकानामदृष्टफलानां कर्मणां कथा। इह ताव-
ल्लौकिकेष्वपि कर्मसु विमुग्धा एव मानवा। मन्दज्ञाना असंयता

यच्छ्रेय. स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥'

इति भगवन्तमेव स्वकर्त्तव्यमार्गं पप्रच्छ। भगवानपि शास्त्राणि प्रमाणीकृत्य स्वकर्तव्यमुपदिशन कर्मणि व्यापारयामास। न चाहवे द्विषो हत्वा राज्यं लेभे।

भगवतो गोपीवल्लभस्य कौपीनसखा वीरश्रेष्ठः सव्यसाच्यपि कर्तव्याकर्तव्य मजानन मुमोह तर्हि का कथा मन्दमतीनां मानवानाम। अतो निःश्रेयसाभ्युदयसिद्धिमभिलषद्भिः सर्वदा सर्वकार्येषु शास्त्रमेव प्रमाणीकृत्य कार्याणि विधेयानि, तेनैव सुखमैहिकं, तेनैव च शाश्वतो शान्तिर्भवितुमर्हतीति सम्यगेवोक्तम्—

उपसंहारः

"तस्माच्छास्त्रं प्रमाणन्ते कार्याकार्यव्यवस्थितौ" इति।

---

## यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

**विमर्शसारः**—१. उपक्रमः। २. नारीणां महत्त्वम्। ३ नारी गौरवेण देशसंस्कृत्योर्गौरवम्। ४. भारतीयाणां नारी पूजा।

जगदिदं शिवशक्ति-स्वरूपमित्युच्यते। अस्मिन् हि निसर्गगम्भीरे सर्गे शक्तिरेव प्रधाना। न ह्यणुमात्रमपि किञ्चिदृते. शक्त्याः सिद्धयेत्। शक्तितत्त्वं नार्यां सन्निहितम्। सा च जनित्त्रीभूता। पुमान् हि नारी विना

उपक्रमः

विकलतोऽकिञ्चित्कर.। नारीणां समादरेणैव पुंसामुन्नति । यस्मिन् देशे यस्यां जातौ यस्मिश्च समाजे नारीणां गौरवं रक्ष्यते देवता इव च ताः समाद्रियन्ते तत्र सर्वा विभूतय समुल्लसन्ति। तत्रैव त्रिविष्टपविहारिणो देवा अपि रमन्ते । इदमेव तावदभिलक्ष्य भगवत स्वायम्भुवस्य मनोरदो वाक्यम्—

"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता" इति ।

अयमेवात्रास्माकं प्रकृतो विषय ।

नारी गौरवम्

हे देवि ! महिले ! कया किल रसनया तव गौरवगाथां गायाम ? शक्तिस्वरूपा त्व सर्वस्यास्य स्थावरस्य जंगमस्य च जगत आधारभूता। कीदृशं नाम स्याज्जगतस्तत्स्वरूपं यत्र त्व न स्या ? सनातनसाक्षिणी त्वं जगत । प्रजापतेर्निर्माण-कौशलं त्वय्येव प्रत्यक्षम्। त्वं हि कुसुमादपि सुकुमारा। [1]दम्भोलेरपि दारुणा। विचित्राणि तव चरितानि। अचिन्त्या तव शक्ति । युगानां निर्मात्री त्वमेव । अमेया त्वदीया माया, असह्यस्तावक प्रचण्डोऽमर्ष, अतुलनीयं त्वदीयं वात्सल्यम्, अप्रधृष्यस्तव वीरता-प्रभाव । त्वमेव जननीति वन्दनीया, जायेति जीवनसहचारिणीति च पालनीया ।

मर्त्यलोके तव प्रभावस्तु प्रत्यक्ष एव परं द्युलोकेऽपि त्वदीया शक्तिर्व्याप्ता । तथाहि भगवान् भूतपतिरपि नारी-शक्तिप्रधानां

---

१. वज्रात्

तुषार-गिरिनन्दिनी भजन जगतां वन्दनीयः । तथाहि तयाऽमंगलमपि तस्य मंगलमेव ।

चर्माम्बरञ्च शवभस्म विलेपनञ्च
भिक्षाटनञ्च नटनञ्च परेतभूमौ ।
वेताल संहति परिग्रहता च शम्भोः
शोभां बिभर्ति गिरिजे तव साहचर्यात् ॥'

इति भक्ता अपि स्तुति-मुखरास्त्वदीय गौरवं घोषयन्ति ।

न हि सहस्रफणा फूत्कार-भीषणस्य शेषस्य शय्यामधिशयानो भगवान पुरुषोत्तमोऽपि त्वच्छक्तिरूपया भगवत्या क्षीरार्णवनन्दिन्येन्दिरया सह वर्तमान एव विषवेगैर्न बाध्यत इति मन्यामहे ।

अहो ! कियन्नु तव माहात्म्यम ? विद्याधिदेवता शारदा त्वमेव, दानवदर्पदलिनी चण्डिका त्वमेव, निग्रहानुग्रहकारिणी विभूति-प्रदा रमाऽपि त्वमेव । किं किं वर्णयामस्तावकं गौरवम् ? जगद्वडवानलेन दन्दह्यमानाय मानवाय तव साहचर्यं पय पूरायते, त्वदीया च ललितललिता सम्प्रति व्यवहारान्धतमसि भ्रमते नराय दीपशिखायते, त्वदीया स्मितच्छटा च चिन्ताज्वालावलीढाय पुरुषाय नवनीतायते ।

प्रकृतेः परमाधारभूता भास्करादयोऽपि देवा नारीशक्तिसहचरिता एव जगत्पालनाय क्षमन्ते । तथाचोक्तं केनापि—

'त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं,
त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा,

निस्सारमेव निखिलं त्वदृते यदि स्यात् ॥' इति

न नाम्नाद्यावधि कोऽप्येतादृक् समजनि यस्त्वां विना सकलार्थ-साधनक्षमोऽभूत्। रहस्य त्वं वनिते! प्रहेलिका त्वमेका दुष्पूरा, शतशो वन्दनीय नव गौरवम्। श्रान्ता त्वम् वदान्ये!

प्राचीन भारते नारी पूजा

भारते पुरा नारीणां गरीयान् प्रभाकरोऽभून् न तदेदानीन्तन-वत्कालि[illegible]ति स्वपानो आसीत्। स्वयं प्रजा-प्रवर्तको मानवमर्यादानां व्यवस्थापयिता मनुरेव नारीणां मानम् विभूतिप्रदमुद्घोषयन् तत्र साक्षी। तथापि प्राक्तन ग्रन्थेभ्य प्रमाणानि चिचीषूणां नो नैतदतितिरोहितम्। वैदिके युग एव तावत्पश्यामो यत् लोपामुद्रादयः कतिचन ऋषिवनिता अपि मन्त्रान् ददृशु। सन्ति च शचीश्रीस्तुतिपरा ऋचो येन तावदेतद्वक्तुं शक्नुमो यन्नारीणां वैदिके युगे पुरुषसमकक्षमेव स्थानम् प्रशस्ततरमवर्तत। औपनिषदे युगेऽपि मैत्रीगार्गी प्रभृतीनां विदुषीणां श्रूयन्ते पुरुषैः सह शास्त्रचर्चा। तासां वैदुष्यन्तु स्पष्टमेतत् प्रकटयति नार्यस्तदानी सर्वेषु समाजेषु लब्धप्रतिष्ठा नितान्तम मन्यन्तेति। अथैवं रामायण-कालेऽपि पश्यामः कैकेय्याः प्रतियाचित पूरयितुमेव दशरथो नरपतिः स्वासून् समत्याक्षीत् रामञ्च प्राव्राजीत् रामोऽपि दण्डककानने छलेनापहृतां जनकतनयां प्रत्यानेतुं किं किन्नाकरोत्? तथाहि दुस्तरेऽर्णवे सेतुं बबन्ध। कपिभिः सह सख्यमायोज्य लङ्कामाचस्कन्द। राक्षसा-नामनेका अनेकिन्यो जघान। दशाननं हत्वा स्वप्रेयसीं विमोचया-

मास। एवं रामो हि भगवान् स्वप्रेयसीं जानकीमानीयैव प्रजानां रक्षणे निरतोऽभवत्। इति 'रामराज्यम' देवैरप्यभिनन्दितं स्वराज्यमपीपलन्।

अथ महाभारत-कालेऽपि महिला सादरमपूज्यन्त। भगवत-कृष्णस्य गोपिकाभि सह विहरणं केषां न विदितम्। स हि भगवान् प्रकामभाजां कथमनुनिनायेत्यपि तावत् नाविदितम्। अथ द्रुपदनन्दिन्या सभायां चीरहरणापमानेन मुखान्निर्गतानि विलपनानि यथा मध्येऽर्णवमश्रैर्दोल्यन्तं भगवन्त यदुनन्दनं तद्रक्षणाय नग्नचरणमेव धावयामासुस्तथा तान्येव तस्या क्रन्दनानि प्रचण्डपावकरूपेण सर्वमेव कुरुकुलं भस्मावशेषतामनयन्, इत्यहो कस्य वनितापमान श्रेयसे ?

दु शासनामर्ष रजोवकीर्णैरेभि सनाथैरिव भाग्यनाथै ।
केशैः कदर्थीकृत-वीर्यसार कच्चित् स एवासि धनञ्जयस्त्वम् ॥

इति द्वैतवने कृष्णया सावमर्ष मुपालब्धो गाण्डीवी पशुपति-माराराधयिषु स्तपस्तेपे। स हि स्वप्रेयस्या मानं रक्षितुं कुरुसेनां पशुमार महन् विपुलां श्रियमतुलाञ्च कीर्तिं लेभे।

भगवत शाक्यसिंहस्य निर्वाणानन्तरं यावत्कालं भारते नार्य-समाद्रियन्तापूज्यन्त च तावत्काल मासीत् परम वैभवम् समृद्धं च सौराज्यमत्र। तदनन्तरं नारीणामपमानेना ऽपूजया सार्धमेव भारते संख्यातीता विप्लवा, यातना, दैन्यं, दारिद्र्यं पराधीनत्व मिति कानि कानि दु खानि नाभूवन् ?

अथ सर्वेऽपि नारीणामुपयोगितां मन्यन्ते। को नामैवविधो

यो जनन्यै न स्निह्यति ? स्वजायां वा न कामयते ? एवं सति सदा सर्वत्रैव नारीपूजा भवत्येव तर्हि कथं न तत्र सर्वा विभूतयो विलसन्ति ? इति पिपृच्छिषायां ब्रूमः—जननीत्वेन जायात्वेन वा नारीणां मान एव न नारीपूजनत्वेनाभिप्रेतम्। न ह्येतावतैव सर्वं सेत्स्यति। गृहिणीनां सर्वरूपा समुन्नतिरेव नारीपूजेति ज्ञातव्या। सा चोन्नतिः कथं स्यात् ? इति विचार्यमेतत्—जगदध्वनि जीवनमिदं रथवदुच्चावचान् भूभागानुल्लंघयत् किमपि लक्ष्य-स्थानमभियाति। रथस्यास्य चक्रे एव प्रचलनाय बलवत्यपेक्ष्येते। के ते चक्रे ? पुरुषो नारी चेत्येव ब्रूमः। नैकेनैव चक्रेण रथः प्रचलेत् ? न चैकमनतिदृढमपि द्वितीयं दृढमिति रथस्य सम्यक् प्रचलनायालम्। उभययोरपि चक्रयोर्दृढिमा ससारता चापेक्ष्यते-तमाम्। एवमिदं पर्ययस्यति पुरुषवन्नार्योऽपि सारवत्यो गुणवत्यश्च भवेयुः। किञ्च पुरुषादपि नारीषु मातृ-गुणा अधिका मन्तव्याः। नारीणां शिक्षापि तावदभीप्सिता। शिक्षा च तादृशी स्यात् यया नार्यः सकलासु गृहकलासु कुशला व्यवहारविशारदा प्रशस्ता मातरः आदर्शभूताश्च गृहिण्यः स्युः। इयं तावदासां पूजा।

नारी पूजा कीदृशी

हन्त ! पुरुषाः प्रायो नारीतिनाम्नैव विमोहिता दृश्यन्ते। ते हि बहवः शृंगारविलासयोः प्रचलन्तीं पुत्तलिकामिव नारीं प्रेमक्रीडनक-कल्पामिव च मन्यमानाः कदाचन रक्ताः कदाचन च विरक्ता दृश्यन्ते। परं नैष दाम्पत्यस्नेहः। यावज्जीवनमेकपत्नीव्रतमनुपाल-यन्त प्राणेभ्योऽपि गरीयसीं जायां जानन्तस्ताञ्च स्वकुटुम्बस्याधि-

ष्ठातृदेवीमिव बहुमानयन्त पुमांस एव विभूतिभाजो भवन्ति नेतरे। एषैव नारीणां पूजा। अनयैव च समेधन्ते समृद्धयो गृहमेधिनाम्। बहुमुख्यपि नारी-पूजा समासेन 'नारीणां शिक्षणम्, बालवृद्धविवाहत्याग', एकपत्नीव्रत, नारीभ्य. स्वोचिताधिकारवितरणम्, समाजे गृहे च नारीणां सुबहुमान, सरलविवाहप्रथा, वनितानां स्वास्थ्यस्य रक्षा, इत्येवंरूपैव ज्ञातव्या। एवमीदृशी पूजैव विभूतिकरी सकलस्य समाजस्य देशस्य च भवति।

सुविशदोऽयं विषय। नात्राधुना किमप्युदाहरणीयमपेक्ष्यते।

उदाहरणम्

किञ्च 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायमाश्रित्याऽतीतं विहाय वर्तमानमेवालोकयाम। पाश्चात्येषु प्रदेशेषु या तावदभ्युदयात्मिका समुन्नतिर्दृश्यते तस्या कतिपयेषु हेतुषु नारीपूजैवेयं प्राधान्यमवगाहते। अत्र विषये मलिनपक्षमुपेक्ष्य शुभ्रपक्ष एव निभालनीय.। पाश्चात्या हि समाजे गृहेऽपि वनिता बहुमानयन्ति, तासां शिक्षायां स्वास्थ्यरक्षाया च समाहिता भवन्ति। शिक्षाप्रभावेण तु तत्रत्या नार्यः स्वयमेव स्वास्थ्यमनुपालयन्त्य पुरुषैः सह सर्वत्र समकक्षत्वं लभन्ते। इदमेव तावत्प्रधान कारणं यत्पाश्चात्याः साम्प्रतं समस्तायां वसुमत्यां नितान्त सुखिन' सन्ति।

उपसंहारः

एवं वनितानां गौरवं केषां न श्रेय' प्रदम्। के न नन्दन्ते नारी. सम्मानयन्तः? का नाम विभूतयस्तत्र-दुष्प्राप्या यत्र पूज्यन्ते देवता इव, पाल्यन्ते प्राणा इव, आद्रियन्त आचार्याण्य इव,

रक्ष्यन्ते परमानिधय इव, सेव्यन्ते स्वामिन्य इव, सम्मन्त्र्यन्तेऽमात्या इव, शिक्ष्यन्ते प्रियशिष्या इव, स्निह्यन्तेच स्वकाया इवेमा सर्वस्वभूता हितनिरता वनिता । अवदातोदारा च भगवतो मनोः—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफला क्रियाः ॥

इति वाक् सदानुकरणीयाऽनुपालनीया चेति के न निपुणमतयः स्वीकुर्वते ?

---

# सत्यं शिवं सुन्दरम्

**विमर्शसारः**—१. जगतो रमणीयता। २. सत्य शिव सुन्दर स्वरूपाणि। ३. कला समुल्लासः। ४. पदार्थ लालित्यम्। ५. जीवनोत्कर्षः।

इयं हि विश्वसृजः सृष्टिर्विविधरूपा। जडाजडा हि पदार्थाः अत्र। तेषां केचन तावन्तः सूक्ष्मोद्दिष्टा यथा ते न जात्वस्माक लोचनपथमप्यवतरन्ति। कतिपये च महिष्ठा स्तादृशा

उपक्रमः

यथा ते विस्माययन्तितमां नो मनांसि। परं सर्वस्यास्य जडाजडस्य पदार्थपुञ्जस्यान्तरित सन्निहितं किमपि रहस्यमयं निगूढं तत्त्वम्, येनैतत्प्रतिक्षणं परिणमदपि प्रतिक्षणं नवीनमिव भासते। नवीनमपि भासमानं चिरन्तनमेव विभाति। कुत्सिताकारमिव सुन्दरतममिव च प्रतीयते। निसर्गस्य

गम्भीरतम रहस्यमिदं मीमांसयितु मशेषैरेव विशेषशेमुषीशालिभि-र्दार्शनिकै: साहित्यसंगीत विशारदै रनन्ता: कल्पना: प्रतिपादिता स्तेषां सकला अपि मतिगर्भा विचारा: 'सत्यं शिवं सुन्दरम्' इति चिरन्तन हेतुमेवात्र समुद्घोषयन्ति ।

मायाजीविन: पेटिकायां मृत्काष्ठतन्तुमया भवन्ति विविधा: पदार्था: । स च निपद्यासु तानेव स्वमायापाटवेन चलदश्वपुत्तलिका सर्पादिस्वरूपैर्दर्शयन् मोहयति दर्शकान् । विज्ञा अपि

कि सत्यम ?

द्रष्टारस्तान कृतकान् मिथ्यारूपान् जानन्तोऽपि तदानीं सत्यस्वरूपानिव जानन्ति । एवमेव माया-मयोऽयं संसार इति शिष्टा आमनन्ति । तर्हि किं नामात्र सत्यम् ? इति बलवती मीमांसा । कथ जङ्गम्यमाना जन्तवोऽस्मदादयो गजादयो वाऽ सत्या: ? पर:शतक्रोशमितं भूभागमाक्रम्य स्थिता शैलश्रेण्यो मिथ्या-भूता: ? न चैतेषा मस्तित्वं जातुचिदेवापलपितुं शक्नुम: । एवं तर्हि ससारस्य मिथ्यात्वं समामनन्त: केचन दार्शनिका: किं भ्रान्ता ? नैवम् । एवं चेत्तर्हि 'सत्यम्' इति शब्द एव न क्वाप्यन्वर्थो भवेत् । सत्यं नाम सत:=विद्यमानताया अनपेतम् । सद्भावयुक्तमिति । सद्भावश्चासौ शाश्वतिक स्त्रिकाल वर्तितावच्छिन्न: । यत्खलु सदैक-रूप चिरन्तनं व्याप्तं प्रशस्तञ्च तत्सत्यम् । एवं तावदसावात्मैव सत्यस्वरूप: । अय हि सदैकरूपो विभुश्च । अविकृतो ऽप्यसौ विकृत इवव्याप्तोऽपिपरिच्छिन्न इव चाभासते । भास्करस्य प्रभा, चन्द्रमसश्च-न्द्रिका, सत्यरूपा । जले शैत्य पावके दाहकत्वं चिरन्तनादेव कालाद् वर्तते न चात्र विमति: कस्यापि । येषु पदार्थेषु ते ते गुणा श्चिररूढा:

प्रकृत्यैव प्रसिद्धास्ते समस्ता सत्यं पालयन्त. सत्य एवान्तर्भवन्ति। विनाशिनोऽपि ते पुन रवरूप प्राप्तास्तद्गुणा एव भवन्ति। तथा हि विपं मारयति सुधा जीवतत्येव। खड्गो हन्ति पाशो बध्नात्येव। कुसुमादीनां सौरभं नन्दयति मदिरा मादयति। न चैतेषामेते गुणा.—जातुचिदपि वैपरीत्यं भजन्ते। एतदेव सत्यम्। इदमेव सत्य मनस्याया सृष्टे' प्रथम सनातनञ्च रहस्यम्।

शिवपदस्तु शम्भोर्वाचक पुमान्। इह शिव = कल्याण मत्रास्यास्तीति 'अर्शादिभ्योऽच्' इत्यच् किं शिवम्? विधानात् शिव — सत्य,सुन्दर इति शिवपदस्य विशेष्यनिघ्नता। तेनेह सत्य-सुन्दरयोर्विशेषणता माप्त. शिवपदो नपुंसकलिंगे व्यवहृत'।

आत्यन्तिक-मङ्गलमूल मनुजश्रेय प्रद सत्येन संयुक्तं यत्तच्छिवम्। ये हि कमनीयतमा' पदार्था प्रकृतेरुत्कर्ष व्यञ्जयन्ति ते सर्वे शिवरूपा एव। यत' कल्याणकारिता तेषु विद्यते। भास्वतो दीप्ति, शशिनो ज्योत्स्ना, जातवेदस. शिखा, सदागतेर्गति शिवमया एव। दाहकस्यापि पावकस्योष्मा भृशमुपकरोति। चण्डमरीचे श्चण्डातपोऽपि नाशुभाय। यदुक्तम्

'वैकर्तनी किरण संहतिरेव शक्ता<br>
घर्म निज शमयितु निजयैव वृष्ट्या।'

यदि निदाघे भास्वान् नातपिष्यत्, प्रावृषि पर्जन्यो नावर्षिष्यत्, शिशिरे नापतिष्यत् तुषारो, ग्रीष्मे पानीयपूरितानां निर्झरिणीनां

धारा न प्रावहिष्यन्। भीमा अपि पदार्थाः सत्यस्वरूपतया शिवायैव भूतानाम् ।

एवं कल्याणकामनया मानवैः समुपक्रान्ता पदार्था अपि सत्यमाश्रित्य शिवकरा एव। तथाहि

'परोपकारः पुण्याय पापाय परपीडनम्' इति हि तथ्यम्। तथ्ये चास्मिन् कल्याणभाव सन्निहितः। एवमुपदेशप्रवणा भणितयस्तद्‌गर्भा ग्रन्थादयोऽपि शिवरूपाः। न च तेषु 'सत्यं शिवम्' इति व्याहन्यते केनापि।

चेतोहारिता नाम सुन्दरता। इय हि स्वभावतयैव मानवानां मनांस्यावर्जयन्ती कषायमन्दमानन्द-सन्दोहमिव जनयन्ती सुधा-रसमिवाप्लावयन्ती सर्वान् भावानतिशेते।

किं सुन्दरम्

मनुष्यस्तु प्रकृत्यैव सुन्दरतामुपास्ते। यत्र क्षणे क्षणे रामनीयकत्वं नवनवाभासस्वरूपञ्च तदेव सत्येन शिवेन च सहवर्तिना भावद्वयेन युक्तं प्रकृष्टं सौन्दर्यम्। स्थाने खलु कस्यापि पद्यम्—

'क्षणे क्षणे यन्नवतामुपैति तदेव रूप रमणीयतायाः' इति।

ये हि प्रकृतौ विविधाः पदार्थास्तेषु यत्र यत्र सत्यशिवोपेता सुन्दरता तत्र तत्रैव रामणीयकता सवेद्या।

शार्दूलस्य शबला देहयष्टिरक्ष्णोः कमनीयतयाऽभासमानापि भीषणत्वादशिवत्वाच्च न सुन्दरा ख्याता। फणिनः कुण्डलानां छटापि मनोहरा परमसुखकरत्वान्न तत्सौन्दर्यं चेतोहारि। अतो यदक्ष्णोः पुरः सुन्दरतयावभासते तदखिलमेव सुन्दर न गण्यते।

इह नर्तकीणां लास्यभङ्गिषु, विलासिनीनां स्मितच्छटासु, गायकानां गीतिध्वनिषु, सुमनसां वर्णेषु, काव्यानां रसमयेषु पद्येष्वस्त्येव कोऽप्यनिर्वाच्याह्लादको गुणविशेषो येन मानवस्तदर्थं सर्वात्मना प्रयतते। कष्टोपार्जित मर्थमपि तृणाय मनुते। नहि कोपि सुखप्रतिकूल किमपि साधयितुं चेष्टते। सुखार्था एव हि जनानां सर्वाः प्रवृत्तयो भवन्ति। यत्रैव सत्यस्वरूपा शिवा च भावना तत्रैव सुन्दरता। तत्रैव सत्य शिवं सुन्दरमिति व्यवस्थितम्।

सत्यं शिवं सुन्दरमिति सर्वासु किल कलास्वनुस्यूतमिव ज्ञेयम्। कलानामुदयोऽपि मनुष्याणां स्वान्त सन्तोषाय सुखायैव च समजनि।

**कलानां लालित्यम्**

लालित्यं हि कलानां नैसर्गिको गुणः। लालित्यापहृत एव नरः कलानां सृष्टिं करोति। 'कलायाः सृष्टिः कलायै भवति' इति साम्प्रत साहित्यविदुषां कथनं न वस्तुतः संगतम्। नहि कला कलायै रच्यते। जडो हि पदार्थो जडं कथमुपकुर्यात्? अयं हि मानवो यस्य कृते कला रच्यते यस्याह्लादाय च ताः पुष्यन्ते, यदि कला कलार्थमेव स्यात् तर्हि न जातु मनुष्यस्तल्लाभाय तत्परिवृद्ध्यर्थं वा चेष्टेत? अत एव काव्यप्रयोजनान्यभिरचता मम्मटाचार्येण 'प्रकाशे'—

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृत्तये कान्ता सम्मिततयोपदेशयुजे॥'

इत्यभाणि।

काव्यमपि कला। भवन्ति च काव्यानि सत्यस्य शिवस्य सुन्दरस्य

च भावजगतो बीजानि पोपकाणि च । प्रकृत्या सह मानवस्य सनातनः स्नेहः । काव्यानि च तमेत प्रकृतिपुरुषयो स्नेहसम्बन्ध-तन्तुं सन्तन्वते रक्षन्ति पोषयन्ति च । तथाहि

'विभाव्यते मान्द्रहिमार्द्रमूर्तिभिः प्रवर्तिताट्टालिकमुद्रमद्रिभिः ।
मणिव्रजैश्पर्यजितेन सूत्रितप्रदक्षिणः क्षीरसरस्वतेव यन् ॥'

इत्यत्र कविना हिमाच्छादित शैलशिखराणां सुषमया सह वर्तमानः सहजः स्नेह एव परिरक्षितः ।

एवं हर्षशोकादयो भावा अपि मानवानां काव्यकलया प्रोद्भासिता इव भवन्ति सञ्चारयन्ति च कमप्याह्लादकरं रसम् । तथा च—

"त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानन्ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे,
क्रूरस्तस्मिन्नपि न सहते संगमं नः कृतान्तः ॥

प्रियाविरहोऽपि भाग्यविपर्ययेणैव भवति । विरहिणां विनोद-मात्रमपि विधाता न सहते इत्यहो पराकाष्ठा दुःखस्य । अत्र कविर्यक्षस्य विरहविधुरस्य दशां वर्णयन् सकल विरहिभिरिव सौहार्दं दृढयति । अस्त्यत्र कोऽप्याह्लादोऽगोचरो वाचां प्रसरस्य । स एव सत्यशिवसुन्दरस्वरूपः । यानि हर्षशोकस्थानानि लोके तान्येव काव्ये समर्पितानि रसातिशयमुद्रेचयन्तः शिवायैव भवन्ति । अत एव प्रकाशकारेण कविभारतीं प्रणमता—

'नियतिकृत-नियम-रहितां ह्लादैकमयी मनन्यपरतन्त्राम्' इति भणितम् ।

इदमेव काव्यकलाया लालित्य यस्मा हर्षशोकादिभिः परस्परप्रतिकूलै र्भावै पूर्णाऽपि सुखमानन्दमेव च जनयति न जात्वसुखम । एतदेवास्या रामणीयकत्वम । अत एव चात्र स्त्य शिव सुन्दरमिति त्रयी समनुस्यूता ।

संगीतकलाऽपि शिवमयी कमनीया च । गायक कुलतिलकस्य तानसेनस्य संगीतरवैस्तु पर्जन्यमवर्षत, दीपा अपि स्वयमेव प्राज्वलन पाषाणा अपि नीरधारा असिस्रु वुरिति श्रूयते । अत्र न किमपि चित्रम् ? सत्यस्य शिवस्य सुन्दरस्य च नादस्य प्रभावेण सर्वानुस्यूतां तामात्मन सच्चिदानन्दमयीं कलामेव तैस्तै. स्वरूपै राविर्भावयामासुस्ते कुशला । सगीतनादोऽपि संस्कार सन्तानतन्तु परिपोषयन् स्पन्दते मानवं निसर्गेण । अतएव

> 'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान ,
> पर्युत्सुकी भवति यत्सुखितोऽपि जन्तुः ।
> तच्चेतसा स्मरति नूनमबोध पूर्वं,
> भावस्थिराणि जननान्तर सौहृदानि ॥ इत्येतेन

महाकविना कालिदासेन संगीते प्राक्तननिलीन संस्काराणामुद्बोधनशक्तिर्ध्वनिता ।

एवं चित्रकलायां वास्तुकलायामपि प्रकृतिपुरुषयो स्नेह उपचीयते । चित्रगतान् रमणीयान पदार्थान्, निपुणतरै कारुवरैर्निर्मितान् कमनीयान् प्रासादांश्च वीक्ष्य को न हृष्यति सुखं च विन्दते ?

इमा अपि कला लोकानां कल्याणाय स्वान्त सुखाय च लब्ध प्रतिष्ठा सत्य-शिव-सुन्दर भावैरविरहिता ।

प्रकृत संचिन्तिपिपवो भूयोऽपि समामनामस्तावत्-

उपसंहारः प्रकृतिगर्भे वृद्धि प्राप्ता मानवानां मतिचातुर्येण स्वानन्दाय समुल्लासिता भावाः शाश्वतेन सत्येनोपोद्बलिताः परमसुखमयेन शिव भावेन सदानुगता. सुन्दरतायां पर्यवस्यन्ति । यदेव सुन्दरम् तदेव शिवं यदेव शिवं तदेव सत्यम । यदेव सत्यं तदेव सुन्दरम् । इति सन्ति सत्यशिव सुन्दर-भावाः परस्परं नितान्त सापेक्षाः । इत्यत्र निपुणमतिभिर्गूढ समवधेयम् । अन्ते च

'निरुपादान सम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कला-श्लाघ्याय शूलिने ॥

इति सत्यं शिवं सुन्दरमेव वरिष्ठं कलाकारं मन्यामहे तमेव च प्रणमामः ।



# दैवोद्योगयो र्बलाबले

**विमर्शसारः**—१. पुंसां व्यापाराः । २. दैवोद्योगयो र्व्याख्या । उद्योगस्य प्रशंसा । ३. दैवमेव बलवत्तरम् । ४ समर्थका उदन्ताः ।

दैवे पुरुषकारे च कस्य बलं कस्य वाऽबलमिति प्रकृतो विषयः । कठिनेयं समस्या दैवोद्योगयो कतरद् बलीय इति । क्रियाशीलो हि मानवः । अस्य सर्वे व्यापाराः सप्रयोजनाः प्रयोजनमुद्दिश्यैव प्रवर्तते तासु तासु क्रियासु । प्रयोजनाभीप्सया व्यापारांस्तांस्ताननुतिष्ठन्नयं कदाचित्फलेन संयुज्यते कदाचिन्न तथा । तत्र फलानवाप्ते किं बीजम् ? व्यापारसामर्थ्यम् ? उत क्रियाणामसम्यग् विधानम् ? आहो स्वित्किमप्यन्यदेव ? इति जायते हेतुं प्रति जिज्ञासा सैषा हेतुजिज्ञासैवेह मीमांस्यते ।

कठिना समस्या

'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति भगवदुक्तदिशा स्वभावतयैव कर्मशीलोऽयं मानवः । 'सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः' इति शिष्टवचनात् सर्वे व्यापाराः सर्वाश्च क्रियाः सुखसिसाधयिषयैव भवन्ति । यथा प्रकृत्या प्रसभं प्रेरितासु श्वासोच्छ्वास स्वप्नावबोधोन्मेषनिमेषादिषु कायिकासु क्रियासु प्राण सन्धारणादि फलानि भवन्ति मानवानां तथा पुरुषप्रवर्तितासु तासु फललाभेन भवितव्यम् । फलाकांक्षयैव नरोऽपि सस्पृहं

कर्मशीलो मानवः

सरागश्च कर्माण्यनुतिष्ठति । एष ह्यस्य स्वभाव । असावेव नैसर्गिकः सिद्धान्त ।

पुरुषस्य स्वसुख-समनुकूलानां कार्याणां सिसाधयिषया कृतः परिश्रम एवोद्योगः । पौरुषम्, पुरुषकार इत्यस्यैव पर्यायौ । जिजीविषा तावद् बलवती सर्वेषु मनुजेषु । सा च प्राणाधीना । प्राणा अपि ह्यन्नाधीना । यदुक्तम—'अन्नेन प्राण', प्राणेन मन.' इति । अन्नस्य जीवनाधार भूतस्योपार्जनन्तु पुरुषपौरुषाधीनमेव । न हि निष्कर्मा निभृतं तिष्ठन् किमपि साधयितुं समर्थ । दैवमेव परमं मन्वाना पौरुषमुपेक्ष्य तूष्णीं तिष्ठन्तस्तु कातरापराभिधा दीर्घसूत्रिण एव । एतच्चोक्तं

उद्योग

'उद्यमेनैव सिध्यन्ति कार्याणि न मनोरथै. ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा ॥' इति

कातर्यं नाम तद् भाग्यमवलम्ब्य निष्कर्मावस्थानम् । कर्मणैव हि मनुष्याणां शोभा । भवन्त्येव कर्माणि फलोन्मुखानि । सर्वमेव जगत् सक्रियमिदम् । मासं राजकीय विभागेषु तांस्तान् विभागानुपसेवमानास्तु कर्मचारिणो लभन्त एव स्वां भृतिम् । तयैव चोपजीव्य स्वपरिवारमपि बिभ्रति । ये हि कर्माणि स्वानि तेषु तेषु विभागेषु नोपतिष्ठन्ते ते पूर्णां भृतिं न लभन्ते, पदच्युता वा विधीयन्ते, एवमत्र स्पष्टमेवोद्योगस्य प्राधान्यं पश्याम. । अथ पदानामुच्चावचत्वमपि शिक्षाधीनमस्ति । ये हि विद्यासु कलासु च स्वोद्योगमाश्रित्य नैपुण्यमासादयन्ति त एव लब्धोच्चशिक्षा यथाधिकारं पदेषु नियुज्यन्ते नेतरे ।

बीजवपनकाले हालिकाः केदारान्कर्षन्ति, बीजानि च वपन्ति, काले काले जलेन च सिञ्चन्ति स्वान् केदारान्, परिपक्वानि च सस्यानि लुनन्ति। तपति तपने वर्षति वा पर्जन्ये स्वेदस्नाताः शीतोद्धूपिता वा ते पौरुषमाश्रयन्तो लभन्त एव फलम् विन्दन्त एव च सुखम्। यो हि दैवं दैवमिति ब्रूयात् न च पौरुषमाचरेत् स समतीते समये किमिव लविष्यति। स च परमुखप्रेक्षी दुःखमेव लभते नान्यत् किमपि। एवमस्ति खलु प्रत्यक्षप्रभाव उद्योगस्य। न चास्य बलवत्त्वं फलजनकत्वं वाऽपलपितुं शक्नुमः। अत एवोक्त नीतिविद्भिः—

'उद्योगिनं पुरुषसिंह मुपैति लक्ष्मी
दैवं हि दैवमिति कापुरुषा वदन्ति॥' इति

दैवम्

दैवमिति किम्? अत्राह महर्षिश्चरकः—'दैव पुरा यत्कृतमुच्यते तत्, तत्पौरुष यत्त्विह कर्म दृष्टम्। पुरा कृतानां शुभाशुभानां कर्मणां परिपाको जन्मान्तरे फलत्येव शुभो वाऽशुभोवा। यदुक्तम्—

'यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पुराकृतं कर्म कर्तारमनुगच्छति॥' इति

सैषा पूर्वजन्मानुष्ठितकर्मणां परिणतिरेवेहजन्मनि कर्तारमुपस्थिता 'दैवम्' इति व्यपदिश्यते भाग्यं भाग्यधेयमिति च। अनादिरयं संसारः। अनादी च जन्ममरणे। अनन्तकालादेव जन्ममरणयोर्वशमापन्नो देही। न च कस्मिन्नपि जन्मनि निष्कर्माऽभूत्। कर्मपरम्परा चास्य देहिनो जन्ममरणवदनन्ता। सैव तावज्जनिमृत्योर्बीज

भूतेति वाच्यम्। अल्पज्ञो हि नरः। न च ज्ञातुं पारयति योन्यन्तरं देहान्तरं वोपेतोऽयं पुराकृतानि शुभानि वाऽ शुभानि कर्माणि। अतो यत् कर्म परिपाक प्रभावेणैहिकानि कर्माणि द्वारीकृत्य शुभं वाशुभं फलमुपनीयते तद्वश्यमुपभोग्यं भवति मानवेन। तदेव भाग्य दैवमिति वा। सैषा भाग्यशक्तिरेव भवितव्यता भावीति नामान्तरैरपि व्यपदिष्टा। दार्शनिकैरप्युक्तं—

'यदभावी न तद्भावो भावी चेन्न तदन्यथा।' इति।

'भवितव्यं भवत्येव नारिकेल फलाम्बुवत्।' इति च।

जरामरण-रहिता अमरा. समाधि-निरताः प्रक्षीण-कल्मषा यतात्मानो मुनयोऽपि कर्मजालसमावृताः कर्मपरिपाकमयं भाग्य सेवन्त एव। सत्यमुक्तं केनाप्यनुभवशालिना—

'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे,<br>
विष्णुर्येन दशावतारनिचये क्षिप्तो महासंकटे।<br>
शम्भुर्येन कपालपाणिरनिशं भिक्षाचरः कल्पते,<br>
सूर्यो भ्राम्यति यद्वशेन गगने तस्मै नमः कर्मणे॥ इति।

दुष्परिहरो हि कर्मणां परिपाकः। अवश्यम्भावी भाग्योपभोगः। भाग्यस्यैतां दुष्परिहार्यतामालोच्यैव कतिपये—

आयुर्बलं यशो वित्त विद्या निधनमेव च।<br>
पञ्चैतानि हि सृज्यते गर्भस्थस्यैव देहिन.॥

इति जगु.। भाग्यवादस्य प्राबल्यमुररीकृत्य शास्त्रोद्दिष्टानि तेषां तेषां दुष्कृतानां तानि तानि दु खमयानि जन्मान्तरोपभोग्यानि फलानि सुकृतकर्मणाञ्च सुखरूपाणि फलान्यपि सगच्छन्ते। स्वर्गनरकोप-

भोगोऽपि शिलष्यते । अतएव—

ते तं भुक्त्वा स्वर्ग-लोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥ इति

'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति'

इत्यादयो भगवदुक्तयोऽपि समागतार्थाः ।

दैवोद्योगयोस्तुल्यकोटिमाश्रितयोः समानामेवार्हन्तीं पश्यामः । कस्यैनयोर्बलीयस्त्वमिति निर्धारणं दुष्करम् । तथापि नैतदतितिरोहितं सुधियाम्—

कस्य बलीयस्त्वम्

इह हि निरीक्षामहे तावत्—समानपरिश्रमा मिथो निर्विशेषशेमुषीका अपि बटवः परीक्षासु प्रविश्य न सर्वे साफल्यं लभन्ते । समानकर्माणोऽपि समानव्यवसाया अपि केचिदेवार्थराशिं लभन्ते केचिन्न तथा । अथापि लोके विपरीतमपि दृश्यते । केचनाविद्या अकर्मठा अनतिप्रज्ञा अपि लक्षाधीशा आढ्या भवन्ति । अन्येऽधीतसकलविद्याः कर्मशीला मतिमन्तोऽपि जठरपूरणमात्रमपि न लभन्ते किन्तु ते निर्विद्यानामाढ्यानां भाग्यैकबलानां भृत्यत्वमुपजीव्य वर्तन्ते । अतः प्रतीयतेऽस्त्येव मनुष्यपरिश्रममतिशयाना काचन बलवत्तमा शक्तिर्यया दुष्करमपि सुकरं भवति, मोघमप्यमोघं भवति, असम्भावितमपि सम्भाव्यते । एषाऽचिन्त्यप्रभावा शक्तिरेव दैवं भाग्यं भवितव्यतेति वा निरुच्यते । दैवस्य बलवत्तमत्वमूरीकुर्वाणा पाण्डवजननी कुन्ती सनिर्वेदमत एव जगाद—

भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् ।
शूराश्च कृतविद्याश्च वने सीदन्ति मत्सुताः ॥ इति ।

'उपदेशादुदाहरण प्रशस्तम्' इत्यति लौकिकाभाणकमनुसृत्य

एका कथा प्रकृतं द्रढयितुमेकां ग्रन्थगतां गाथामत्रोदाहराम.—

भारतेऽत्रास्तां द्वौ कावपि नृपसुतौ । तयोरेकदा भाग्यदैवयोः कस्य बलीयस्त्वमिति विषये विवादः प्राचलत् । तयोर्ज्यायान् पौरुषं कनीयाश्च दैवं प्रशशंस । स्वमतं सप्रमाणं दर्शयितुकामौ तौ जनपदान्तरमभिजग्मतु. । तत्र ज्यायान् भूपति-पुत्र एकस्मिन नगरे रज्जुविक्रयेण जीवन्तं विशीर्णवाससमेकं दरिद्रं निर्वर्ण्य तस्मै पञ्चदशनिष्कान् प्रायच्छत् प्रावोचच्च—अनेन पौरुषमाश्रित्य वाणिज्यमारभस्वेति । स च मोमुद्यमानो दरिद्र शीर्णप्राये स्वोष्णीषखण्डे निष्कान संनह्य तत्र मांसं क्रेतुं सौनिक[1]हट्टमभिययौ । तत्र सौनिको मांसतन्तुमेकं पूतिगन्धं चिक्षेप पतितश्चास्योष्णीषे स. । मांसखण्डगार्ध्येनोड्डीयमान एकश्चिल्लस्तस्योष्णीषमेव जहार । स च वराको भृशमनुतेपे स्वदुर्दैवं निनिन्द च । अथ हायनानन्तरं तौ नृपदारकौ तं द्रष्टुं पुनरपि तस्मिन् नगरे समाजग्मतुः । तत्र तथैव त दीनावस्थं पश्यन् ज्येष्ठो नृपकुमार पुनरपि तस्मै निष्काणां त्रिशद्ददौ । तदह्नि स समाहितमनसा तद्द्रव्य स्वजायायै प्रायच्छत् वाणिज्यार्थम । सा च निष्कान वस्त्रखण्डेन वेष्टयित्वा धान्यतुषपूर्णे गृहकुसूलेऽस्थापयत् । अपरेद्युरेका गोपालिका दुग्ध विक्रेतुं तत्र समाययौ । दरिद्रगेहिन्यां क्वापि प्रयातायां तत्सुता कुसूलात्ससम्भ्रमं सनिष्क धान्यतुषं निष्कास्य तस्य विनिमयेन क्षीरं क्रीतवती ।

---

1 मांस विक्रेता

दरिद्रोऽपि परेऽह्नि निष्कानलभमान· स्वदुर्दैवमेवोपचुक्रोश। अथ हायनद्वयानन्तरं तौ राजपुत्रौ पुनरपि स्वमतं परीक्षितुं तत्र प्रापतुस्तञ्च दरिद्रं तथावस्थमेव दृष्ट्वा ज्येष्ठस्तस्मै भृशं चुकोप। अथ कनिष्ठो दैवमेव प्रधानं मन्यमानस्तस्मै पणचतुष्टयं प्रादात। स च निर्धनो 'यत्र निष्कै र्न किमपि साधित तत्र पणचतुष्टयेन कि भवेत्' इति विचारयन् गृह-मागत्य स्वगेहिन्यै प्रायच्छत्तत्। सा चान्येद्युस्तेन पणचतुष्टयेनैकं महाकायं झप चिक्राय। शकलीकरणावसरे च सा तन्मध्यादेक देदी-प्यमानं महामणि लेभे। मणिज्ञानेऽकुशला सा तं प्रकाशमय काचखण्डं जानन्ती 'अयं निशायां प्रकाशाय भविष्यतीति' बहु मेने। दरिद्रस्य विनमितपटल मृत्कुटीर-सुषिरेभ्यो निर्गतं चाकचक्यमयं प्रकाशं तमिस्रायामालोक्यैकस्तत्प्रतिवेशी रात्निकस्तं मणि महता निष्कमूल्येण क्रीतवान्। दरिद्रोऽपि सौभाग्यसुमतिस्तेन धनेन वाणिज्यं कुर्वन् स्तोकैरेव वत्सरैराढ्यतमो बभूव। कतिचिद्धायनान-न्तरं तावेव राजकुमारौ तस्मिन् नगरे समागच्छताम्। तत्र च तस्य कायाकल्पमिव दृष्ट्वा ज्यायान् पौरुषमनतिमानयंस्तदा दैवमेव बल-वत्तरं स्वीचक्रे।

एवमसावुदन्तः किंवदन्तीरूपो ग्रन्थबद्धो वा स्यात पर दैवस्यो द्योगाद् बलवत्तरत्वं स्पष्टं द्रढयतीति कृतमधिकप्रपञ्चनेनात्र।

—— —

# गत पञ्चाशद्वर्षाभ्यन्तरे विज्ञान-गतिः

**विमर्शसारः**—१. विज्ञानमय जीवनम् । २. विस्मयावहा आविष्कारा: । ३. उत्तरोत्तरोन्नतिः ।

उपक्रम. इदमनुशुश्रुमः—लङ्काधिपति रावणं युद्धभूमौ मुमूर्षुं श्रीरामप्रेरितः सौमित्रि प्रप्रच्छ, 'कोऽभिलापस्ते ऽपूर्णः' इति । स हि निःश्वस्य प्रत्याहैवम् 'मम जीवने त्रय एव मनोरथा अपूरिता वर्तन्ते । प्रथमस्तु तावत्—'भूलोकाद् द्युलोकं यावत्सोपानपरम्परां रचयेयम्" इत्यासीत् । द्वितीयः—'स्वर्णे सौगन्ध्यं निवेशयितुं बलवदहमैच्छम् येन जाम्बूनद-पित्तलयाः प्रत्यक्षमेव भेदो लभ्येत" इत्यास्त । तृतीया तत्वासीन्मम कामना वैश्वानरं निर्धूमं कुर्यामिति ।" अवधेयमत्र । अस्माकं वर्तमान युगे प्रथम एवावशिष्टः प्रतीयते । वैश्वानरस्य निर्धूमत्वं सम्पादितमेवात्रापि विद्युता । रासायनिके स्वर्णे सौगन्ध्यमपि जनितप्रायमेव । अन्यत्सर्व मसम्भाव्यमपि सम्भवतामापन्नं कपोलकल्पितमपि तथ्यभूतमतर्कितमपि नयनयोः पुर उपस्थितं लभ्यते । ये वयं पुष्पकादीनां विमानानां कथां समाकर्ण्य सविडम्बमहसाम पूर्वम , इदानीं त एव वय व्योमयानैर्व्योमायनं समवगाहमाना खगानप्यति क्रमामहे । दुस्तरमर्णवमपि पोतै रुल्लंघ्य पर सहस्र-योजनदूरान देशान् कतिपयैरेवाहोभिर्व्रजामः । स्वभवनस्था एव दूरतमप्रदेश-भवान् दैनिकानुदन्तान शृणुम । सुविख्यातनेतॄणां भाषणानि, गायिकानां मधुराणि संगीतानि च श्रावं श्रावं मनांसि विनोदयाम. । अहो !

मनुष्यस्य विज्ञानमयमिव जीवनमद्य । अस्माकं प्रत्यहमुपयोगि पदार्थेषु किं तद्यत्र विज्ञानं नानुप्रविष्टं स्यात् सकलेऽस्मिन्नात्मेव चराचरे संसारे ।

आविष्कारा अर्धशताब्देषु

गताब्दशतस्य पूर्वार्धे विद्युद्बाष्पशकटविमाना-नामाविष्करणेन नवीन एव युगः प्रारभत । तदा मानवा एतैराविष्कारैः परं विस्मयमापुः । किञ्च वैज्ञानिका न तूष्णीमतिष्ठन् । इटली वास्तव्येन श्रीमता गुग्लीलिमो मारकोनी महोदयेन पैक्रमे स्वर-शर-ग्रह शशाङ्के वत्सरे ध्वनिवाहक यन्त्रस्याविष्कारः कृतः । निखिल एव लोकः चकितीकृतः । अमेरिकायां रणोपयोगिनां [1]दुर्गशकटाना-माविष्कारोऽभूत् । अधुना त्वेते सर्वत्रैव रणेषु भटान् रक्षन्ति युद्धसम्भारञ्च दुर्गमेनाऽप्यध्वना रणाजिरं नयन्ति । अगाधे सिन्धौ सलिलतले धावन्त्यः "[2]पानीयनौकाः" अपि न तावन्निराश्चर्याः । अथाग्निस्फोटान् परः 'सहस्रक्रोशदूरं प्रक्षिपन्त्यः शतघ्न्यः केषां न विस्मयावहाः ।

मूकं चलच्चित्रं पश्यन्तो नरा व्यचारयन् चेदत्र ध्वनिः स्यात्तर्हि कियत्समीचीनं भवेत् । कतिपयैरेव हायनैश्चलचित्राणां वागभावो गतस्तानि ध्वनिसंयोगेन विनोदयितुं प्रारभन्त सर्वान् जनान् । ध्वनिवाहकयन्त्रेण गायक संगीतव्याख्यानादि समाकर्णयन्तो ऽतर्कयन्, 'अपि नाम गायकस्य नेतुर्वाऽत्र साक्षात्कारोऽपि भवेत् ।' अहो ! स्तोकेनैव कालेन ध्वनियन्त्रेण सह [3]दूरदृष्टि यन्त्रमपि

---

१. टैंक । २. पनडुब्बी नाव । ३ टेलीविजन ।

वैज्ञानिकैः समयुज्यत यत्र व्याख्यातुर्गायकस्य वा विद्युच्छक्त्या प्रति बिम्बचित्रवदाकृतिर्बिम्बमपि ध्वनिवाहकयन्त्रे प्रविश्य दृष्ट भवति। एष आविष्कारः वैक्रमे २००६ संवत्सरे आंगलभूमि निवासिना आई० एल० बेर्ड नाम्ना वैज्ञानिकेन कृत आसीत्। अद्यावधि न तावत् दूरदृष्टि यन्त्राणां सर्वत्र प्रसारो यतः सङ्ग्रामसंकटेनैतादृश्य प्रगतयो व्याहन्यन्त किञ्चित्।

अथ 'मनोरथा नाम तटप्रपाता' इति सम्यगेवोक्तम्। वैज्ञानिकानां मनोरथास्तटप्रपातायमाना इव सन्ति। अनतिकालपूर्व मेव १९५२ सम्वत्सरे जर्मनी वास्तव्येन 'रौएटजिन' नाम्ना विज्ञान विशारदेन '[४]क्षकिरणम्' इत्येको महानाविष्कारः कृत। एतेन न तावच्छरीरशास्त्रमेव सचिकित्सत मुपकृत मभूत्. उत भूगर्भ शास्त्रमपि। क्षकिरण-यन्त्र-साहाय्येन भूगर्भगतानां पदार्थानां निखननेन विनापि ज्ञानमुत्पाद्यते।

जनास्तावदेतैरेव विज्ञानाविष्कृतैर्द्रव्यैर्वैज्ञानिकाना ममानवीयां मनीषां मनोहृत्य प्रशंसमाना मोमुह्यन्ते स्म विज्ञान सर्वजननि श्रेयस-कर दिव्यमिव वरं मन्यमाना। किञ्च यदा द्व्यधिकद्विसहस्रवत्सरे वैक्रमे जनैरश्रावि '[१]परमाणुस्फोटेन' पाताल (अमेरिका) वासि सुभटैर्जापानीयानां 'हीरोशिमा' नाम्नी महती नगरी पञ्चक्षणं यावदेव जडाजडैः सहिता नाशिता तदा सार्धं विस्मयेन भयमपि प्राविशद् बहूनां चेतसि। अथ 'परमाणु बम.' परमाणुप्रस्फोट इत्येव प्रतिनगर प्रतिपत्तनं प्रतिग्रामञ्च जना अवदन्। स एष

---

४. ऐक्सरे। १ परमाणु बम।

परमाणुप्रस्फोटो अद्भुत आविष्कारो वैज्ञानिकानाम् । युयुत्सूनां विजिगीषूणां समृद्धम्मन्यमानानां जननायकानां भूपानाञ्च स्वस्वविषयेषु 'परमाणुप्रस्फोट' निर्माणाय महीयान् गुप्ततमः प्रयत्नः प्राचलत् । तदनन्तरं ततोऽपि घोर आविष्कारोऽभवत्—उद्रेजन प्रस्फोट इति । एतस्य प्रयोगेन या क्षतिर्भवेत् मानवानां स न वर्णयितुं शक्या ।

उपसंहार.

अस्माक जीवनमेव विज्ञानमयमधुनेति पूर्वमेवावोचाम । किञ्चोत्तरोत्तरं समेधमानं विज्ञानबलं पर्यालोच्य प्रतीयते लकेशस्यापूर्णो मनोरथोऽपि वैज्ञानिकैः पूरयिष्यते । पातालवासिभिरिदमुद्घोपित मेव यत्ते दशाब्दान् यावत् यास्यन्ति व्योममार्गेण चन्द्रलोकम् । एतदर्थं तैरुपक्रान्तं सम्भारचयनम । कतिपये तु वायुमण्डल-सीमानमतिक्रम्य गगने नगरीं निर्मातुकामास्तत्रैव सवितृ-किरणानि सञ्चित्य उद्रेजन प्रस्फोटादपि बलवत्तरं विस्मयप्रदञ्च किञ्चिदाविष्कर्तुं यतन्ते । न चैतद्दुःशकं नाम । अधुना तु केवल मृत्युञ्जयत्वमेवावशिष्टमिति । एतदपि सम्भवेदिति भवति सुवचम् । 'असम्भवशब्दो मूढानां कोपे लभ्यते' इति नेपोलियनस्योदारोक्तिर्वैज्ञानिकै रन्वर्थतां नीतेति को न सोरस्कार मुररीकरोति ?

---

# महाकवेः कालिदासस्य प्रकृतिचित्रणम्

विमर्श सारः—१ कविवर्णना। २ प्रकृतिप्रेम। ३. कविता-लालित्यम्।

कविशक्तिं वर्णयन् महाकविः कल्हणो जगौ—

'कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः।
कविप्रजापतींस्त्यक्त्वा रम्यनिर्माणशालिनः॥'

प्रकृति रहस्यानि ललितपदावलीभि स्तूलिकाभिरिव मानसपटे यश्चित्रकार इव चित्रयति, निःशेषेण जगता सहात्मनो व्यापकतां द्रढयन् लोकोत्तरानन्दरसेन स्नापयतीव यो मानवानां मनांसि, नरीनर्तयत्येव यो भावान् नवनवविलास-समुल्लसितान् निसर्गगम्भीरान् नयनयो. पुर स्वकान्त-कविता-दुन्दुभिना, स एव जगतां वन्द्यो महाकवि कालिदास। कवे कल्हणस्य वचोऽस्मिन् सर्वथा संगच्छते। यूरोपीया केवल मभिज्ञानशाकुन्तल कालिदासरचितम नूदित मेवाधीत्य कालिदासस्य कवितायां मुग्धा इवाभवन्। सुबहवस्तत्रैतस्याभिज्ञानशाकुन्तल मध्येतुमेव संस्कृतभाषा-शिक्षणाय प्रायतन्त।

उपक्रम.

सस्कृत साहित्ये कालिदासस्य कवित्वं सर्वानतिशेते। सस्कृत वाङ्मयस्य महाकवयोऽपि कालिदासं कविवरिष्ठ गणयन्ति।

'पुरा कवीनां गणना प्रसगे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्कीर्तिकथा प्रसंगे ह्यनामिका सार्थवती बभूव॥'

इत्यादीनि स्तुतिगर्भाणि कालिदासकविता-माधुर्येण पहृतचेतसः कवयः पद्यानि रचयामासुः। आलंकारिकाणां श्रेष्ठः श्रीमदाचार्य मम्मटोऽपि 'कालिदासादीनामिव यशः' इति तारस्वरेण कालिदास कीर्ति मगासीत्।

प्रकृति चित्रणम्

महाकवेः कालिदासस्य प्रकृतिचित्रण-चातुर्येव तादृशी यया स सर्वेषां कवीनां चूडामणीभूत। प्रकृतिचित्रणञ्च किं तावदिति विवक्षायां वच्म — स्वभावसुन्दरतया मानवः प्रकृत्यामनुरक्तः। असौ चानुरागो हृदि सुप्त इवोद्बोधमर्हति। कविता या ललितस्वना वंशी. प्रबोधनेऽस्य सुप्तानुरागस्य पटीयसी। किञ्च सरलसरलै र्ललितललितै. प्रसादगुण-भूयिष्ठै वैदर्भीरीति सरसैः पदैरर्थैश्च शोभिता कवितैव रञ्जयितुमलं सहृदयाणां मनांसि नान्या। यत्र मधुर पदावलीभि कविस्तांस्तान् भावान् व्यञ्जयन हृद्गतमिव वदत्यन्येषां, यत्र भावा. समुच्छलन्त प्रस्रवणा इव प्रवहन्तस्तृप्तिमिव जनयन्ति मनसः, यत्र कोमलकुसुमानां वर्ण-सुषमा इव सौरभभरिताः कवि-भणितयो झटिति प्रविश्य मानस-मावर्जयन्तीव, यत्र कमनीयतमा कामिनीव प्रकृति समालिंगत इव मानव-मानसं, सुललित पदार्थ निचूलपरिधाना सद्गुणा सदलकारा वशयति शरीर, सञ्चारयत्यलौकिकमिव रस, जनयति च कमप्य-वर्णनीयमाह्लादम्, सैव कविता प्रकृतिचित्रणचातुरीचणा। तथाहि—

'स्थिताः क्षण पक्ष्मसु ताडिताधरा
पयोधरोत्सेधनिपात चूर्णिता।

वलीषु तस्या स्खलिता प्रपेदे
चिरेण नाभिं प्रथमोदबिन्दव ॥'

कोमलकायोमा पशुपति मारिराधयिषुस्तपस्तायति। भीष्मे ग्रीष्मेऽपि सा तपस्यया क्लान्ताऽपि चारुत्वं न जहौ। प्रावृट् प्रापत्। जलधरेण वृष्टम्। गौर्याः शरीरे प्रथम-पतितानां तोय-बिन्दूनां का दशाऽभवत्? इति कविर्वर्णयति—निविडपक्ष्मसु क्षणं स्थितास्ते कोमलाधरमताडयन्, कठिनकुचयोः पतितानां तेषां चूर्णीभाव स्वाभाविक एवासीन्, त्रिवल्याः पेशलतया तत्र स्खलन-मथ गम्भीरे नाभौ चिरेण प्राप्तिरपि स्वाभाविकी। एव—

"पर्यंकबन्धस्थिरपूर्वकायं ऋज्वायतं सन्नमितोभयांसम्।
उत्तानपाणि द्वयसन्निवेशान् प्रफुल्लराजीव मिवांक-मध्ये ॥'

हिमगिरौ समाधिस्थितस्य भगवत पशुपते स्तपोवर्णनात्र कीदृशी प्रकृति-कमनीयेति खल्वनुभावेन एव ज्ञातुं क्षमा।

शकुन्तलां पतिगृह प्रेषणाय त्वर्यमाणोऽपि कण्वो महर्षि रतस्या श्चिरलालितायाः सुताया विरहव्यथामनुभवन् वक्ति—

"यारयत्यद्य शकुन्तलेति हृदयं संस्पृष्ट मुत्कण्ठया,
निद्रा स्तम्भितवाष्प दृष्टिकलुषं चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकस',
पीड्यन्ते गृहिणः कथं नु तनया-विश्लेषदु खैर्नवै ॥"

वीतराग काननवासी मुनिर्यदि तनयाया नवविरहेण खिद्यते तर्हि रागवन्तो गृहस्थाः कथ न खिद्येरन्? स्वाभाविकमेतत्। पितु सुतायाः स्नेहतन्तुर्विरहजनित-खेदश्च चित्रित इवात्र कविना।

अथ—

'नन्वात्मानं बहु विगणयनात्मनैवावलम्बे

तत्कल्याणि! त्वमपि नितरां मा स्म गा कातरत्वम्'

मेघमुखेन प्रोपितां प्रियां सन्दिशन यक्ष. स्वाभाविकमेव कथयति। नैतावतैव यक्षस्य सन्तोप.। मिलनावधिरपि नेदिष्ठोऽतः पुनरपि साशंसं स सन्दिशति—

'शापान्तो मे भुजग शयनादुत्थिते शार्ङ्गपाणौ

शेपान्मासान गणय सुभगे लोचने मीलयित्वा।' इति।

यक्षपत्न्या विरहविधुराया

'उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां

मद्गोत्रांकं विरचितपदं गेयमुद्गीतुकामा।

तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चित्,

भूयो भूय. स्वयमपि कृतां मूर्च्छना विस्मरन्ती॥'

कीदृशी सरला पदावली? कियान् मनोहरो भाव.? कियच्च माधुर्यम्? इति पद्यं मनागपि सानुभूति-पठितं चित्रितामिव सजीवामिव च यक्षवनितामुपस्थापयति नयनयो' पुर।

अथ च प्रेयस्यामनापृच्छ्य गतायां प्रेमी विरह-विपण्णः किं तर्कयति, तदपि श्रूयतामुर्वशी-वियोग-तप्तस्य पुरूरवसो मुखेन—

'तिष्ठेत् कोप वशात्प्रभाव-पिहिता, दीर्घं न सा कुप्यति,

स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मन'।

तां हर्तुं विबुध द्विपोऽपि हि न मे शक्ता पुरोवर्तिनी

सा चात्यन्तमगोचरं नयनयो र्यातेति कोऽय विधि॥'

रोषस्य पार्थक्यस्य च हेतुं कमप्यपश्यन् पुन —

'गूढं नूपुर शब्दमात्रमपि मे कान्त श्रुतौ पातयेत् ।
पश्चादेत्य शनै· करोत्पलवृते कुर्वीत वा लोचने ।'

इति तस्या· प्रत्यावर्तनाशा विनोदेन मनो द्रढयति । विरह-खिन्नानामेवं विधानि कुशकाशावलम्बनानि भवन्त्येव मनो विनोद-कारणानि । अथापि—

'चलापांगां दृष्टिं स्पृशसि बहुशो वेपथुमती,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचर ।
करौ व्याधुन्वत्या· पिबसि रति-सर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हता स्त्व खलु कृती ॥'

शकुन्तलादर्शन मोहितेन दुष्यन्तेन यदत्र भ्रमरं प्रत्युक्तं तत्कियन्मधुरं श्रृंगार-रस-स्नातं स्वभाव-संगतमिति सहृदयाणां हृदयमेव प्रमाणम । अथ शकुन्तलायां दुष्यन्तस्यानुरागस्तु जात· पर नाद्यावधि स तां लब्धुं कमपि बलवन्तमुपायं पश्यति । अतः स्मारं स्मार ध्यायं ध्यायं चारण्ये साक्षात्कृत कण्व-कन्याया लावण्यं स वक्ति—

'अनाघ्रातं पुष्पं किसलय मलून कररुहै-
रनाविद्ध रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधि· ॥'

अक्षतरूपाया· शकुन्तलाया लावण्यं सरलया मधुरया च पदा-वल्या वर्णितं नितान्तं प्रकृति संगतं स्पष्टं विभाति । अन्तिमचरणेन च स्वीयाऽक्षमताऽपि ध्वनिता ।

अथ महेन्द्रपर्वते स्वयमेव तिरस्कृतां प्रेयसीं शकुन्तलां पुनर्लब्ध्वा समुपसर्पन्तीं च तां निर्वर्णयन् दुष्यन्तः—

'वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अति निष्करुणस्य शुद्ध शीला
मम दीर्घ विरह व्रत बिभर्ति ॥'

इति वियोगक्षामाया प्रियाया दशां स्वस्य च क्रौर्यं स्मारयति। कीदृश्यत्र करुणा रसमयी मधुरता ?

कवेरस्य प्रकृतिचित्रण-कौशलन्तु बहुविधम्। सर्वेषु शृंगारादि रसेषु सर्वासु चावस्थासु कवेः काव्य वंशीनादो दन्ध्वनीतीव सर्वेषां काव्यरसिकाणां हृत्सु। दृश्यताम्—

"लता प्रतानोद्ग्रथितैः स केशै-
रधिज्यधन्वा विचचार दावम्।" इति

"न चान्यतस्तस्य शरीररक्षा
स्ववीर्य गुप्ता हि मनोः प्रसूतिः।" इति च।

मुनि-होमधेनुमनुगच्छतो महाराज दिलीपस्य विपर्यस्तानां केशानां लता-प्रतानैः संग्रन्थन तपस्विव्रतायापेक्षितमेव, अथ हिंस्रेभ्यो धेनोः स्वस्य च रक्षणाय क्षत्रियाचारमनुसृत्य कोदण्डधारणमपि नितान्तमावश्यकम्। चक्रवर्तिनो दिलीपस्य वनौकसामिव वृत्तिः प्रकृत्यैव कमनीयाऽत्र प्रतीयते।

तथा च धेनो रक्षणाय स्व शरीरमर्पयन्तं नृपं प्रति सिंहस्य

'एकातपत्र जगतः प्रभुत्व, नवं वयः, कान्तमिदं वपुश्च ।
अल्पस्य हेतो र्बहु हातुमिच्छन् विचार-मूढ़ प्रतिभासि मे त्वम् ॥'

इति वचनं कीदृशं मधुरम् ! तरुणस्य सुन्दर-देहस्य चक्रवर्तिनश्च दिलीपस्य पशोः कृते स्वदेहार्पणं मूढत्वमेव सूचयेत्। किमन्यत् ? अपरञ्च—

इन्दुमती-मरणावसरे महाराजस्य विलपनं पाषाणानपि रोदये-दिति तर्कयामि । तथाहि तत्र—

'विललाप स बाष्पगद्गद सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥'

अत्राजस्य प्रिया निधनेऽभितपनं 'लौहमपि तप्तं सन्मृदुभवति कोमलकायानां नराणां कथैव का' इत्युत्तर पद्येन यत्समर्थितं तन्नालङ्कृति बन्धायैवापितु स्वाभाविकं मनोविज्ञान-सश्लिष्टमेव पश्यामः ।

अथाप्यस्यैव—

'ध्रुवमस्मि शठ. शुचि स्मिते विदित कैतववत्सलस्तव ।
परलोक मसन्निवृत्तये यदना पृच्छ्य गतासि मामितः ॥'

इति विलाप-गर्भाणि वचनानि द्रवयन्ति दारुणान्यपि हृदयाणि । प्राय. सर्वोहि जन एवमेव विलपति स्वज्ञातिभिर्विरहितः । पदानां सरलता, मधुरता, गम्भीरता स्वभावप्रवणता चार्थस्य कवेः परमां प्रकृति-चित्रण कुशलतां स्पष्टं व्यञ्जयति ।

अत्र महाकवेः कालिदासस्य प्रकृति-चित्रण-कला माश्रित्य

दिङ्मात्रमेव तावच्चिचित्रितम्। एप चास्माकं निर्वन्धो यद्विश्वस्मि-
न्नपि साहित्ये समस्तभूतल-लब्ध-प्रचारे
उपसंहार
नाभूदद्यावधि कोऽपि तादृशः कविर्यो हि
काव्यकलायां कविकुल मौलिमुकुटं यश -
शरीरशालिनं महाकवि कालिदासमतिशयेत। असौ महाकविः
शापभ्रष्टः कोऽपि गन्धर्व. सिद्धो वा भारतभूमि-पवतनारेति विश्व-
सिम । महनीयोयं महाकवि । सत्यमुक्त केनपि—

दिव्यमप्युपपाताना माकल्पमनल्प गुणगणा येषाम्।
रमयन्ति जगन्ति गिर कथमिव कवयो न ते वन्द्या ॥"

---

## प्राचीन भारते विद्यार्थिवृत्तम्

**विमर्शसारः** १ आश्रमा. । २. ब्रह्मचर्यपालनम्। ३ अत्रत्या विद्यालयाः । ४. राज्यसाहाय्यम् । ५. विद्यार्थिना मात्मोन्नति । ६ आचरणम्।

अत्रभारते पुराऽध्यापनस्य क्रम' विधिश्च भिन्न एवासीदद्यतन कालात्। तदानीं सर्वे जना आश्रमधर्मानपीपलन्। सर्वस्य त्रैवर्णि-
कस्य जना उपनयन-सस्कार विधायाध्य-
आश्रमाणां
यनाय स्वदारकान् गुरुकुलेपु प्रेषयन्ति स्म।
बाहुल्यम्
तदा जनपदोपकण्ठ एवारण्येपु प्रतिष्ठापिता
आश्रमा अभूवन्। एतेष्वाश्रमेपु तपोनिरता
मुनयः सदारा अदाराश्च विद्याध्यापनपरायणा आश्रमधर्मानन्व-

वर्तन्त । अत्र परः सहस्रा विद्यार्थिनो नेदिष्ठेभ्यो दविष्ठेभ्यश्च प्रदेशेभ्य समेत्य ब्रह्मचर्यमनुपालयन्तो विद्या अध्यजीगयन्। आश्रमस्य मुख्य कुलपतिरित्युच्यते स्म । यस्याश्रम एकादश सहस्र-विद्यार्थिनोऽध्यैपत स कुलपति र्व्यपादिश्यत । महर्षेः कण्वस्य वरतन्तो सान्दीपनेश्चैवंविधा एवाश्रमा अभूवन् ।

आश्रमेष्वधीयानानां छात्राणां वृत्तयस्तु नियमिता आसन्। तथाहि—तत्र ब्रह्मचर्य-परिपालनमासीत्प्रधान मावश्यञ्च कर्तव्यम्।

आश्रमेषु विद्यार्थि वृत्तम्

प्रातः सायं सन्ध्योपासनं समिदः सञ्चित्याग्निहोत्रविध्यनुष्ठानं गोपालनञ्च बटुभिरक्रियत । क्वचन वटुभिराश्रमपरिपालकाः स्वकीया गुरवः सदारा. सर्वात्मना शुश्रूष्यन्ते स्म । आश्रमेषु छात्रा भिक्षयाऽवर्तन्त । ते हि भिक्षा आहृत्य गुरूनुपातिष्ठन्त । भिक्षैवासीत् परमावलम्बनम् एतेषामाश्रमाणाम्। आसन् नृपतिभि र्विश्राणिता [1] प्रचुर-वसुमतीसंपत्का अग्रहारा [2] अपि येनाश्रमाणां सुव्यवस्थिति र्विद्याध्यापनादिषु न कदापि व्याहन्यत । सामन्तः सार्वभौमाश्च भूपाः स्वीयकोपादपि प्रत्यब्दं प्रचुरमर्थं व्यतरनाश्रमेभ्यो मठेभ्यश्च । आश्रमातिरिक्ता आसनत्र विद्यापीठा विश्वविद्यालया मठाश्चैवंरूपा एव। एष्वपि पृथ्वीपतिभिः कोट्यधीशैरेव च सर्वोऽपि भारो धार्यते स्म। नालन्दा तक्षशिला प्रभृतय एवंविधा एव विश्वजनीना समस्त भूमण्डलप्रशस्ता विद्यालया अभूवन् ।

---

१ दत्तः २ भूसम्पत् (जागीर)

आश्रमस्थानामध्ययनपरायणानां सर्वा अपि पठनानुकूला· क्रिया· सुव्यवस्थया प्राचलन् । नच कोऽपि शुल्कस्तेभ्य अगृह्यत । तेभ्यः पुस्तकानि वसनानि भोजन सर्वमेव नि.शुल्कं व्यतीर्यत ।

आयुष. सप्तमादेकादशनमाब्दं यावदेव बटव आश्रमेपु प्राविश्यन्त । ते च तत्र पञ्चविंशतितम-वत्सर यावत् स्वस्यायुषो वसन्तो निगमागमादीन यथेच्छमधीयाना स्वविद्या

समावर्तन संस्कार· परिसमाप्य गृहस्थाश्रमं प्रवेष्टुमन्वमन्यन्त । विद्यासमाप्तिकाले ते गुरुभि र्दीक्षिता उपादिश्यन्त । स एप विधि समावर्तनसस्कार' इति निगद्यते । छात्रा अस्मिन्नवसरे स्वगुरून् गुरुदक्षिणायै समन्वरुध्यन्त । परं स्वशिष्याणां शुश्रूषा-प्रीता गुरवोऽपि तत्र निस्पृहा एवावर्तन्त । किञ्च कदाचन शिष्यैरनुबध्यमाना गुरवोऽपि—

"वित्तस्य विद्या परिसख्यया मे
कोटीश्चतस्रो दश चाहरेति"

इति गुरुदक्षिणां महर्घां शिष्यै रतिकृच्छ्रेण देयामयाचन्त ।

किञ्च शिष्या अपि प्राणपणेनापि स्वगुरूणां याचितं समपूरयन् । सन्त्यत्र बहूनि कौत्स गालवोत्तंकादीनां निदर्शनानीतिहास प्रसिद्धानि ।

हंहो ! तत्कालीनानां विद्यार्थिनां विद्याया ब्रह्मचर्यस्य च बलम् ! इदञ्चासीत्तेपां तपसो ब्रह्मचर्यस्य श्रुतिशास्त्रपाण्डित्यस्य बलं येन तेभ्यः सुरपति रशेप-भूवलयपालका राजानोऽपि बिभ्यत स्तान् समाद्रियन्ते स्म । अकिञ्चन कमण्डलुपाणिरेव कौत्सो

वितीर्णाशेषकोष रघुं गुरुदक्षिणार्थे समुपाजगाम। रघुरपि ब्रह्मवर्चसा जातवेदसमिव प्रज्वलन्त बटु

'रघोः सकाशादनवाप्य किञ्चित् ।
माभूत्परीवाद इवावतार' ॥'

इति वितर्कयन् धनपतेरर्थं निष्क्रष्टुं व्यचारयत्।

एवमेषाऽसीदस्मिन् भारतेऽधीतविद्यानां ब्रह्मचारिणां तपसो विद्यायाश्च शक्ति ।

हन्त! क्व गतं तद्वैभवं भारत-वसुन्धरायाः ? कुत्र गतास्ते ब्रह्मवर्चसः श्रुतपारदृश्वानो विद्यार्थिन' ? क्व नु याता तेषां तपसो ऽधीतस्य च शक्ति' ?

यदैषाऽस्माकं पुण्यश्लोका भारतमही विदेशीयैर्यवनै राक्रान्ता, आर्याश्च राजान' स्वीयेनैव मात्सर्येण मिथो द्विषन्तस्तेषां दासता भाजनान्यभवन्, तदा प्रभृत्येव लुप्ता साश्रमव्यवस्था तच्च विद्यार्थिजीवनम्? राज्यसाहाय्यमनवाप्याश्रमा मठादयश्चोच्छिन्ना लोकाश्च वैदेशिकानां शासकानां भाषां पठितुं प्रारेभिरे। तदा प्रभृति विपर्यासं प्राप साऽश्रमपरम्परा, तच्च सद्वृत्तसहितं विद्यार्थिजीवनम्। यवना यदा भारतस्य पश्चिमोत्तरोपकण्ठात् कतिचन प्रान्तान् गान्धार-सिन्धु-मुखानशासन् तदाऽपि यवनैरनप-हस्तितेषु भागेषु मठानामाश्रमाणां च सर्वत्र प्रसारोऽभवत् यत्र किलाश्रमधर्माननु पालयन्तो बटवो स्वाध्यायमसेवन्त। याज्ञिकानां शरणेभ्य आश्रमवासिभ्यो धूमं निर्गच्छन्तमालोक्य महाकविर्मखो जगौ—

# अस्माकं खाद्य समस्या

**विमर्शसारः**—१. भारतखण्डनाभिशापः। २. जनसंख्यावृद्धिः। ३. कृषीवलानां ह्रास। अहल्या भूमय। ४ राज्यशासकानामुद्योगः।

हन्त ! स्वर्णचटिकेति वैदेशिकैर्जेगीयमानेयं भरतवसुमती समृद्ध्या धनेनान्नेन च परानुपाजीवयत्। हेतव पञ्चविंशति वत्सरात्पूर्वमपि पञ्चनदे गोधूमस्य खारी[1] सार्धरूप्यकद्वयेनामिलत्। न चासीदन्नस्याथवान्येषां खाद्यानां द्रव्याणामेतावती महर्घता दुर्लभता वा। किन्तुकारणमस्यातर्कितस्य परिवर्तनस्येति मीमांसायामर्थशास्त्रिभिर्नीति विद्भिश्चात्रानल्पा हेतव उपन्यस्यन्ते। तानिह समस्य विवेचयाम —

(१) द्वितीय महाहव—रसग्रहनन्दैक सम्वत्सरे (१९९६) शर्मण्याङ्गलयोर्महान् रण प्रारब्धस्तदानीं संख्यातीता ग्रामीणाः कृपका अर्थलोभेन प्रेरिता सेनायां प्रविष्टास्तेषां कृपिकर्मनिपुणानां महती संख्या युद्धेषु नष्टाऽभूत्। तत. कृपिकर्मणि महान् व्याघातः संवृत्त.।

(२) भारतखण्डनम्—भारतस्य द्वौ महान्तावास्तामन्नोत्पत्तिशालिनौ पञ्चनदवंगदेशौ। तयोरर्धोऽर्धोभागस्तु खण्डित। नदीमातृको[2] हि पञ्चनदस्य पश्चिमो बंगस्य च पूर्वो भाग। तत्र गोधूमः शालिश्च क्रमेण प्राचुर्येणोत्पद्येते। भारतगणराज्येन सह

---

१ १३ मन। २ नदीभि. सिञ्चित.।

नवप्रसूतस्य पाकिस्तानेति कृतनामधेयस्य वाणिज्यसौकर्यमपि नास्ति। भारते तु देवमातृका[1] भूभागा प्रायो बहवो नदीमातृकाश्च स्तोका एव। इतस्तु पूर्वपञ्चनदे पश्चिमवंगे च मौसला एव हालिका अभवन्। ते तु प्रोषिता.। ये ह्यत्रागता आर्या. पुरुषार्थिनस्तेषां बहवो नगरपत्तनेष्वेव वसन्ति। कतिपये ग्रामेषु वसन्तो न कृषिकर्मणि निपुणा श्रमशीला वा।

(३) जनसंख्या वृद्धि. —सर्वस्यैव भूमण्डलस्य जनसंख्या प्रत्यह पञ्चपञ्चाशत्सहस्रसख्यया वर्धमानाऽऽस्ते। रात्रिं व्यतीत्यापरेद्यु पञ्चपञ्चाशत्महस्र जना नवप्रसूता भोजयितव्या'। भारते च प्रतिवर्षं जनानां सख्याऽर्धकोटिमिता समेधते। हरिवर्षस्यैको महानर्थ शास्त्रीत प्रागवोचन् माल्थसनामकः—"अन्नाज्जना सवेगं वर्धन्ते, अत एव प्रकृति साम्यावस्थां रचयितुं दुर्भिक्षमारी सम्रमान तनोति"। इतो जनानां वृद्धिरितश्चान्नोत्पत्तौ ह्रास'। नवनवत्युत्तरैकोनविंशातिशतसम्वत्सरे (१९९९) बङ्ग देशे दुर्भिक्षेण पञ्चाशल्लक्ष संख्या जना उपारता ।

(४) सग्रह प्रवृत्ति. — 'लोभ पापस्य कारणम्' इत्युक्तिरत्र संगच्छते। अर्थलोलुपास्तु वाणिज्यवृत्तयो ग्रामीणेभ्यो भूसम्पत्तिमद्भ्योऽन्न लघुमूल्येनाऽविदितं क्रीणन्ति नगरेषु च तत्रैव वा सगृह्य तस्करापणे प्रचुरमूल्येन विक्रीणन्ते। एषा प्रवृत्तिरपि खाद्यद्रव्याणि दुर्लभी करोति।

(५) राज्यनियमः - अद्यत्वे वैक्रम सम्वत्सर २०१० यावत्

---

१. वृष्ट्यम्बुसिञ्चिताः।

सर्वाणि द्रव्याणि प्रायो विशेषतश्च खाद्यानि राज्यशासन-नियन्त्रिता-न्यासन्। तत्र दृष्टं कृतनियन्त्रणानि तावद् यथा दुर्लभानि न तथाऽन्यानि। यद्द्रव्यं नियन्त्रितमोचितं तस्य प्राप्तिः सुलभा भवति। परमेतेन रक्षणा निर्वाहो दुष्करोऽतो राज्यशासका नात्र मन्दादराः।

एवमन्यान्यपि सन्ति बहूनि लघूनि कारणानि यानि खाद्य-द्रव्याणां महर्घत्वेऽसुलभत्वे च बीजानि।

अत्रेयं शंका जायते द्वितीयमहाहव-जनसंख्यावृद्धि-प्रधान कारणयो रन्यत्र समानयोरपि कथं भारत एव खाद्य-न्यूनता?

**कथं भारत एव**

परेषु केषुचिद्विषयेषु तु प्राचुर्येणान्न सम्भवति। एवं हि श्रूयते पाताल-वासिनोऽन्येषु देशेषु लक्षातीता गोधूम-खारीः प्रेष्यापि संगृह्याप्यवशिष्ट सागरे प्रक्षिपन्ति दहित्वा वा केदारेषु प्रक्षिपन्ति। अत्रोच्यते—पाश्चात्येषु कृषिकर्षण विधयः परमामुन्नति प्रापिता। तत्र वैज्ञानिकै र्यन्त्रै रन्यैश्च प्रकारै रल्पीयस्या अपि भूमेः प्रचुरतरं व्रीह्याद्यन्न मुत्पाद्यते। कियांस्तावदत्रत्य-पाश्चात्यान्नोत्पत्तौ भेद इति चोपरिष्टादंकितया तालिकया विशदी भविष्यति—

| | तण्डुलम् | गोधूमः | भूमानम् |
|---|---|---|---|
| भारते | ७८ खार्यः | ४ खार्यः | प्रति-एकडम् |
| शर्मण्य देशे | — | १२ खार्यः | |
| इटल्याम् | ५५२ खार्यः | — | |

अनया तालिकया स्पष्टमेव यदत्र कृषि पद्धतिर्नोन्नता वर्तते। इदमेव मुख्यं कारणं येन विस्तृते विशाले ऽप्यत्र भारते खाद्यान्नानां न्यूनी भावो जरीजृम्भते।

खाद्यसमस्यां साधयितुं परिगणितेषूपायेषु तावत् "संक्षेपतः क्रियायोगो निदान परिवर्जनम्" इति भिषग्विद्यायाः सिद्धान्तो युक्तो वक्तुं प्रतीयते। अमी चोपाया राज्यशासकैरेवानुविधातुमर्हाः। तथाप्यस्माभिरपि नात्र विषये तूष्णीकै र्भाव्यम्। सन्त्यस्माभिरपि कर्तव्यानि कानिचन। तथाहि सूची-कटाहन्यायेनात्र तान्येव वर्णयामः—

उपायाः

अन्नप्रश्नमधिकृत्यानुयुक्तः श्री गान्धिमहोदयः पूर्वमवादीत्— यदि हि प्रतिपक्षमेक मेवाह सर्वे भारतीया निराहाराः फलाहारा एवोपवसेयुस्तदाऽन्नस्य दौर्भिक्षं न भवेत्।" अहो! कीदृशो विचारः। अत्र भारतीयशास्त्रेषु वर्णितमेकादशीव्रतमाहात्म्यमपि संगतार्थम्।

'अधिक मन्न मुत्पादयत' इति विचार लहरी लहरीव सागरस्य शासन विचारवात्योत्थापिता सर्वत्र सरति। शासकाश्चामुं मदुपदेशं सनियमं सानुनयञ्चानुवर्तयन्ति। अहल्या भूमयोऽपि हल्यन्तेऽधुना विविधोपायैः। उपवनोद्यानभूमिषु शाकाना मुत्पादन माश्रितम्। उत्तर प्रदेशेऽपि 'कांस गुल्मैर्व्याप्ता महीभागा अधुना कांसहीना विरचय्य कृष्यन्ते। भारतञ्च विदेशेभ्यः प्रत्यब्दं शतकोटिरूप्यकै रन्नं क्रीणाति। महतीयं सम्पत्तिर्वर्षं द्वयानन्तरमेवेतोऽन्यत्र

राज्य प्रबन्धाः

न गमिष्यत्युत भारतादन्यदेशेष्वन्नं गच्छेदिति भारतशासकै रुद्घोषितम्। एतदर्थमधुना विज्ञानरीत्याऽपि भूमिकर्षणं समाश्रितम्। कृषिकर्षणाय ट्रेक्टराः परमोपयोगिनः। एतै वृषभशतै र्मासेन हल्या भूमिरेकेनैव दिवसेन कर्षितुं शक्या।

अथ पञ्चनदेऽन्यत्रापि भाखराजलबन्धनस्य[1] नांगल महानदी हीराकुड दामोदरजलबन्धनादीनाञ्च कार्यं वेगेनोपक्रान्तम्। एतै रनेके प्रान्ता धन्वानोऽपि सस्यश्यामला भविष्यन्ति। एवञ्च नेदिष्ठ एव स समयो यदाऽन्न-दौर्भिक्षं व्यपगमिष्यति सुभिक्षञ्च भविष्यति।

यदि राज्यमस्माकं हितेच्छयाऽन्नवितरण-नियन्त्रणं नाकरिष्यत् तर्हि महामारीव व्यादाय वदनं व्याघ्रीव च दुर्भिक्ष-दुर्दशाऽस्मान् विशिष्याकिञ्चनान् नि सहायांश्चाग्रसिष्यत्।

अधुनाऽस्माकं खाद्य समस्या न तथा विषमा घोरा वा यथेयं सम्वत्सरान् २०११ पूर्वमासीत्। एषा समस्या प्रथम पञ्चवर्षीय-योजनायां शासनस्य ध्यानं विशेषेण चकर्ष। सम्वत्सरे २०११ आषाढ मासि महतीयं घोषणा कृता शासनेन यत् शालयः प्रदेशात् प्रदेशान्तरमनियन्त्रित नेतुं शक्याः। तस्मिन्नेव मासे प्रधानमन्त्रिणा श्री जवाहरलाल नहरु महोदयेन नांगल जलबन्धस्योद्घाटनं कृतम्। अयं बन्धः संसारस्य महत्त्वपूर्णबन्धेषु द्वितीयं स्थानं धारयति। एतस्योद्घाटनेन वर्षेऽस्मिन्नेव बहु अन्नमुत्पत्स्यते, शीघ्रमेव चेयं समस्या भूतकालिकी भविष्यतीति नो महत्याशा। एतत् सर्वस्य श्रेयः

---

१. बान्ध ( डैम )

श्री रफी अह्मद खाद्यमन्त्रिणोऽप्यल्पीयो नास्ति । स्व कुशाग्रबुद्ध्या दीर्घानुभवेन च सोऽस्मात् संकटादस्मान् ररक्ष । अचिरादेवायं खाद्यमन्त्रालयोऽपि समाप्तो भविष्यति, केवलं तु कृषिमन्त्रालय एव सर्वं कार्यं करिष्यतीत्यनुमातुं शक्यं विपश्चिद्भिः ।

---

## कश्मीर समस्या

**विमर्शसारः**—१ कबाइली जनानामाक्रमणम, कश्मीरस्य भौगोलिकं प्राधान्यम, २. प्रजापीडनम्, भारतसंघ-सेना-प्रवेश, ३. कश्मीरजनताया ऐक्यम्, भारतसंघे विलयः । ४ राष्ट्र संघस्य निर्णय-शैथिल्यम् ।

भूलोकस्य स्वर्गं भारतस्य च नन्दनं वनं कश्मीर । अयं चीन-त्रिविष्टप गान्धार[1] बाह्लीक[2] रूस देशानां भारतेन सह स्थल मार्गं संयोजयति । प्राक् भारतखण्डनादपि भारतेऽस्य देशस्य प्राधान्यमाकलयन्तो बृटिश शासका. पञ्चनदावस्कन्दनकाले कश्मीर विक्रयं महान्तं प्रमादमनुबभूवुः । अत एव ते कश्मीरस्योत्तरं परिसरं दरददेशं गिलगितं स्वप्रभुत्वे स्थापयितुं प्रायतन्त । जम्बुद्वीपस्य प्रधानतमं केन्द्रः कश्मीरः । वितस्ता[3]चन्द्रभागयो[4]रत्रैवोद्गमः । वनानिदूरदूरतरविस्तृतान्यत्रैव यानि दार्विन्धनयोराक-

*(पार्श्वटिप्पणी: कश्मीरस्य भौगोलिकं प्राधान्यम्)*

---

१. अफगानिस्तानमभिलक्षयति ।२ बलख ३ झेलम ४ चिनाब

राणि वन्यजन्तूनामोषधीनाञ्च। काष्ठकौशलस्य चात्र वैचित्र्यम्। निदाघदावदन्दह्यमाना भारतीया विदेशीयाश्चात्रैव समागत्य तुषारशिशिरस्य मरुतः सेवनेन परः शतानाञ्चान्येषां द्रव्याणामुपभोगेन स्वर्गसहोदरं सुखं विन्दन्ति। एवमीदृशोऽसौ कश्मीरदेशः। साम्प्रत सर्वस्यैव जगतो लोका. समाचारपत्रेभ्यः प्रत्यह कश्मीरोदन्तान् सोत्कण्ठ पठन्ति समाचारपत्राणि च दैनिकानि साप्ताहिकानि च कश्मीरमधिकृत्योदन्तान् वर्तमानान् प्रकाशयन्ति। कुर्वन्ति चोदर्ककल्पनास्तास्ताः। सेयमेव 'कश्मीरसमस्या' साम्प्रतं सर्वत्रैव प्रायः शोश्रयते।

सैषा 'कश्मीरसमस्या' कथमुद्भूतेति जिज्ञासायमुच्यते—चतुरुत्तर-द्विसहस्रसम्वत्सरे यदांऽगला भारतं स्वायत्तं खशानामाक्रमणम् चक्रु स्तदा तैरिदमुद्घोषितं यत्सर्वे भारतीयोपराज्यशासका' स्वतन्त्राः पाकिस्तानेन भारतसंघेन सह वा सम्मिलितुमथवा स्वतन्त्रमेव स्थातुम्। भारतस्य सार्धपञ्चसंख्यान्युप राज्यानि भारतीयनेतृणां नीत्यैकैकशो भारतीयमघे विलीनानि केवलं हैदराबादकश्मीरराज्य एवावशिष्टे। ( ततो हैदराबादोऽपि विलायित' )। तदानीं कश्मीरशासकेन विलम्बित यावत्खलु निर्धारितावधिरपि व्यतीत.।

अथ संवत्सरे २००४ विजयदशम्यां पश्चिमोत्तर परिसरौ कश्मीरराज्ये पाकिस्यानप्रोत्साहिता' खशा[1] सहसैवाचस्कन्दु.। ते

---

१ कबाइलीजना राजतरङ्गिणीषु 'खशा' इति संज्ञिताः। आसीदेषा वीरा क्षत्रियाणामेका जातिः। महाभारतेऽप्येतेषा खशा किकवसा इति संज्ञा।

बलवद्भिः पाकिस्तानबलैः शस्त्रास्त्रसज्जितैः सह तत्र पशुमारं प्रजा-जनानघ्नन्, दाराश्चापाहरन् सम्पत्तीरलुण्ठयन्। तदानीं 'लुण्ठत लुण्ठत, मारयत मारयत' इत्येतैस्तुमुलैर्नादैरेवापूर्यन्त दिशः। परः सहस्राणि मृतानि जनानाम् अनेके कान्दिशीका[1] काष्ठासु धावं धावं स्वासून् स्वकलत्रपुत्रान् सर्वस्वमपहायारक्षन्। दारुणोह्यासीत् स समयः कश्मीरस्य। संवादयानसंयोगोऽपि विनष्टोऽभूत्।

एतस्मिन्नन्तरे कश्मीरोपराज्याधीशो भारतसंघं प्रविविक्षुः भारत-शासकान् शरणमुपेत्य सेनासाहाय्यं भारतीयसेनायाः प्रवेशः ययाचे। अथ कश्मीरजनतायाः प्रधाननेता शेख अब्दुल्लामहोदयोऽपि कश्मीरप्रजायाः प्रतिभूपदमाश्रित्य भारतसंघेन सह कश्मीरं विलाययितुमीहमानः सेनासाहाय्यं प्रार्थयाञ्चकार। तदाऽत्यनुरोधेन भारतसंघमन्त्रिमहोदयास्तयोः प्रार्थनां स्वीकृत्य स्वसेनायाः महतीं सख्यां वायुमार्गेण कश्मीरान् प्रैषन्त। ततो भारतीया वीरसैनिका लुण्ठाकान् खशान् पाकिस्तान वाहिनीञ्च[2] विद्रावयामासुः। पकिस्तानाधिकृताश्च प्रान्ताः केचन पुनः कश्मीरराज्यमधिश्रिताः। संग्रामस्तु प्रावर्तत।

भारतीयास्तु—

इतस्तु पाकिस्तान-शासकानामन्यैव गतिरवर्तत। ते हि व्यक्तं समुद्घोपयन् यदस्माकं नास्ति कोऽपि कश्मीरस्याक्रमणे स्पर्शः। एते च स्वैरवृत्तयो लुण्ठाका मे पाकिस्तानेऽप्युपद्रवान् रचयन्ति। अथ यदा भारतीया वीरसेना तत्र युध्यपमाना पाकिस्तानस्य बहून्

---

१ भयद्रुताः २ सेनाम्।

सेना-नियन्तृन् साभिज्ञानं बन्दीचकार, टैकादीनि च खशानां नाम्नाप्यविदितानि स्वायत्तान्यकरोत् तदा भारतीयशासकै रनुयुक्ताः पाकिस्तान-मन्त्रिणः पुनरपि निषेधपक्षमेव दृढीकर्तुं प्रायतन्त ।

अथ कश्मीरनेतृभिः सह सम्मन्त्र्य श्री प्रधानमन्त्री नेहरू महोदयः कश्मीर-प्रश्नं राष्ट्रसंघसंसदि लेकसकसैस नगरे समुपास्थापयत् । श्रीनेहरूमहोदयस्तदानीं 'कश्मीरः केन सह सम्मिलेत् भारतेऽत्र ? इति सार्वजनीनं मतं संगृह्य कश्मीरे समवस्थितायां शान्तौ प्रतिनिवासितेषु च प्रोषितेषु निर्णेष्यते, भारतसंघस्तु काश्मीर प्रजाया प्रार्थनया स्वसेनां तत्र प्राहिणोत्, प्रतिवेशिराज्यस्य रक्षणमस्माभिः कर्तव्यम्' इति निष्पक्षभावना-धवल मजूघुषत् ।

राष्ट्रसंघे प्रश्न.

अथ लेक सक्सैसनगरे राष्ट्रसंघ सदस्याना कश्मीर प्रश्नमधिकृत्य विचारोऽभूत् । यद्यपि प्रश्नो नासीदति गहनः, तथापि तत्रेदं तदा निर्णीत यदेको गवेषणा[1] संघः कश्मीरं गत्वा तत्र सर्वं निभाल्य स्व[2] विवरण पत्रं समितिमुपस्थापयेत् ततो निर्णेष्याम । गवेषणासंघः कश्मीरे प्राप्तः प्रतिगतश्च । परञ्च तथापि न निर्णयोऽभूत् ।

इतस्तु राष्ट्रसंघ प्रेरणया कश्मीरेऽस्त्रविष्टम्भः ( युद्ध विरामः ) संवृत्तः । राष्ट्रसंघस्य सेना विशेषतः कश्मीरे पाकिस्तान कश्मीरराज्ययोः सीमारेखां निरधारयत् । ततो युद्ध-निरोधं घोषयित्वा

---

१. कमीशन ( कश्मीर कमीशन इति प्रसिद्धः ) २. रिपोर्ट ।

स्वसीमाभ्यन्तर एव सेना-सन्निवेशोऽभूत्। भारतसंघेन बह्वी सेना प्रत्यानीता च।

अथ राष्ट्रसंघेन श्रीमान् सर ओवन् डिक्सन महोदय. कश्मीरे प्रेषित· साधिकार वितरणाम्। तदानीमत्रत्याः साशंसं 'अधुना कश्मीरसमस्या त्वरितं निर्णेप्यते' इत्यूचु·। ओवन् डिक्सनस्तु मासचतुष्टय भारते ( कश्मीरेऽपि ) पाकिस्ताने च बहुशः सेनादि-निरीक्षणाय पर्यटत्, सममन्त्रयच्चोभयसचिवौ। अथ स 'यदा प्रतिगत स्तदा स्वविवरण-पत्रं राष्ट्रसंघमदस्यवर्गाय प्रादात्। किञ्च तत्रापि 'अन्तः प्रविश्य विज्ञातं यावच्चर्म च दारु च' इति भणितिरेव चारितार्थ्य लेभे। कश्मीरसमस्या च यथास्वरूपैव तस्थौ।

यदा खलु सर्वमिदमनपवाद सिद्धमभून् सप्रमाणं च यत्पाकिस्तान शासक प्रेरिता पाकिस्तानसेनैव कश्मीरे भारतीयसेनया सह युध्यते तदाऽन्यामनूरीकरण-गतिमपश्यन्तः

**पाकिस्तानस्य वृत्तम्**

पाकिस्तान शासका गतत्रपा इव मौनमाश्रित्य 'मौनं स्वीकार लक्षणम्' इत्युक्त्या मौनेनैव कश्मीरास्कन्दनं स्वीचक्र·। पाकिस्तानस्य प्रधानामात्यः श्रीलियाकत-अलीखानो यत्र तत्र 'कश्मीरो यवनाध्युषित स्तत्रास्माकं धर्मयुद्धं[1] तावत् वर्त्स्यते यावद्वयं तं न हस्तयाम.' इत्येव रारटीतिस्म। श्रूयते च पाकिस्ताने तत्रत्या जननायका स्तत्रत्यान् निर्बोधान् धर्मान्धमतीन् 'कश्मीरे धर्मयुद्धाय मौसलधर्मस्य च रक्षायै प्राणानप्यविगणय्य गच्छत' इत्युत्साहयन्तोऽहर्निशं वर्तन्तेस्म। समाचार-पत्राण्यपि तत्र

---

१ 'जहाद्' इति यवनभाषायाम्।

बहूनि जनतोत्साह-प्रदानि कश्मीरवृत्तानि प्रायो मिथ्याभूतानि प्रकाशयन्ति स्म ।

कश्मीरं परावस्कन्दाद्रक्षितुं शान्तिं च स्थापयितुं भारतीया कम्पना[2] शिविराः स्कन्दावाराश्च[3] कश्मीरे (सजम्बूप्रान्ते) संस्थापिता। कश्मीरप्रजा स्तण्डुलगोधूमचूर्णशर्करावसनादि द्रव्याणीतो भारतसंघादेव प्रेषितानि तत्राल्पीयसा मूल्येनालभन्त ।

कश्मीरे भारत साहाय्यम्

अथापि लक्षातिक्रान्तानि रूप्यकाणि च भारतसंघादेव कश्मीरराज्येण लब्धानि ऋणरूपेण येन तत्रत्यान्तरंग स्थिति नं दुःस्थाऽभवत् । चेद् भारतसंघस्येदृशी सहायता नाऽभविष्यत् तर्हि कश्मीरप्रजा दुर्भिक्षाद्युपद्रवै र्महतीं दुरवस्थां प्राप्स्यत् । धन्याऽस्माकं मान्या वदान्याश्च शासका धन्यं च कश्मीर प्रधान-मन्त्रिण' स्वदेशवात्सल्यं दूरदर्शित्वञ्च ।

कश्मीरेऽस्त्येको लोकसंघ' 'अखिलजम्मू[4]कश्मीरमण्डललोकसम्मेलनम्' इति ख्यातः । एतस्यैवाध्यक्षैः प्रधानोपप्रधान मन्त्रिभिश्च सुबहुवारमिदमुद्घोषितं यत्कश्मीरो भारतसंघे विलीनः। उक्तमासीत् तत्रत्येन मुख्यसचिवेन 'कश्मीरप्रजा नास्ति मेषाणामजानां वा यूथरूपा यस्याः स्वेच्छया विनिमयोऽन्यै' क्रियेत' इति। अथापि सोऽवोचत्—कश्मीरलोकसम्मेलनं जनमतेन व्यवस्थापिकासभां रचयिष्यति। तस्याः सदस्या एव पाकिस्तानभारतसंघयो

---

२. सेना निवेशाः क्षुद्रा. । ३ छावनी । ४ आलजम्मूकश्मीर नेशनलकानफ्रैन्स ।

रितरन्मतग्रहणेन स्वीकृत्य तेनैव सह कश्मीरं विलीनी करिष्यन्ति ।"
इति । इदञ्च श्रीनेहरूमहोदयेनापि प्रधानमन्त्रिणानुमतम । अहो !
श्री नेहरूमहोदयस्योदाराशयता ? तदनन्तरं सा व्यवस्थापिका सभाऽपि
रचिता । तया च सनिश्चयं कश्मीरस्य भारतेन सह विलयो निर्णीतः ।

अथाधुनेदं समवधेयं विवेच्यञ्च, अद्यत्वे भूमण्डले द्वे महती शक्ती
बलवद्राष्ट्र समुत्थिते । तयोरेकान्यामभिभवितु ग्रसितु च सन्नणा ।

विश्वशन्ति. कश्मीर समस्या माश्रिता

भारतञ्च महदेकं राष्ट्रम् । एनस्य सर्वतो
भद्रामुन्नति प्रेक्ष्य बलवन्तो देशा एन
स्वाङ्गभूतं विधातु प्रयतन्ते । केऽप्यस्य
शक्ति प्रधृष्यावनतिमीहन्ते । केऽपि साहाय्यम्
इतस्तु कोरिया प्रदेशोऽपि सग्रामे चलति
तत्र रक्तचीना. समाजवाद-परायणा. पातालदेशवासिन. पराजित्य
दक्षिण कोरिया भागान् बहून् पुन र्हस्तितवन्तः । इतस्तु रूसप्रदे-
शोऽपि राष्ट्र संघस्य नीत्या न सन्तुष्टः । अमेरिका-शासका अपि
युद्धाय सयत्नाः । एवमेतादृशीं दशां पर्यालोच्य जगतः को नु वक्तु-
मीशो विश्वशान्तिर्न भंक्ष्यति ? परमहिंसा मार्गमनुसृत्यास्माकं
प्रधानमन्त्री श्री नेहरू महोदय एव विश्वशान्तिं रक्षितु नक्तन्दिनं
प्रयतते । अत एव श्रीनेहरूमहोदयो गत लण्डनयात्रायां सकलराज्य
प्रधानमन्त्रि-सम्मेलने विश्वशान्ति-पालनं सानुरोधमभापत ।
एवमेव स एशिया वास्तव्यानां स्वातन्त्र्यमभिरक्षितु विश्वशान्तिच
स्थिरीकर्तु म् 'एशिया भूखण्डस्य सकल प्रधान मन्त्रिणां सम्मेलनम्

आह्वयामास, पूर्व एशियायां (इंडो चीन देशे) युद्ध विरामाय च भृशं प्रायतत ।

संक्षिप्येदमुच्यते—कश्मीरहातुं न कामयन्ते भारतशासका, न च कश्मीर राज्याधिकारिणोऽपि भारतसंघात्पृथग्भाव उपसंहार वाञ्छन्ति । पाकिस्तानाधिकारिणस्तु कश्मीरजये सानुबन्धा पाकिस्तान-अमरीका सन्धावपि रहस्यमेतदेव प्रतीयते । यदि कश्मीर समस्यामाश्रित्यपाकिस्तान-भारतसंघयो वैमनस्यं न व्यपेष्यति तर्हि महती दु:स्थितिर्भविश्री, शान्ति-भङ्गोऽपि भविता । तदानीं विश्वशान्तिरपि कथं स्थिरा भवितुमर्हति । अतो राष्ट्रसंघेन द्रुततरमेव विश्वशान्तिरक्षणायोभयपक्षानुकूलं किमपि पथ्यं न्याय्यञ्च निर्णेतव्यम् । संहृत्य चैषा कश्मीर समस्या साधनीया विश्वशान्तिश्च पालनीया ।

---

## प्राच्यपाश्चात्य सभ्यतयो स्तारतम्यम्

**विमर्शसार:**—१. भारतीय आदर्श । प्रवृत्तिप्रधाना पाश्चात्या, भारतीया निवृत्तिप्रधाना । २. शान्तिप्रियता, क्रान्तिप्रियता । ३. धर्मप्रधानता, शरीरसुखप्रधानता । ४. आत्मवाद:, अहिंसावाद:, सत्यम्, सारल्यम्, विश्वबन्धुत्वम्, भारतीयसभ्यतायाम् । ५. पाश्चात्यसभ्यतायान्तु बलमेव प्रधानम् । नास्तिकवादश्च ।

प्राच्यपाश्चात्यसभ्यतयो' का ज्यायसीति प्रकृतो विषयः। प्रकाशतमसो. शैत्यौष्ण्ययोराकाशपातालयोरन्तर इवात्र तारतम्यकृतो विशेष.। परं यथा तम प्रकाशयोः सत्यपि पार्थक्ये सदेशवर्तित्वं परस्पर मापेक्षत्वञ्च यथा वा शैत्याभाव एवोष्णतायाः सत्त्वमतोऽस्ति तयोरपि कोऽपीतरेतरापेक्षी सम्बन्धः। एवं पाश्चात्यप्राच्यसभ्यतयोः सत्यपि महति भेदे द्वयोरेकलोक प्रसारोत्थं समानाश्रयत्वमस्त्येवात उपयुज्यते तारतम्यविवेचनम्। बहुरूपममपीदं तारतम्यं समस्य कतिपयैरेव प्रधानै साधर्म्यवैधर्म्यनिरूपणैरिह विवेचयाम —

उपक्रम·

प्राच्य शब्देनेह भारतीय शब्द एव ग्राह्यः। प्राच्य देशेष्वस्ति भारतीयैव सभ्यता प्रथिता भारतमेव च प्रधानम्। अतो भारतीयां सभ्यतां पाश्चात्यदेशानां हरिवर्ष[1] पातालदेशानाञ्च[2] सभ्यतामाश्रित्य प्रस्तुमस्तावदिह—

इह हि भारते सर्वाणि निगमागमादीनि निवृत्तिमेव प्राधानां मन्यन्ते। अत्रास्माकं प्रातः स्मरणीया ऋषयो मुनयो वीतरागाश्च परः शतानि वर्षाणि संसारमेवासारं कलयन्तस्तपांसि तेपु.। अत्रत्या महीपतयः कोट्यधीशाः पुरुषा अपि राज्यमेकातपत्रं प्रचुराञ्च श्रियं तिरस्कृत्यारण्येषु गुहासु च समाधिमाकलय्य साक्षात्कुर्वन्ति स्म तत्परमं ज्योतिः। अद्यापि पश्याम एवात्रभारते

प्रवृत्तिनिवृत्ती

---

१. हरिवर्षम्—यूरोपभू खण्डम्। २. पातालम्—अमेरिका भूखण्डम्

सन्ति जना ये संसारमशाश्वतं मन्वानाः कैवल्यमेव परं निःश्रेयसकरं ज्ञात्वा वैराग्यबुद्धयो भवन्ति।

अथ पाश्चात्येषु सर्वेषां जनानामुपाया सर्वाश्च क्रिया. प्रवृत्तिप्रधाना एव दरीदृश्यन्ते। तत्रत्या शरीरपोषणं सम्पत्त्यर्जनमेव च जीवनस्य चरमं लक्ष्यं मन्यन्ते। भारतीयानामास्तिकता सहजो गुण इव सर्वेषु बाह्याभ्यन्तरव्यवहारकलापेषु व्यज्यते। पाश्चात्येषु नास्तिकतेति च नैसर्गिको भाव.।

भारते तावत्सर्वे प्रायो धर्ममेवाभ्युदयनिःश्रेयसकरं जानन्ति। पाश्चात्ये धर्मस्त्वन्यथासिद्ध इव नाति सम्मतः। वयन्तु "मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि" इति सिद्धान्तमनुसृत्य कर्माणि कुर्म। पाश्चात्यास्तु फलेहामवमत्य कर्मानुष्ठान मौर्ख्यमाकलयन्ति। अत्र 'यतो धर्मस्ततो जयः' इति धर्म एव कार्यसिद्धौ हेतु.। पाश्चात्ये प्रार्थनागृह[1] एव तस्याभ्युपगमः।

अत्रत्याः शान्तिमेव सर्वत्र शर्मदात्रीमाकलयन्ति। तथाहि 'अशान्तस्य कुतः सुखम्' इति भगवद्वाक्यमपि शान्ति क्रान्तिश्च शान्ति सुखैकसाधनरूपां दृढयति। अत्रत्या समस्त-सामन्तमौलिमुकुटरत्नचुम्बितचरणा सार्वभौमा भूपा अशोकसदृशाः परिपन्थिनिवहानपि शरणमागतान् निर्भयान् विधाय भ्रातृनिव मत्वा शान्तिमेव स्थापयितुं प्रायतन्त, न च वृथा लोभेन द्वेषेण वा दारुणानाहवान् चिकीर्षन्ति स्म। अद्यापि संसारस्य महापुरुषः श्रीगान्धीमहाभागोऽहिंसाधर्मप्रचाराय सर्वस्व-

१ चर्च (गिरिजा गृहं)

मान्यहासीत् । श्रीजवाहरलाल नेहरू महोदयः प्रधानमन्त्री च सत्यपि सामर्थ्ये विश्वशान्तिं रक्षितुं यान् यान् प्रयत्नाननुतिष्ठति न तेऽति-तिरोहिताः प्रेक्षावताम् । इयं भारतीया सभ्यतैव भारतीयानां शास्त्राणां संस्कारप्रभाव एव यद्रञ्जितोऽस्माकं प्रधानमन्त्री संसार-स्यैव कल्याणमभीप्सति । किञ्च पाश्चात्येषु कुत्र शान्तिः ? तत्र क्रान्तेरेव सर्वत्र दुन्दुभिनादो बोभवीति । तत्रत्या साम्राज्यवा-दिनस्तु सर्वमेव ग्रसिष्णव सर्वस्यैवाधिपत्य कामयमाना लोलुपतया क्रान्तिमेव समाश्रयन्ते । हीरोशिमानगरे परमाणुबमं प्रक्षिप्य तत्र-त्यान् परः सहस्रान् जनान् सपुत्रकलत्रान् भूम्या सार्धमेव केऽदहन ? अद्यापि कोरियाहवे केषां परमाणुबमविभीषिकाः श्रुतिगोचरी भवन्ति ? के तावत् मानवानां कल्याणायावतीर्णमिवा-यतनीयं विज्ञानमपि मानवविनाशायैव व्यापारयन्ति ? इमे कलह-क्रान्तिप्रियाः पाश्चात्या एव । किमस्ति तत्र कोऽपि शासको यो ह्यस्माक प्रधानमन्त्रिवद् शान्त्यै प्रयतमानो नक्तन्दिनं लोकसुखमेव चिन्तयन्ति ?

> सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
> सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥

इति समस्तमानवजातिसुखाय प्रत्यहं प्रार्थयन्ते । किञ्च पाश्चात्येषु नैतादृशो उदारो विचारः । पाश्चात्यसाहित्ये हि "बल-मेव प्रधानम्[1]" 'बलवत्तम[2] एव जीवितुमर्हः' 'स्वगृहमेव[3] पोषणी-

---

1 Might is right. 2 Survival of the fittest
3 Charity begins at home.

यम्' इत्यादय आभाणका एतदेव व्यञ्जयन्ति यत्तत्रत्याः समस्त-मानवसुखपराङमुखा एव। अत्रत्यास्तु—

अयं निज परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम्॥

इति सर्वामेव विश्वम्भरां कुटुम्बमेवागणयन्। अत्रत्या अशोक मेघवाहनादयो नृपतिवरा मानवकल्याणायैव राज्यं स्वीकृत्य वसुधां शशासु। स्वप्न एव राज्यं प्रयच्छन नृपतिर्हरिश्चन्द्रो राज्यं विहाय दासभाव स्वोकृत्य सत्यमपालयत्। भगवान् रामोऽपि—"आराधनाय लोकस्य त्यजेयं जानकीमपि।' इति प्रजानुरञ्जनमेव महान्तं धर्ममाकलय्य स्वसुखं चापरिगणय्य राज्यमकरोत्। परं पाश्चात्यास्तु दूरेऽपास्तं तावदेतेषामुदाराणां चरितानामनुकरणम्, एतेषामेतानि चरितानि राजनीतिविमुखानि वैधेयबुद्ध्या चरितानीति वदन्ति। शरणागतस्य क्षुद्रस्य कपोतस्य रक्षणाय स्वदेहं श्येनायार्पयतो महाराजस्य शिवे—

'न त्वहं कामये राज्यं न सुखं नापुनर्भवम्।
कामये दुःख-तप्तानां प्राणिनामार्तिनाशनम्॥'

इति वचनं क्व ? क्व च पाश्चात्येषु नरपतीनां गार्ध्याभिभूता बुद्धयः।

'एकातपत्रं जगत प्रभुत्वं, नव वय कान्तमिदं वपुश्च।
अल्पस्य हेतो बहु हातु मिच्छन् विचारमूढः प्रतिभासि मे त्वम्॥'

इनि मुनि-होमधेनु-रक्षणाय स्वदेहं प्रयच्छन्तं ककुत्स्थकुलनन्दनं दिलीपं प्रति कुम्भोदरस्योक्ति स्तावत् पाश्चात्य-चरितमनुहरति। तत.

"क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीत-वृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥"

इति दिलीपस्य प्रतिवचनञ्च भारतीयं चरितमनुवदति ॥

**सामाजिकं जीवनम्**

भारतीयानां जीवनं परिवार-प्रथा-पोषितम् । अत्र कुटुम्बपोषणं मुख्यं कर्तव्यम् । अत्र मातापितरौ वन्दनीयौ पोषणीयौ । ज्येष्ठा अपि भ्रातरः स्वसारश्च तथैव । विकलाङ्गाः कृशा वर्षीयांसोऽर्जितुमसमर्थाः परिवार-स्थिता पुष्यन्त एव । पाश्चात्ये तु 'दम्पती' इत्येव गार्हस्थ्यम् । स्तनन्धयात्परं वयो जुषाणाः शिशवो दूरं छात्रा-वासादिषूपन्ते ततस्तत्रैव गान्धर्वेण विधिना कृतोद्वाहास्ते पृथगेव निवसन्ति । मातृपित्रोर्दर्शनं मित्रवद् कादाचित्कमेव । कतिचना-ङ्गलसभ्यता-रञ्जिता भद्रपुरुषास्तु पाश्चात्यानामिदं चरितमनु-कुर्वन्तीहापि परं नैतदत्र सार्वत्रिकम ।

पतिमेव सर्वस्वं मन्यमाना भारतीया नारी प्राणपणेनापि स्वपत्युः सुखं कामयते । भर्तारमेव तोषयितुं रञ्जयितुं च स्वात्मानं परि-ष्करोति । विना पत्युराज्ञां न किमप्याचरति । जननी भावमुप-गताऽत्रत्या वनिता पुत्रवात्सल्येन स्वात्मानं विनोदयन्ती स्वसुखं तिरस्कृत्यार्भकं पालयति पोषयति च । प्रवयसञ्च तं सदारं दृष्ट्वा नन्दति धन्यञ्चाकलयति स्वात्मानम् । परं पाश्चात्या नारी कीदृशी . . . . । तत्रत्या नार्यस्तु वर्षाभ्यन्तर एव तन्त्रपतिसदने गत्वा पत्यन्तरं गच्छन्ति । नृत्यशालासु नर्तनन्तत्रत्यानां वनितानां स्वकीयैः परकीयै र्वा सह प्रशस्यत एव । लज्जा हि तत्र कोपेष्वेव न लोकेषु ।

कौमारञ्च जीवनं तत्रत्यानां नारीणा मव्याहतमेव। कृतोद्वाहापि यदि पतिं विरहय्य समामतिवाह्यान्येषु स्थानेष्वन्यैः सह प्रत्यागच्छेत् तस्याः पतिर्न तास्याश्चरितं शकितुमर्हति। एवं पतिरपि चेदन्याभिर्नारीभिः सह संवसेत् सोऽपि न शकनीयः।

एतादृशैश्चरितैस्तत्र प्रत्यहं नराणां नारीणाञ्च पारस्परिकः स्नेहतन्तु स्तनूभवति। अत एवधुना पाश्चात्येषु गृहस्थजीवनसुखान्यल्पीभूतानि परिवार प्रथापि क्षीणप्राया। अस्य को भीषणः स्यात्परिपाकः ? इति तत्रत्या दूरदर्शिनो विचक्षणा रारटन्ति। परं कस्ताञ्छृणोति ? यदि हि तत्र राज्यशासनं न साध्वभविष्यत् तर्हि सभ्यतयैतया लोकानां महती दुर्गतिरभविष्यत ?

वयं पादौ प्रक्षाल्य निरुपानत्का एव देवालयान् प्रविश्य शुचौ समे च देशे समुपविश्य प्रार्थयामो वाराधयामो वा देवान्। पाश्चात्यास्तु सोपानत्का एव प्रार्थनागृहं प्रविश्योत्थायैव वन्दन्ते प्रार्थयन्ते चेश्वरम्। तत्रोपानहौ धर्मदीक्षितावेव स्तः। पुरीष मुत्सृज्य मसृणपत्रैरपि तत्र शौचं विधीयते। सपादत्रा एव त उत्कटकासनासीना अश्नन्ति। 'खादतमोदत। पचतभृज्जत।' एवमेव तेषां वासरः। परं भारतीयास्तु भोजनशुद्धिमेव मनः शुद्धौ बीजं मत्वा वर्तन्ते। वयं शाकाहारप्रिया स्तत्रत्यास्तु पललाशिनः। ते च प्रत्यहं मदिरां पानीयवत् सेवन्ते। न चैतच्छ्रेयस्करम्। एतानि हि व्यसनानि तेषां शरीरमपि जरयन्ति सममर्थेन। सन्ति पाश्चात्येषु बहव उग्रा गदा. सुरा-सम्भूताः। वयन्तावत् समागतान् सम्मिलि-

शिष्टाचार.

तान् वा जनान् नमस्कार्यान् अञ्जलिं वद्ध्वा शिरसा वचसैव वा नमामः पाश्चात्यास्तु करयोर्मिथः सकम्प-सम्मेलनेनैव सभाजयन्ति। बह्वो हि संक्रामका रोगाः स्पर्शजाः। अतो न जात्वपि करस्पर्शो वरीयान्। अथापि सन्त्येवं बह्वो भेदा. प्राच्यपाश्चात्यसभ्यतयोः।

अस्मास्वपि बह्वो दोषा., पाश्चात्येष्वपि बह्वोऽनुकरणार्हा गुणगणाः। पर सभ्यता तु भारतीयैव शिष्टा। अतः 'अनुकरणं शिष्टस्य भवति न त्वशिष्टस्य' इति नीति-मनुसृत्यास्माभिर्न जातु पाश्चात्यानां सभ्यताऽनुकरणीया। काममस्माक वचनमन्ये 'परस्परं प्रशंसन्ति, अहो रूपमहो ध्वनि.' इति भणितिसमानं मन्यन्ताम् परं भारतीयाः प्राच्या महापुरुषा पाश्चात्या अपि वह्वो भारतीयां संस्कृति सभ्यतां च प्रशशंसु शंसन्ति च।

उपसंहार.

---

# स्वतन्त्र भारतस्याद्या वर्षचतुष्टयी

**विमर्शसारः**—१ खण्डिता स्वतन्त्रता, विभाजनोत्तरा दुःस्थितिः। २. शरणार्थिनां प्रबन्धः, गृहोपद्रवशामनम्। ३. सकल विश्वराष्ट्रेषु भारतस्य ख्यातिः। ४. उत्तरोत्तरोन्नति., ५. शोकः। ६. कर्तव्यम्।

पञ्चपञ्चाशतोऽप्यधिकान् संवत्सरान् स्वातन्त्र्यलाभाय समस्तावनीतल-विश्रुतै भारतीयै गान्धीप्रमुखै जननायकैः सममनेकै

भारताभिजनै रनेकानि कष्टानि सोढानि,

स्वतन्त्रताया प्राप्ति. स्वजीवनस्य महीयान् भाग. कारास्वेव साहं साहं परःशता. कदर्थना' यापितः। अस्मिन्नर्धशताधिककालेऽनेके भारतीया देशवत्सला वीरा स्वातन्त्र्य-यागे स्वासून् समाजुहवु । आसोदिदं प्रशान्तं धर्मयुद्धम्। रूमादिदेशा महता जनसंहारेण स्वतन्त्रा अभवन्। परमिह ऋते शस्त्राणां प्रयोगात् विनैवातिरक्तपातेन चिराय दासताया निविड-शृंखलाभिर्निगडिताऽस्माक जन्मभूमि मुक्ताऽभवत्। चतुरधिक द्विसहस्रसम्वत्सरस्य श्रावणमासि चरमे दिवसे भारतं स्वतन्त्रमघोषयन् बृटिशराज्य शासकाः। आसीदेतत् परम मंगल-मयं समभिनन्दनीयतमञ्चाहो भारत देशस्य।

अथ स्वातन्त्र्य-लाभादनन्तर-माद्ये वर्ष-चतुष्टये समाज-राज्य-नीति-प्रबन्धादिविषयेपु कि किमिह वृत्तम् ? स्वतन्त्रसरणि मधिकृत्य वयं कियन्तमध्वानमागता ? कीदृशी चोन्नतिरभून् ? इत्येप प्रकृतो विपय'। अमुं विषयमवलम्ब्यैवेह किञ्चिन्मीमांसयामः।

शरणार्थिनां दशा भारत भूमिः स्वतन्त्रा सवृत्ता खण्डिता चाभवन्। अस्या द्वौ भागौ बृटिश शासकै पाकिस्तानेति नाम्ना मुसलमानाना मधिकारे कृतौ यत्र सार्ध कोटिद्वयकल्पा हिन्दु-जना अपि न्यवसन्। किञ्च यदैव मुहम्मदानां प्रभुत्वमंग-बंग-सिन्धु-पञ्चनदेषु भारत भागेष्वभवन् तदैव तत्रान्यैव दशा वचसामग्यगोचराऽकल्पिता दारुणतमा ऽभवन्। मुसलमाना सेना-सहाया पशुमारमघ्नन्

हिन्दून्। कुमारी स्तरुणीश्चार्यदारा अपाहरन्। गृहाण्यदहन्। क्षीरोष्ठानेवार्भकान् छुरिकाभिर्व्यदारयन। वर्षीयस' पलित-शिरोरुहान् 'त्राहि त्राहि' इत्यार्तवचसा क्रन्दमानान् प्रक्रमितुमप्यक्षमान वृद्धान करवालै' शिरः च्छिन्नानकुर्वन। सम्पत्ती रलुण्ठन्। सर्वत्राति दारुणतराऽश्रुतपूर्वा नृशंसतैव जरीजृम्भतेस्म। अथातंककम्पितानां हिन्दूनां प्राणान् रक्षितुमनेके सार्था स्वकीयानि पूर्वज-पालितानि गृहाणि चिर-निवास-भूतां प्रियतमा भुवञ्च विहाय पाकिस्तानेति नव संज्ञया ख्यापितं भारतभागं विहाय भारतसंघं प्राविशन। इतस्तु तदानी भारत-सघास्यापि पर्याकुला स्थितिरवर्तन। नवीनैव स्वतन्त्रता, दुर्व्यवस्थितानां शासनपद्धतीनां परिष्करणम, इत प्रजासु प्रसृत आतंक, इतश्च पश्चिमपञ्चनदादनेकेषां 'शरणार्थीति कृताभिधानानां प्रोषितानां पीडितानां रक्षणं सुव्यवस्थापनमिति किं कि न तदा दुःखावह समुद्वेगकर मभून। शरणार्थिनां सार्था अपि षष्टि लक्षमिता आसन। अथास्माकं नायकवरै शासक-पदमलंकुर्वाणै भारते सुबहुत्र शरणार्थिनां शिविरा. स्थापिता', निःशुल्केमेव रेलयानैर सख्या शरणार्थिनः संकट-स्थानेभ्यो निष्कास्य शिविरेषु प्रापितास्तत्र च तेभ्यो वसनानि, भोजनं, दुग्धं विना शुल्केन प्रदत्तानि। गदातुराणामुपचर्यायै परिचारिकाःपरिचारकाश्च नियुक्ता.। चिकित्सालया उद्‌घाटिता यत्रागदकारा' सुनिपुणा नियोजिता'। पाठशालाः समुद्‌घाटिता। एवमयं क्रमो वत्सरद्वयं यावत्प्राचलत्। अद्यापि क्वापि शरणार्थिनां शिविरेष्वीदृश्येव व्यवस्था वर्तते। नासीदिदं सुशकं कार्यम्। बृटिशानां शासने बंगदेशस्य दुर्भिक्षेण

पञ्चाशल्लक्ष लोकाः कालेन कवलिताः । किञ्च धन्यं वदान्यं च धैर्यमस्माक शासकानां ये हि षष्टिलक्षमितां हिन्दु-जनतां पालयन्तस्तदा 'प्रजाः प्रजानाथ पितेव पासि' इत्यादर्शं मदर्शयन्। शासकै निर्गृहाणां निवासनाय पूर्वपञ्चनदेऽन्यत्रापि वर्ष चतुष्टय-काल एव सुपरिष्कृतानि सदनान्यपि निर्मापितानि येन पटभवनेष्वेव निवसतां जनानां कष्टानि व्यपगतानि ।

**आभ्यन्तरा उपद्रवा**

लक्षातीतानां शरणार्थिनां भारतसंघे प्रविशतां दयनीयतमां दशां दृष्टवाऽन्येषां हिन्दुजनानां मनसि पाकिस्तान-निवासिना मुहम्मदानां विषये भारतसंघे च वसतां तत्सधर्मिणां विषयेऽनेके दुर्विचाराः प्रादुर्बभूवुर्द्वेषघृणा-मिश्रिताः । नासीदनैसर्गिकमेतत् । परं तदानीमति निपुणया धिया शासकै रेष मुहम्मदानां विषये द्वेषघृणा समुत्थितो वह्निः समिद्धोऽपि शान्त्यैक्यो पदेशवारिणा प्रशामितः । तथापि क्वचनास्य प्रतिक्रिया समदृश्यत । तथाहि 'यदि पाकिस्तानं मुसलमानानां तर्हि भारतमपि हिन्दूनां राष्ट्रम्' इति डिण्डिमं वादयन्तो राष्ट्रीयसंघस्यानेके स्वयंसेवकाः शासकानाम् ऐक्यनीतिमधिक्षिपन्तः कारासु प्रवेशिताः । हन्त, परं नास्माक शासकानां नीतिर्विपर्यवर्तत । अथ राष्ट्रसंघशासकयोः सन्धिः सञ्जातः । स्वयंसेवकाश्च पुनर्विमोचिताः । पञ्चनदे सिक्खा अप्युपद्रवान् रचयितुं प्रारभन्ताधिकारानीहमानाः । किञ्च तेऽपि साम्नैव शासकैः प्रशामिताः । एतस्मिन्नेवान्तरे हिन्दी भाषां राष्ट्रभाषां प्रचारयितुकामानां भेरीरवा अप्यश्रूयन्त । अमीषां साम्नैव

शमनमप्यासीद् अत्यावश्यकम्। तदपि मेधाविभि· शासकैस्तथा विहितं यथोभयपक्षयोरेव वैमत्यं विगतम्।

अथ स्वतन्त्रतामवाप्तेऽपि भारते महती शङ्कातंककारिणी दारुणा भीषणतमा च स्थिति रुपराज्यानामवर्तत। सार्धपञ्चशताधिकानि इहाभूवन् उपराज्यानि स्वतन्त्रम्मन्यैः सामन्तै र्माण्डलिकैश्चाधिकृतानि। न हि नाम कोऽपि पराधीनतामीहते। कांग्रेसस्य नेतॄणां लब्धशासनानां ते किमर्थमाधिपत्य स्वीकुर्यु·। एवं च नवजातं भारतसंघराज्य तेषां बृटिश शासनोपप्लावितानां पुरो भेकाकुलं पंकिलं पल्वलमिवासीन्मरालानां नलिनीदल स्यन्दमानमकरन्द बिन्दु-शवलेषु कासारवरेषु निवास-शीलानाम्। एतादृशीयं दु स्थितिरपि मदोन्मत्ता करिणीव नियन्त्रिता प्रज्ञांकुशप्रयोगेन शासकैः। उपराज्यानीमानि विशालराज्यसंघै विभज्य भारतसंघशासने विलायितानि। अत्र लौहपुरुषस्य तदानीमुपप्रधानमन्त्रिणः श्री पटेलमहोदयस्य नैपुण्य प्रज्ञाबलञ्च विशिष्य प्रशंसामर्हति। एतेन भारते कुरुपाण्डवकालीनमिव सुदृढं स्वातन्त्र्यं सार्वभौमं च बलं प्रतिष्ठापितमभूत्।

हैदराबाद विजयः

भारतस्योपराज्यानि वियति वात्याहता विच्छिन्नाभ्रस्तोमा इव भारतसंघे लीनानि। परं बृहत्तममेकमुपराज्यं सुदृढशासकाधिकृत मविलीनमेवासीत्। एतच्च 'हैदराबादोपराज्यं भारतस्य कुक्षिनिक्षिप्तो विद्रधिरिव भृशमपीडयत् सर्वान् भारतीयान्। पश्चिमपञ्चनदे पूर्वबंगे वा या दशाऽल्पसंख्यावताम् आर्याणामभवत् सैवात्र

बहुसंख्यावतां तेषामभवत् संपन्नेऽपि भारते स्वतन्त्रे । ततोऽपि हिन्दुसार्थाः कदर्यैर्जाल्मैश्च कदर्थिता निष्क्रमितुमुपचक्रमिरे। एवं पश्यतोऽप्यस्माकं शासका न किमप्यतिप्रतिक्रियात्मकमकुर्वन् इति विचारयतां तदानी मार्यप्रजानां हृत्सु महानसन्तोष एधयामास। परमहो अस्माकं शासकानां नीतिगाम्भीर्यम्! सप्ताहमेव पुलिस-पुरुषाणां वित्रासनेन तत्र शान्तिरभूत् । उपराज्यं भारतसंघे विलीनम्। आतंककारिणो निगडिता । न शोणितपातोऽभूत्, कार्यसिद्धिरपि सञ्जाता। अयं मेधाविनां शासकानां महीयान् विकत्थनीयश्च विजय ।

कश्मीर समस्या

हैदरावादवदेव कश्मीरोपराज्यमपि वर्तते। अत्र म्लेच्छखशानामवस्कन्दोऽभूत्। तत पाकिस्तान सेनाऽपि तेषामाक्रमणकारिणां साहाय्यमाचरन्ती शस्त्रैरस्त्रैश्च युध्यमाना कश्मीरानाचक्राम। तत्रत्या प्रजानायका उपराज्याधीशश्च भारतसघे कश्मीरं विलिलाययिषवः साहाय्यमयाचन्त शासकान् । भारतीया वायुसेना स्थलसेना च तत्र प्राप्ता । तत्रापि शान्तिरभूदाभ्यन्तरे प्रदेशे । प्रजानामातंकोद्वेलितानां त्रासो व्यपेतः । ततो भारतसंघेन कश्मीरसमुन्नतिधिया तत्र पञ्चशताधिकक्रोश दीर्घा. सुमार्गा प्रणीताः, शैलेषु सुरंगा रचिताः, लौहानि प्रतरणानि निर्मापितानि, परिसरेषु मध्यभागेऽपि सेनाशिविरा. स्कन्दावाराश्च निवेशिता, कश्मीरप्रजायै लघुमूल्येनैव लवणशर्करातण्डुलवसनादीनां वितरणस्य प्रबन्धो विहितः।

'क्षते प्रहारा निपतन्त्यभीक्ष्णमिति हि वृद्धा आमनन्ति। एवं तस्मिन् संकटमयेऽनेहसि स्वतन्त्रभारतस्य

**गान्धि महात्मनां हत्या**

शासकवराणां जननायकानामुपर्येका महती विपदापतिता। विश्वस्य महापुरुषो भारतीयस्वतन्त्रताया: कर्णधारो राष्ट्रपिता श्रीगान्धी महात्मा विरहय्यास्मान् पुरन्दरपुरीं प्रतस्थे। एकेन नाथूरामगोडसे नाम्ना जनेनासौ व्यापादित। भारतीयानामेका परमाऽमूल्या विभूतिर्लुप्ता। सर्वत्रैव महीयान् शोको जात। नवनिर्मितनाया स्वतन्त्रशासनतरण्या राजनीतिगम्भीरार्णवेऽवगाहमानाया: कोऽपि कर्णधारधुरीणो निपुणश्च दिग्दर्शी लोचनागोचरीभूत:। भारतीयानां मन्त्रिणामपि महामन्त्री सत्यरूपावतारो भारतात्प्रचलित:। तदानीमपि जनतायामातङ्कस्य स्वैरकारितायाः निरङ्कुशतायाश्चैतस्ततो चिह्नानि प्रादुर्बभूवु पर शासनस्य स्थिरनीति-नैपुण्येन सर्वमवदातमभूत्।

अल्पीयस्यप्यस्मिन् समये स्वतन्त्रभारतशासकैरुन्नतिरपि या कृता तां दृष्ट्वा सर्वस्यैव महीतलस्य शासनचातु-

**उन्नति.**

रीचणा अपि परमं विस्मयमापेदिरे। तामपीह दिङ्मात्रमुदाहराम —

भारतीय-राजनीतिज्ञा भारतस्य संविधानमरचयन्। इदञ्च विधानं भारतीयानां विकसितं मस्तिष्कबलं व्यञ्जयति। षडधिकद्विसहस्रसम्वत्सरस्य माघमासादिदं विधानमनुसृत्य भारतं 'भारतीयं गणराज्यम्' इत्यघुष्यत।

अपि तु भारतीयैः शासकैर्बहूनि ध्वनिवाहकयन्त्रसंवाद-केन्द्राणि, वायुयाननिर्माणयन्त्रालया., पोतनिर्माणशाला अप्यस्मिन् देशे प्रतिष्ठापिता ।

अन्यदेशै. सह वाणिज्यमपि प्रारब्धम् । प्रत्येकस्मिन् राष्ट्रे भारतीया राजदूताः प्रेषिता. । भारतेऽप्यन्यराष्ट्राणां दूतास्तथैव । शतशो विद्यार्थिनो विज्ञानकृषिशिक्षा लब्धुं विदेशेषु प्रेषिता । कृषिकर्षणायानेकानि वैज्ञानिकानि यन्त्राणि ट्रैक्टरादीनि क्रीतानि । भूमिसिञ्चनाय निरमीयन्त जलबन्धनानि ।

एवं भारत महतीषु विश्वशक्तिष्वेकं मुख्यं राष्ट्रं बभूव ।

अस्माकं प्रधानमन्त्री श्रीनेहरू महाभागोऽखिलजम्बूद्वीपस्य जननायकानामेकां संस्कृति समिति दिल्ल्याममेलयत्—यत्र जम्बूद्वीपस्य देशानां बहवो जननायका समजीघटन्त संस्कृतिसमुद्धारादि सम्मन्त्रणामप्यकुर्वन् ।

भारतीयप्रतिवेशिनां 'इण्डोनेशियावासिनां' स्वातन्त्र्यायाऽपि प्रधानमन्त्रीमहोदयेनैका बृहत्परिषत् प्रतिष्ठापिता यत्र भारतेतर-देशानां पञ्चशतमिता जननायका उपस्थाय सम्मन्त्र्य च तेषां स्वातन्त्र्य समर्थयामासु । स्वतन्त्राश्चाभूवंस्ते । अत्रासीत् पण्डित-नेहरू महोदय एव प्रधान. ।

एतै खलु कार्यैर्जम्बूद्वीपस्य भारतदेश एव नेतेति सर्वैः अनुभूतम् ।

सप्तोत्तरद्विसहस्रसम्वत्सरे च पौषे पारेऽर्णवमिङ्गलैण्ड देशे सकलराष्ट्रप्रधानमन्त्रिसम्मेलनमभवत् तत्रापि विश्वशान्ति संरक्षितुं

रक्तचीनं राष्ट्रसंघस्य सदस्यमूरीकर्तुञ्च पण्डितनेहरू महोदयो यन्नीतिगर्भितं दूरदर्शिताशोभि चावोचत् तेन तत्रत्या भारतस्य शासकानां बलमजानन ।

श्रमिकाणामुन्नत्यै शिक्षावेतनप्रबन्धोऽपि कृत । आढ्यानां व्यवसायिनामर्थलोलुपा शोषणपरा च वृत्तिरुच्छेदिता । खाद्य-समस्यां पूरयितु खाद्यानां प्रचुरोत्पादनायापि समाश्रिता उपाया । खाद्यवितरणव्यवस्थया रङ्कोऽपि लघुमूल्येनैव खाद्यद्रव्याणि लब्धुं शशाक । वाह्यविषयेभ्योऽधिकमन्न क्रेतुञ्च प्राचलन् प्रयत्ना., येन प्रजाः सुहितं भोजनं लभेरन् ।

**द्वितीय शोक·**

सप्तोत्तरद्विसहस्रसम्वत्सरस्य पौषे भारतगण राज्यस्योपप्रधान-मन्त्री सन्धिविग्रहिको लौहपुरुष श्रीपटेल-महोदयो दिवङ्गतः । अयञ्चापरो महान् दारुण शोकः । किञ्चास्माकं प्रिया धीराश्च शासका स्वकर्मणि परिनिष्ठिताः । नूनं श्रीपटेलमहोदयस्य समकक्षो दुर्लभ इदानीम् । परं भारतसर्वस्वभूतोऽस्माकं प्रधान-मन्त्री श्रीपटेलस्यापि कार्यं स्वयमेव कर्तुमारेभे, अतो नात्र काऽपि विशिष्टा त्रुटिरनुभूता ।

**आध्यात्मिकोन्नति·**

उपरि दिङ्मात्रं वर्णिता उन्नत्तयस्त्वाधिभौतिकाः । परं भारतं समस्तस्य वसुधातलस्य पुराऽऽचार्यं इति व्यपादिश्यत । तथाहि भगवतो मनो·—

एतद्देशप्रसूतस्य सकाशादग्रजन्मन ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा ॥

इत्यवदातं वचो नास्माभिर्विस्मरणीयम्। मन्यामहे तावदाध्यात्मिकोन्नति र्न कापि दृष्टिपथमवतीर्णा। परं समयस्त्वयमल्पीयान् गरीयान् वर्तते विषयः। विश्वसिमो न स समयो दूरे यदाऽन्यदेशीया विद्यार्थिनोऽत्रागत्य दर्शनज्यौतिषविज्ञानकलानां शिक्षामधिगन्तुमत्रत्येषु नालन्दातक्षशिला सदृशेषु नवीनेषु विद्यापीठे ष्वध्येष्यन्ते।

स्वतन्त्रस्य भारतस्य रक्षणाय वर्धनायचास्त्यस्माभिरपि कर्तव्यम्

उपसंहार· भारतीयगणराज्यस्य नागरिकैः—

कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभा·।

इति शिष्टोक्तिमनुचिन्त्य नीतिपर्यालोचनेनैव न किमपि सेत्स्यति। यदि वयं स्वकर्तव्यपथमनुसरेम तर्हि भारतस्य गणराज्यं दिनादिनं दृढतमं विश्वस्मिन्नपि जगति बलवत्तमञ्चाचिरेणैव भविष्यति। सम्पत्स्यते चैषा मनुरघुपाण्डवपालिता गौतमकपिलकणादपूता सिद्धकिन्नरगन्धर्वगीता भारत-वसुन्धरा समृद्धिशालिनी माघवती नगरीव कल्याणकरी सर्वेषां भारताभिजनानां जनानाम्।

———

## भारतीयगणराज्यस्य विधानम्

**विमर्शसारः**—१ आदर्शरूपं विधानम्। निर्मातॄणां मतिनैपुण्यम्। २ विधानस्य प्रधानानि खण्डानि, जनताया अधिकारा·। ३. गणराज्यस्य विभागा', राज्यपालानां धर्माः। राष्ट्रपते र्मन्त्रिमण्डलस्य चाधिकाराः। ४ सुरक्षितानि पदानि, अल्पसंख्यकानां रक्षा, यथोचित परिवर्तनञ्च।

इतः सप्तहायनेभ्यः पूर्वं यदा भारतं बृटिशराज्यशासकानां प्रभुत्वं धारयत्स्वातन्त्र्य प्रासादस्य द्वारे प्राप्तमासीत्, परं पिद्धं च कपाटमुद्घाटयितुं पौनः पुन्येन सवेगं प्रहरदन्त प्रवेष्टुं भृशं पर्याकुलमलक्ष्यत । तदानीमन्तरेव प्रासादेऽस्मिन् संस्थिताः

उपक्रम

शासका [illegible] सुनिश्चयमन्वभूवन् यद्द्वारे संप्राप्ताय प्रवेशो देयो भविष्यति, अस्माभिश्चेतो निर[illegible] प्रासादो नूनं रिक्तीकार्यः स्यात् । अथ तदानीमेव 'भारतीय विधानं' निर्मातुं [illegible] आहूता भा[illegible]तीया । भारतं खण्डयितुं निर्बन्धन्त जिन्ना-प्रभृतयो [illegible] कांग्रेसनेतृभिः प्रार्थिता अपि नागच्छन्नत्र विधानप्रणयनाय । किञ्च तथापि 'भारतीयं विधानं' निर्मातुमुपचक्रमिरे ते । अथ भारतं स्वतंत्रं खण्डितञ्चाभूत् । सर्वत्र देशे ज्वालावलीतो हव्यवाडिव कलहोपद्रवः प्राज्वलन् । परमस्मिन्नपि समये न भारतीया विधान-निर्मातारो नेतृवरा धैर्यं तत्यजुः । विधानञ्च ख्रिस्तीय वत्सरस्य नन्दवेदग्रहैकमितस्य नवम्बरमासे षड्विंशति तमेऽह्नि प्रस्तुतमभूत् । ततः खरार नन्दैक वर्षस्य जनवर्याः षड्विंशति-तमे वासरे विधानमिदं भारते 'सर्वाधिकारपूर्ण प्रजातन्त्रात्मकं गणराज्यं' मुद्घोष्य प्रावर्तत । विस्तृतमिदं विधानम् । इहास्यैव विधानस्यातिसमासेन वर्णनं विधातुं प्रक्रान्तोऽयं विषयः ।

विधानस्य प्रस्तावनायामिदं वर्तते—

"वयं भारतीया शुद्धेन हृदा भारतस्य ( हिन्दुस्थानस्य ) सर्वा-

धिकारपूर्णप्रजातन्त्र गणराज्यरूपमुपेतस्य

विधानस्य प्रस्तावना विधानं निर्मातुं निश्चिनुम, राष्ट्रस्य

प्रत्येकस्मै जनाय अद्यास्यां विधान प्रणयन-

परिपदि—

(१) स्वतन्त्रतायाः ( विचाराणां, भाषणानाम्, धर्मस्य, भक्त्या पूजायाश्च )

(२) समतायाः ( पदस्य कालस्य च )

(३) न्याय्यस्य ( सामाजिकस्यार्थिकस्य राजनैतिकस्य च )

(४) भ्रातृभावस्य ( व्यक्तिमानरूपस्य, राष्ट्रैकतायाश्च ) च विधानं प्रणयाम. ।"

इदं भारतीय विधान भारतान्तर्वर्तिन सर्वान प्रदेशान सर्वाणि च

राज्याणि कुर्गाण्डेमान निकोबार द्वीपां-

विधानाधिकृताः के प्रदेशा. श्चाधिकरिष्यति । तत्र भारतीया. प्रदेशा-

स्तावत्—

मद्रास, आन्ध्र, ( अयं तु सम्वत्सरात् २०११ प्रभृति नवीनः प्रदेशो निर्मित ) मुम्बापुरी, मगध.[1], उत्कलः[2], पश्चिमबङ्गः, उत्तरप्रदेशः, कामरूपम[3], मध्यदेश, विदर्भ.[4], पूर्वपञ्चनद, देहली च ( अस्यां चाजमेर मरुस्थलराज्यस्थानमप्यन्तर्गतम् )।

उपराज्याणि च—कश्मीर, अलवरः, इन्दिरापुरी[5], उदयपुरम्, कोचीन, कोटा, कोल्हापुरम्, ग्वालियर, जयपुरम्, जोधपुरम्, ट्रावंकोर, पटियाला सघः, बडौद, बीकानेर, भूपालः, मयूर-

---

१ बिहार । २ उडीसा । ३. आसाम । ४ बरार । ५ इन्दौर ।

भञ्ज., महीशूर[६], सुराष्ट्रम्,[७] हैदराबादः, इत्यादीनि सन्ति। भारतीया विधानपरिषद् विधानं निर्माय कस्यापि प्रदेशस्य संयोगे, वियोगे, परिवर्धने, संकोचने, नामपरिवर्तने चास्ति प्रभ्वी।

नागरिकता

अस्मिन् विधाने भारतीयनागरिकतामधिकृत्योक्तम्—'भारते लब्धजन्मा प्रत्येको जन आहोस्विद्भारते जाताभ्यां मातृपितृभ्यां लब्धजन्मा भारतस्य नागरिको मन्यते चेन् स कस्मिंश्चिद्वैदेशिके राष्टे राज्ये वा स्थिरतया निवसन् तत्र नागरिकनाधिकारान न प्रापत्। ब्रह्मदेशस्य मलायादेशस्य लङ्कायाश्च भारतीया अपि नागरिकतामिह लब्धुमर्हन्ति यदि तत्र ते नागरिकाधिकारान् न लभेयु.। एवमेव पाकिस्तानादिह शरणैपिण. प्रोपिता भारते स्थिरं वसन्तोऽत्रत्या नागरिका गणयिष्यन्ते।

जनाधिकाराः

विधाने जनानामधिकाराणां विशदा परिविस्तृता च घोषणाऽस्ति, एवं दृढमनुमीयते यज्जगतः कस्यापि राष्ट्रस्य विधाने जनाधिकाराणामीदृशी सुविशदा घोषणा नास्ति। इमे च जनाधिकारा.—

(१) समता—वर्णभेद. कृष्णगौरादिकृतोऽस्पृश्यस्पृश्यादि कृतो वा न मंस्यते, सर्वे समाना एव नागरिकाः। अथाकरेषु कार्यशालासु वा शिशवो न भृत्यत्वेन नियोज्याः। न च कोऽपि लिंगकृतो वा भेदो राज्यसेवापदेषु मन्तव्यः।

(२) धर्मस्वतन्त्रता—यो हि यस्मिन् मते धर्मे वा श्रद्दधाति

---

६. मैसूर। ७. काठियावाड।

यां यां वा देवतामर्चितुमीहते, यञ्च ग्रन्थमनुवर्तयितुं कामयते तथा कर्तुं समर्थ । नात्र कोऽपि प्रतिबन्ध्य. ।

(३) शिक्षा संस्कृति स्वातन्त्र्यम्—यथेच्छं कामपि स्वरुचिमनुसृत्य विद्यामध्येतुं कलाञ्चानुशीलयितुं, कामपि संस्कृतिं किमपि साहित्यमभ्यसितुं सर्वे स्वतन्त्रा ।

(४) सम्पत्त्यधिकार·—यथेच्छकयापि स्वानुकूलया वृत्त्या सर्वे वर्तितु समर्था । स्वां सम्पत्ति रक्षितुमपि प्रभव· । कस्यापि सम्पत्ति शासनमपहर्तुं न प्रभु । यदि सर्वजनीनमत्र स्यात्किमपि कार्यं तदा सम्पत्ति-प्रतिमूल्यं दत्त्वैव सम्पत्तिं हस्तयितुमीष्टे नान्यथा ।

शासनपद्धति भारतस्य गणराज्यस्य शासनपद्धतिरपि विभक्ता वर्तत इत्थम्—

(क) राष्ट्रपति·—(ख) राज्य परिषद् (ग) प्रजाभवनम्

(क) राष्ट्रपति —असौ राष्ट्रस्य प्रधानो गणराज्यस्य सर्वोपरि प्रतिष्ठितः शास्ता । असौ राज्यससदः प्रजाभवनस्य च सदस्यैर्मत प्रदर्शनरीत्या निर्धार्यते । पञ्चसमा अस्य प्रभुतावसर· । तत. पुनर्मतग्रहणेन पूर्वोऽपि राष्ट्रपति पुनस्तमेव पदमधिकर्तुं शक्त. । न पुनस्तृतीयवारम् । संकटावसरेषु युद्धादिषु प्रधानाय विधाननिर्मातृ-परिषदा रचिता विशेषा विधानाधिकारा वितीर्णा. । भग्नेऽपि वैध-शासनेऽसौ सर्वतन्त्रस्वतन्त्र ।

(ख) राज्यपरिषद्—अस्यां पञ्चाशदधिकद्विशतसदस्याः । तेषु पञ्चदशसदस्यान् राष्ट्रपतिर्निर्वेक्ष्यति शेषांश्च मतग्रहणरीतिः ।

(ग) प्रजाभवनम्—अत्र पञ्चशतं सदस्यानाम्, ये च मतग्रहणेन निर्वाच्यन्ते ।

एकविंशति वर्षवयस्काः सर्वे ( नरा नार्यश्च ) मतदानायार्हाः स्युः ।

गणराज्यस्य शासनं मन्त्रिमण्डलं करिष्यति । मन्त्रिमण्डलस्य प्रधानाधिकारी प्रधानमन्त्रीति सञ्ज्ञितः । मन्त्रिमण्डलम् अमुञ्च राष्ट्रपतिर्निर्वक्ष्यति । अन्येषान्तु मन्त्रिणां निर्वाचनं प्रधानमन्त्रि सह कृत एव राष्ट्रपति कर्तुमर्हः । एतेषां पदस्य कार्यस्य वाऽवधिकालो राष्ट्रपतीच्छाधीनः । मन्त्रिमण्डलं सर्वमिदं राज्यससदः सममेव सर्वेषां भावानामुत्तरदातृ । अथैक उपप्रधानोऽपि मन्त्री भविष्यति । असौ राज्यपरिषदः परिषत्पतिरपि भविष्यति । लोकसभाया सदस्यानां निर्वचनाय सार्धसप्तलक्षजनानमेकस्तैरेव निर्वाचित जन प्रतिभूः । पञ्चाब्दानि यावत् लोकसभायाः सदस्यानामवधिस्तत पुनरपि निर्वाचनं विधेयम् । राज्यस्यायव्ययगणना[1] पत्रिका लोकसभायाम् एवोपस्थापयितव्या न राज्यपरिषदि ।

राज्यभाषा हिन्दीभाषैव समाश्रयणीया । परं पञ्चदशवर्षाणि यावत् 'आंगलभाषामपि यथेच्छं समाश्रयितुं समर्थाः सर्वे ।

अत्रैको बृहत्तन्त्रपति[2] रन्ये च सप्त स्थेया[3] भविष्यन्ति । पञ्चषष्टितमवर्षादूर्ध्व न तेषामायुः स्यात् । असौ न्यायालयः

---

१ बजट । २. मुख्यन्यायाधीश । ३ न्यायाधीश ।

उच्चतमो न्यायालय.

प्रान्तानामुपराज्यानाञ्चाभियोगान् निर्णेष्यते क्रमेणाक्रमेण वागतान्।

राज्यपाल

अथ राज्यपालो[४] राज्यस्य[५] प्रधानः शास्ता। राज्यस्य व्यवस्थापरिषद्[६] चतुर्णां जनानां नामानि राष्ट्रपतिमुपस्थापयिष्यति तेष्वेव स यथेच्छमेकं स्वीकृत्य राज्यपालपदमधिकारयिष्यति। अस्यापि पञ्चवत्सर पर्यवसायि पदम्। द्वितीयवारमपि स स्वपदमाश्रयितु लगो न तृतीयवारम्। राज्यपालोऽपि संकटकालेषु विशेषैरधिकारैः वर्तितुं प्रभुः। राज्यस्यापि शासनं मन्त्रिमताधीनम्। एतेषामप्येको प्रधानमन्त्री। असौ राज्यपालेन स्वेच्छया प्रतिष्ठापयितुं शक्य। अन्येषां मन्त्रिणाञ्च राज्यप्रधानमिन्त्रसहचरित एव राज्यपालो नियुक्तिं करिष्यति। राज्ये भविष्यत्येका व्यवस्थापरिषद्। अस्यां षष्ट्यन्यूनास्त्रिशतानधिका सदस्याः। एतान् प्रजा मतग्रहणरीत्या निर्वक्ष्यते। एकलक्षजनानमेकोऽत्र प्रतिभूपदं लप्स्यते।

अल्पसंख्यकानां संरक्षणम्

अल्पसंख्यकानां संरक्षणमाश्रित्य विधाननिर्मातृपरिषदि महान्तो विवादा वादिप्रतिवादि विचारगर्भा अभूवन्। महीयांश्च लग्न समयः। परमन्ते सर्वेषामैकमत्येनेदं निर्णीतमभूत् यद् दशवर्षाणि यावत् (षोडशोत्तरद्विसहस्रसम्वत्सर वैक्रमं २०१६ यावत्) भारतसंघे निवसतामल्पसंख्यकानां राज्यपदादि-

---

४ गवर्नर। ५. प्रान्तस्य। ६. धारासभा।

रूपाणि विशेषसंरक्षणानि स्वीकृतानि ततोऽनन्तरं तेषां स्वीकृति र्न प्रमाणा। अल्पसंख्यानां शिक्षार्थोन्नतिविषयं राज्यं विशिष्य चिन्तयिष्यति। केन्द्रे राज्ये च तेषामर्थे नियोक्ष्यत एको विशिष्टोऽधिकारी।

सुरक्षिता जनपदा

भारतीयविधाने केन्द्रे राज्ये चाल्पसंख्यावतां मुसलमानानां हरिजनानां भारतीयानां ख्रीस्तीयानां (मद्रासे मुम्बय्यामेव) कानिचित् पदानि सुरक्षितानि सन्ति। अयञ्च निश्चयो बृटिशशासनकालिकं भारतविधानमाश्रित्य कृत.। किञ्च दशवर्षानन्तरमयं समाप्ति गत्वा निर्बलो मंस्यते।

लोक सेवायागः

असौ लोक सेवायोगो[1] राज्यपदेषु नियोक्ष्यमानानां परीक्षण विधास्यते नियुक्तानाञ्च तेषां कार्यचातुरीमवेक्ष्य तेभ्य' सम्मति प्रदास्यति।

परिवर्तनम्

अस्मिन्विधाने सत्यामावश्यकतायां परिवर्तनमपि करिष्यते किञ्च तदर्थं राष्ट्रपते. केन्द्रस्यार्धसंख्यामितानां सदस्यानाञ्च स्वीकृतिरपेक्षणीया भविष्यति।

---

१. पब्लिक सर्विस कमिशन।

# भूमण्डलस्य प्रधानदेशानां शासनपद्धतिः कीदृशी?

**विमर्शसारः**— १. भारतेतर-राष्ट्राणि-प्रसिद्धानि-ब्रिटेनामेरिकारूसचीनादीनि। २ साम्राज्यवाद, जनतन्त्रवाद, समाजवाद । ३. शासनपद्धतीनां तारतम्यम्।

भूमण्डलस्य प्रधानेषु देशेषु कीदृशी शासनपरिपाटीत्येष प्रकृतो विषय । गरीयानयं विषय । अत्रापेक्ष्यते विस्तारः। अस्माभि र्न विस्तार्य प्रपञ्चनीयोऽयमिह। किञ्च द्यत्वे

उपक्रमः

वाष्पयानवायुयानध्वनिवाहकादीनामनेकासा विज्ञानाविष्कृतीनां माहात्म्येन सर्वमेव वसुधातलमेकीभूतमिव। अजिरसञ्चरणमिव स्वसदनान्निर्गत्य विदेशगमन विशेषतो वणिजां राजपुरुषाणाञ्च। ध्वनिवाहकयन्त्रेण प्रत्यहं वयमकूपारपारेस्थितानां विषयाणां तत्रत्यान् दैनिकानुदन्तान् शृणुम। समाचारपत्राणि च निर्वचाम। अत इदमत्यावश्यकमेव बोधनीयन्तावदमीषां प्रत्यहं कर्णगोचरीभूतोदन्तानां देशानां कीदृशी नु शासनव्यवस्था ? किञ्च तस्या अतीतं वर्तमानञ्च रूपम् ? ऋते एतज्ज्ञानान्न प्रायस्तत्रत्या ध्वनिवाहकयन्त्रै शोश्रूयमाणाः समाचारपत्रेभ्यश्च वाच्यमाना उदन्ता सुखेन पर्यवसाययन्ति तत्तद्वृत्तन्तेषां तेषां जनानां मनसि। इह भारतस्य शासनव्यवस्थामधिकृत्यान्यत्र सविस्तरं वर्णितमतो भारतेतराणां कतिपयेषामेव राष्ट्राणां शासनपद्धती समस्य व्याख्यास्याम—

स्वीकृतश्च प्रचारार्हो मन्यते। अस्य गृहस्य सदस्याय प्रतिहायनं षट्शतपौण्डमितं वेतनं दीयते।

अस्य चत्वारिंशदधिकसप्तशत सदस्या. सन्ति। ते च सामन्ता माण्डलिका आढ्यपतय एव भवन्ति। वंश परम्परयामीषां भवति सदस्यता राज्ञो मनीषया च। अमीषामधिकारा अल्पीयांस. सम्मानो महीयान्।

माण्डिलकगृहम्

शासनञ्च मन्त्रिमण्डलमेव वर्तयति। अस्य मण्डलस्य प्रधान' प्रधानमन्त्रीति संज्ञित:। अयमेव मन्त्रिणो यथेच्छं चिनोति। त्रयो मन्त्रिणो माण्ड-लिक-गृहादन्ये च प्रजागृहाच्चीयन्ते। प्रधानमन्त्रिणो वेतनं दशसहस्रपौण्डमितं वार्षिकं वर्तते। इदानीं ब्रिटेन प्रधानमन्त्री श्रीमान् चर्चिल महोदयो वर्तते।

मन्त्रिमण्डलम्

इदञ्च शासनं नैकान्तत: प्रजातन्त्रात्मकं न चैकतन्त्रात्मक-मेव, अपितूभयविधमिश्रितमिति वक्तुं शक्यम। साम्राज्यवादस्यै-वात्र प्राधान्यमित्यप्यनुसन्धेयम।

## (२) अमेरिका राष्ट्रस्य (पातालदेशस्य)

अस्य महासमृद्धस्य महाराष्ट्रस्य स्वातन्त्र्य-लाभादर्वाक्कालीनं 'संयुक्तराष्ट्रामेरिका' इत्यभिधानं व्यापितम्। आसीदय महादेश' पूर्वं ब्रिटेनस्यैवोपनि-वेश.। खिस्तीये रसस्वरसप्तशशाङ्के वर्षे ( १७७६ ) भारतवदत्रापि स्वाधीनतां लब्धुं जना सचेष्टा., तत:

शासनपद्धतिः

षट्वर्षानन्तरमयं 'पूर्ण स्वतन्त्र' इत्यघुष्यत । इदञ्च महाराष्ट्रं षट्-चत्वारिंशद्राज्यानां संघरूपं महाराज्य वर्तते। अत्रत्या शासन-पद्धतिर्द्वेधा विभक्ता—

(१) प्रधान (राष्ट्रपति.)

अयमेवामेरिकाया शक्तिमान् शास्ता । बहवोऽस्याधिकारा भवन्ति। असौ राज्यप्रतिभूभिश्चीयते। चतुर्हायनावसायि अस्य चयनम्। यश्चतुर्दशवर्षाणि तत्र वसति पञ्चत्रिंशत्तमं स्वायुषोऽब्द गतिचक्रमे स एवामु पदमधि कर्तु क्षम । अयं प्रत्यब्द चतुलक्ष[1]मितानि रूप्यकाणि वेतनरूपेण गृह्णाति। राज्यप्रति-भूपरिषदा[2]प्रजाप्रतिभूपरिषदा[3] स्वीकृतमपि विषयमसौ प्रतिप्रेषयितु प्रभुस्तत्रैव पुनर्विचारणायै। राष्ट्रसेनाया अप्यसावेव पतिः। स्वमन्त्रि-मण्डलमयं परिषद सम्मत्या चिनोति । अस्य मन्त्रिष्वस्त्येक उप-प्रधान यो हि प्रधानाय साहाय्यमाचरति मन्त्रणाभि. । अमेरिकाया. प्रधान. साम्प्रतं श्री ट्रूमैनमहोदयोऽस्ति ।

राज्यानां प्रजायाश्च प्रतिभू-भूता जना अस्यां सदस्याः । एषा च द्वेधासंविभक्ता राज्यप्रतिभूपरिषद् प्रजाप्रतिभूपरिषद् । तत्र

प्रजाराज्यप्रतिभू परिषद्[4]

पूर्वस्याः सदस्यः स एव भवतुमर्हति यस्तस्मिन् राज्ये नववमा न्यवसत् स्वायुषस्त्रिंशत्तमं वत्सरमत्यक्राम्यत् । चत्वारिंशच्छतरूप्य-काणि च वार्षिक वेतनमेवास्य सदस्यस्य ।

---

१ १००००० डालर। २. सैनेट। ३ कौंसिल ऑफ रैपरीजैंटे-टिव्ज। ४ कांग्रेस।

द्वितीयायाश्च सदस्याः परिच्छिन्नाधिकारा । एतस्या सदस्या द्विवर्षानन्तरं पुनश्चीयन्ते ।

अस्यां शासनसरणौ विभागानां सर्वेपामधिकारा पृथगेव वर्तन्ते । परमत्रापि साम्राज्यवादस्यैव रूपम् । वर्णजातिविशेपोऽस्यां पद्धतौ व्यपह्रियते । अमेरिकाया मूलवास्तव्या रक्तभारतीयेति[1] कृताभिधाना न तत्र समाद्रियन्ते, नीग्रोजना अपि तथैव ।

## ३. सोवियतरूसस्य

सोवियतरूसस्य राष्ट्रमपि भिन्नानामेकादश उपराज्यानां सङ्घातेन रचितम् । अस्य च पूर्ण नाम 'जनतन्त्रगणराज्यसंघ[2]' इत्यस्ति । एतेन सयुक्तानि खलु राज्यानि सर्वाणि सङ्घात् स्वसम्बन्धं त्रोटयितुमपि समर्थानि । अत्रत्या शासनपद्धतिर्द्विधा विभक्ता—

शासनपद्धति.

(१) महापरिषद्[3]

(२) विधानपरिपद् ।

(क) संघपरिपद्[4]

(ख) प्रजापरिषद्[5] ।

संघपरिषद् सदस्यानां चयन राष्ट्रस्य नागरिकैरेव विधीयते । प्रजापरिपदि सर्वेपामुपराज्यानां विधानपरिपदां पारिपदा अपि भवन्ति । महापरिषदि भवत्येक प्रधानः । एक उपप्रधानो मन्त्रिण

---

१. रेड इण्डियन । २. यूनियन ऑफ सोशलिस्ट रीपब्लिक स्टेट्स (U S S R) ३ सुप्रीमकौंसिल (प्रीमीडियन)

४ कौंसिल ऑफ यूनियन । ५ कौंसिल ऑफ नेशनैलिटीज़ ।

एकादश पारिषदा अस्यां भवन्ति । मन्त्रिणस्तु प्रधानेनैव नियुज्यन्ते । सन्धिर्विग्रहो, यानम्, मन्त्रिमण्डलस्य प्रस्तुतविषयाणां स्वीकरणमस्वीकरणं वेत्येतत्सर्वं महापरिषदोऽधीनम् । अस्या अपि प्रधान एव तत्र सर्वतन्त्रस्वतन्त्रः ।

रूसस्य शासनं साम्यवाद-सरणिमवलम्बते । यथा भारते कांग्रेसस्य महान् विस्तारः प्रभावश्च । एवं तत्रापि साम्यवाद-संघस्यैव[1] प्राधान्यं समुल्लसति । प्रतिनगरं प्रतिपत्तनं प्रतिग्राम-ञ्चास्य शाखा वितता । अस्य संघस्य भवत्येका केन्द्रसमितिरस्यां पञ्चसचिवास्तेषामेक प्रधानसचिवः । सकलस्यैव राष्ट्रस्य शासन-मस्यैव हस्ते भवति । असौ तत्र महाप्रभावशाली । साम्यवादसंघस्य केन्द्रसमितिरेव सर्वान् शासनाधिकृतान् मन्त्रिण स्तेषां तेषां तांस्तान् कार्यकलापान् निर्दिशति । इयमेव तान् निरीक्षते नियमयति च । अतो रूसस्य शासनपद्धतिरिमामेव साम्यवादसंघसमितिमवलम्ब्य तिष्ठति । अस्या अपि प्रधानमन्त्री सर्वप्रभुस्तत्र ।

रूसदेशे नास्ति कोऽपि वर्णधर्मलिंगकृतोभेदो मतगणनायां राज्य-पदाधिकारेषु वा । तत्राष्टादशवर्षवयः समाप्य सर्वे नराः सर्वाश्च नार्यो मतदानाय प्रभवन्ति । त्रयोविंशतिवर्षदेश्याः स्त्रीपुरुषा महापरिषदः पारिषदा भवितु-मर्हन्ति । जनमतगणनाकाले भवति तत्र महानुत्साहः प्रजासु । स्वरवह्नि नन्दैकवत्सरे (१९३७) खिस्तीये तत्रत्या ९६.७ जना प्रतिशतं मतगणनायां सम्मिलिता अभूवन् ।

जनमतगणना

---

1. कम्यूनिस्ट पार्टी ।

ख्रीस्तीये स्वरशशिग्रहशशाङ्कवत्सरे (१६१७) लैनिन महोदयस्य श्लाघनीयेनानुकार्येण साहसेन धैर्येण यत्नेन च जारशासनान्निर्मुक्तो रूसदेश स्वतन्त्रो बभूव।

उन्नति तदाप्रभृति केवलं त्रयस्त्रिंशद्धायनेष्वेवानेनाऽकल्पितोन्नति रवाप्ता विज्ञाने, शिक्षायां, सैन्यबले च। तथाहि तत्रत्या महिला याः पूर्वमसूर्यम्पश्याः शिक्षारहिता अभूवन् ता अपि साम्प्रतं कियतीं स्पृहणीयामुन्नति मापुरिति तावदधस्तादिह तालिकया शक्यतेऽनुमातुम्—इञ्जीनियरिंगविभागेषु निपुणानां कार्यकर्त्रीणां संख्या—२५०००० अस्ति, अनुसन्धान-कर्मसु व्यापृतानां महिलानां संख्या ३५०००० इत्यस्ति। कृपिकर्मसु सामूहिकेपु संसक्तानां सख्या ६५०००० अस्ति। कृषिकर्मनिरीक्षिकाणां तदध्यक्षाणाञ्च संख्या १५००० अस्ति, गतमहायुद्धे श्लाघनीयकर्मपुरस्कारा याभ्योऽदीयन्त तासां संख्यापि १२०००० इत्यासीत्। याः सोवियतसघस्य वीराङ्गना उद्घोपितास्तासां संख्या षष्टिमिताऽऽसीत्। सोवियतमहापरिषदः पारिषदः २७७ नार्यः सन्ति। उपराज्यपरिषदामपि सदस्या ४५६००० नार्यः सन्ति, अतः परं सहस्रशो महिलास्तत्र वैद्याः, अध्यापिकाः, वाक्कीलाः, तन्त्राध्यक्षाः, विमानचालिकाश्च सन्ति। रूसदेशस्यैतादृशीं समुन्नतिं दृष्ट्वाऽन्येऽपि देशास्तस्य शासनपद्धतीरनुहर्तुं प्रवृत्ताः।

## (४) चीनस्य

चीने पूर्वं साम्राज्यवादस्यैव प्राधान्यमभवत्। प्रपीडिताः प्रजास्तत्र राज्यद्रोहिण्योऽभवन्। पञ्चाधिकद्विसहस्रवैक्रमवर्षे ताः साम्य-

शासनव्यवस्था

वाद शासनं प्रत्यस्थापयन्। तत्रत्यमिदं साम्यवादि शासनमन्वमोदयन् कानिचन राष्ट्राणि। भारतमपि शासनमिदं स्वघोषणयान्वमादत। चीनस्यैषा नूत्ना शासनपद्धतिः साम्यवादसिद्धान्तमाश्रिता। अभूत्ना चीन प्रजातन्त्रजनसंघ चीन इत्यभिधया प्रख्यापितः। तत्र साम्राज्यवादविवाकलायमाणा श्रीच्यांगकाई शकप्रशान्तोऽस्तव्जिगमिषतीव। शासनमत्र प्रजानायकानां करे वर्तते। मतगणनया शासनपरिषदां सदस्याश्चीयन्ते। अधुना चीने वैदेशिकानां वाणिज्यस्थानकं नास्ति। श्रमजीविनां समुन्नत्यै नारीणां च विकासाय तत्राधुना प्रबला प्रयत्ना समाश्रियन्ते। प्रजातन्त्रचीनस्य सैन्यशक्तिरपि महतीं वृद्धिं प्राप्ता। अचिरेणैव चीने प्रजा समृद्धिमत्य उन्नता शिक्षिताश्च भविष्यन्तीत्याशास्यते।

---

## संस्कृत-साहित्ये नाटकानां क्रमविकासः

**विमर्श सारः**—१. आविर्भावः, कालविभागः, ग्रन्थानां विध्वंसः। २. मध्यकालस्य स्वर्णयुगः, महाकवीनां जगति श्रेष्ठानि नाटकानि, त्रुट्यः कतिचन। ३ उत्तरकाल—बहूनि नाट्यनाटकानि, परं नात्युत्कृष्टानि, ह्रासहेतवः, दोषाः। ४. वर्तमानकालः—विरतिसमयः, तथापि नाटकनिर्माणं प्रचलत्येव।

संस्कृतसाहित्ये कथं कीदृशश्च नाटकानां क्रमेण विकासोऽभू-

दिति प्रकृतो विषयः। मीमांस्यते चायम्—नातितिरोहितमिदं प्रेक्षावतां सुधियां यदिह विधर्मिणामाततायिनाञ्चावस्कन्दैरभिभूयमानेव भारतभू र्बहुकालं म्लेच्छानामपि धर्मद्वेषिणां शासनैराक्रान्ता बभूव। ते हि स्नानद्रोणीर्मांसान् स्वेषु स्नानकोष्ठेषु सस्कृतग्रन्थैरेवोदतापयन्। असंख्यान् विपणिषु चत्वरेष्ववस्करेषु च प्रक्षिप्यानाशयन। अतो बहूनि नाटकरत्नान्यपि तदा नष्टानि येषां नामानि कर्तॄणामेव वा नामान्यधुना श्रूयन्ते केषाञ्चिन्नोभयमेव। अतोऽतितिमिराच्छन्नेऽतीतकुहरे लीनमिव नाट्यशास्त्रविकासविवेचनमिह व्यक्तं विशदयितु मस्माक प्रवृत्ति रुपलब्धनाटकसाहित्यसमाश्रयिण्येव संवेद्या।

उपक्रम

नाटकानां विकासक्रमोऽयमिह वर्णन प्रबोधसौकर्याय चतुर्धा विभज्यतेऽस्माभिस्तथाहि—

(१) **आदिकालः** ( आविर्भावकालः )—वैदिककालाद्विक्रमस्य प्रथम-शतक-प्रारम्भं यावत्।

(२) **मध्यकालः** ( विकासकालः )—विक्रमस्य प्रथमशतकात् द्वादशशतकसम्वत्सर यावत्।

(३) **उत्तरकालः** ( ह्रासकाल. )—विक्रमत्रयोदशतमशतकाद् अष्टादशशतकान्तम्।

(४) **वर्तमानकालः** ( विरामकाल )

अथैतान् विस्तृत्य वर्णयामः पर्यालोचयामश्च।

(१) आदिकालः—अयं नाटकानामाविर्भावकालो वैदिक-कालादारभ्य विक्रमस्य प्रथमशतकप्रारम्भं यावद् बोध्य । वेदेषु यमयमीसूक्तात्मकाः संवादादय श्रूयन्ते तेष्वस्ति नाटकानां बीजं निहितम् । नाटकानामुत्पत्तिर्भरतमुनेर्नाट्याचार्याद् बभूव तथाहि तस्य 'भरतनाट्यशास्त्रम्' लभ्यते । अत्र नाट्यानां विशदं रूपमुपवर्णितम । भरतमुनिश्च स्वर्गेऽप्सरसां नाट्योपदेष्टा । अथ रामायण-काले महाभारतकाले नाभिनेय किमपि नाट्यसाहित्यमरच्यत । परं तदानी भगवतः श्रीकृष्णस्य रासलीला नाट्यस्यैव रूपमभवत् । बाणासुरस्य कन्योषा पुत्तलिकानां नृत्यैर्विनुनोद स्वम । पुराणेषु बहुषु नाट्यानामभिनयानाञ्चोल्लेखो दृश्यते ।

महर्षे. पाणिने काले नाट्यानां कला बभूव विकसिता । तथा हि 'छन्दोग्यौकिथकयाज्ञिक वह्वृचनटाञ्यः' (४।३।१२६)

इत्यनेन धर्माम्नाययोरर्थयो र्नटशब्दान्नाट्यशब्दस्य निष्पत्ति-र्विहिता । एतेन तदानीं नाटकग्रन्थानां रचनाप्यभूदिति ध्वन्यते । किञ्च भगवतः पाणिने पूर्वकालीना अपि केचन नाट्यकर्त्तारो बभूवुर्येषां तदा शिलाली, कृशाश्व' इत्येताभ्यां नाट्यसूत्राणि रचितान्यासन् । एतञ्च—भगवत. पाणिनेरेव—

पराशर्यशिलालेभ्यो भिक्षुनटसूत्रयो (४।३।११०)
कर्मन्दकृशाश्वादिनि. (४।३।१११)

इति सूत्राभ्यामध्ययनार्थे शिलालिकृशाश्वपदयोर्दिनुक्विधानान् स्पष्टमेवोन्नीयते । अथ महर्षिः पाणिनिरपि 'जाम्बवतीजयम' इत्येकं

नाट्यग्रन्थमरचत्[1] । एतच्च—

'नमः पाणिनये तस्मै यस्य शर्वप्रसादतः ।
आदौ व्याकरणं कृत्स्नमनुजाम्बवती जयम् ॥'

इत्येतेन पद्येन ज्ञायते ।

पाणिनिकालादर्वाक् कश्मीराधीश्वरस्य तुञ्जीनस्य नरपतेः काले वाक्पुष्ट्या तद्राज्ञ्या प्रेरितः श्रीचन्द्रको (चन्दक इत्यपि नाम लभ्यते) सर्वप्रियमेकं नाटकमरचत्—तथा च कल्हणो राजतरङ्गिण्याम्—

नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः ।
द्वैपायनमुनेरंश स्तत्काले चन्द्रकोऽभवत् ॥'

भगवतो बुद्धस्याविर्भावात्पूर्वं नाटकानां भारते महान् विकासो बभूव । भाससौमिल्लकविपुत्रादयोऽपि नाटकान्यरचन् ।

'तत्रभवतां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमान-कवेः कालिदासस्य क्रियायां कथं बहुमानः'

इति महाकवेः कालिदासस्योक्त्या प्रतीयते । एतेषु भासस्यैव नाटकानि समुपलभ्यन्ते । महाकवेर्भासस्य त्रयोदश नाटकानि । तेषु 'स्वप्नवासवदत्तम्' इति मधुरं प्रशस्ततमञ्च नाटक मन्यते । भासस्य नाटककर्तृषु महती कीर्तिः श्रूयते—

'भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥' इति राजशेखरः ।

'सूत्रधार कृतारम्भैर्नाटकै र्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥'

---

1 केऽपि काव्यमिदं श्रव्यं मन्यन्ते ।

इति च भासप्रशंसायां भट्ट बाणः ।

भासकाले नाट्यकला नाटकनिर्माणकौशलञ्च विकसितं प्रतीयते। लोका अपि नाट्यप्रेक्षण-कौतुकिनोऽभूवन् । शूद्रकस्य 'मृच्छकटिक' नाटकेषु प्रशस्तं गण्यते। एवमार्यक्षेमेश्वरस्य चण्डकौशिकमपि नाटक नैपुण्यं सूचयति। अस्मिन काले रामायणमहाभारत-कथा समाश्रित्यैव नाटकानि कविभिररच्यन्त प्रायः । किञ्च महाराजस्य शूद्रकस्य 'मृच्छकटिकेन' ध्वन्यते साधारणजनानामुदन्ता अपि नाट्यविषया क्वापि बभूव ।

(२) मध्यकालः—विक्रमप्रथमशतकादारभ्य द्वादशात्म शतकान्तमेष कालः परिगणित । अयं द्वादशशत संवत्सरव्यापी कालो यथा भारतस्य कलानामन्यासां स्वर्णयुग इति व्यपदिश्यते तथा संस्कृत-नाटकानामपि। अत एवासौ 'विकासकाल' इति कीर्तितोऽस्माभि ।

महाकवेः कालिदासस्य 'अभिज्ञानशाकुन्तलम' जगत्प्रसिद्ध नाटकं विक्रमकाल एवारच्यत। अस्यैकस्यैव नाटकरत्नस्य नाटकीय-शैल्या प्रतीयते यत्तदानीं नाटकानां निर्माणकला शारदी पार्वणी कौमुदीव रससुधाधारा उद्रेचयन्ती धवलतमां कान्ति प्रसारयन्ती संस्कृतसाहित्याकाशे देदीप्यते स्म। कालिदासस्य 'विक्रमोर्वशीयं नाटकम्' पौराणी गाथामाश्रित्य रचितं चमत्कृति सहितम्। अथास्यैव 'मालविकाग्निमित्रे' अग्निमित्रस्य मालविकायाश्च प्रेमवर्णना तत्कालीनैव प्रतीयते। दिङ्नागस्य 'कुन्दमाला' भवभूतेरुत्तररामचरितम् इति द्वयमेव सीतोत्तरजीवनमाश्रित्य रचितम । महाराजस्य

श्री हर्षस्य नाटकानि त्रीणि नागानन्द, रत्नावली, प्रियदर्शिका चेत्येतानि। अस्मिन्काले बौद्धमतस्यापि प्रभावः संस्कृतनाटकेषु स्पष्टः। 'नागानन्दे' दयावीरस्य राज्ञो जीमूतवाहनस्य चरितमति रुचिराभिनयकलया वर्णितम्। तत्र—

> "शिरामुखैः स्यन्दत एव रक्त-
> मद्यापि देहे मम मांसमस्ति।
> तृप्तिं न पश्यामि तथापि तावत्
> किं भक्षणात्त्वं विरतो गरुत्मन्॥"

इति जीमूतवाहनस्याभिनयः सरसः कमप्यनिर्वचनीय दयाभावं सञ्चारयति।

राजशेखरस्य 'बालरामायणं', 'प्रचण्डपाण्डव' मिति संस्कृतमाश्रित्य कर्पूरमञ्जरी, विद्धशालभञ्जिका, इति प्राकृते च नाटकानि। भट्ट बाणस्य 'पार्वतीपरिणयनाटकम्'।

महाकवे र्भवभूते र्नाटककर्तृषु कालिदासभाससमकक्षमेव स्थानम्। अस्योत्तररामचरितम्, महावीरचरितम्, मालतीमाधवम्, इति त्रीणि नाटकानि करुणावीरश्रृङ्गार रसप्रधानानि संस्कृतवाङ्मयस्य महती विभूतिः।

वीररसप्रधानेषु नाटकेषु भट्टनारायणस्य 'वेणीसंहारः' विशिष्य निर्दिश्यते।

अस्मिन् काले पुराणान्येव नासन् आश्रयभूतानि नाटकानाम्। उदग्रा राजनीतयोऽपि। महाकवेर्विशाखदत्तस्य 'मुद्राराक्षसम्' मौर्यस्य

चन्द्रगुप्तस्य चाणक्यस्य च राजनीतिदाव्यमाश्रित्य रचितमेतद् व्यञ्जयति ।

मध्ययुगे नाटकानि प्रहसनेहामृग सहक-व्यायोग-भाण-डिम समवकारादयो भेदोपभेदै रूपबृंहितानि एतेषां प्रत्येकमाश्रित्यारच्यन्त नाट्यानि । तथाहि वत्सराजस्य—

**व्यायोगे**—किरातार्जुनीयव्यायोग', **भाणे**—कर्पूरचरितभाण. **ईहामृगे**—रुक्मिणीहरणम्, **डिमे**—त्रिपुरदाह, **प्रहसने**—चूडामणि-प्रहसनम्, **समवकारे**—समुद्रमथनाभिधान, विद्यन्ते । **सट्टके**—राजशेखरस्य 'कर्पूरमञ्जरी' प्रसिद्धा । **व्यायोगे**ऽपि बिल्हणस्य कर्णसुन्दरीनाटिका विद्यते ।

यतिवरस्य कृष्णमिश्रस्य प्रबोधचन्द्रोदयनाटकमपि निर्देशमर्हति अत्र । मूर्ता एव धर्मकाममोहादय पात्रतां नीता । तेषामेवेतरेतर-जयपराजयाभ्यां ज्ञानसिद्धिर्दर्शिता । किञ्चैतदभिनयार्हन्ती न लभते । विकासयुगस्यान्तिमे कालेऽपि जयमिह सूरे—'हम्मीरमद-मर्दनम्', जयदेवस्य प्रसन्नराघवम्, शक्तिभद्रस्य आश्चर्यचूडामणिः, कविकर्णपूरस्य चैतन्यचन्द्रोदयः, सुभटस्य 'दूताङ्गदम्' इत्यादीनि नाट-कानि प्रतिष्ठां लेभिरे । दशमशतक पूर्वार्ध-भवस्यबिल्हणस्य—

> तत्पर्यन्तस्थितगुणनिकामण्डपं यत्र धत्ते,
> धाम व्योमाङ्गनतिलकता क्षेमगौरीश्वरस्य ।
> रामा रामानुकरणविधौ यत्र नाट्यप्रयोगे
> योगस्थानामपि सपुलकं गात्रमासूत्रयन्ति ॥

इति पद्येन ज्ञायते यत्तदानीं रंगमण्डपानां निर्मितौ लोकाना मभिरुचिर्महत्यभवत् । नार्योऽपि स्वैरं नाटकानामभिनयं सकलजन-प्रेक्षणीयासु रंगशालास्वकुर्वन् ।

आसीदेष समुज्ज्वलः कालो भारतस्य । संस्कृतनाटकानां किं न स्यात् ? तदा जनानां सामाजिकगार्हिकदशानां चरित्राणाञ्च बहु-विधानां नाटकेषु सन्निवेशो बभूव ।

एतानि प्रसिद्धानि नाटकान्येवेह निर्दिष्टानि । सन्त्यपराण्यपि बहूनि । कानिचन त्वधुना नाम्नैव श्रूयन्ते । अप्पयदीक्षितस्यापि बभूवैकाकृतिर्नाट्येषु । क्षेमेन्द्रस्य 'लावण्यवती,' नाटकमपि तन्निर्दिष्टमेव श्रूयते । एवमन्येषामपि ।

(३) उत्तरकालः—त्रयोदशशतकाद्विक्रमस्याष्टादशतमशतकं यावदेष कालः कलितः । अयं संस्कृतनाटकानां ह्रासकाल इत्यपि भणामः । आर्यधर्मोच्छेत्तारो म्लेच्छा भारतमाचस्कन्दुः । गृह-कलहैरेव भारतीयनृपतयः स्वप्रभुत्वं प्रभ्रंशयामासुः । अथास्मिन् काले यथा संस्कृतवाङ्मयस्यान्येषां विषयाणां ह्रासो दृश्यते तथा नाटकानामपि ।

ह्रासकालेऽप्यस्मिन् न तावत्संस्कृतनाटकरचना साफल्येनैव रुद्धाऽभवत् । अस्मिन् कालेऽपि शताधिकानि नाटकानि निरमीयन्त । किञ्च मध्यकालवन्न तेषां प्राशस्त्यं प्रतिपादयितुं शक्यते । अस्मिन् षट्शतकमिते कालेऽपि पुराणविषयान् स्वोपज्ञकथाः समाज-दशाश्चावलम्ब्य नाटकान्यरच्यन्त ।

धारानगर्यां शिलापट्टके समुत्कीर्णमेकं नाटकं लभ्यते। अस्य नाम 'पारिजातमञ्जरी' जयश्रीर्वा इत्यस्ति। अस्य रचयिता पर्मारवंशोद्भवो मदनवर्मा। स च वैक्रमे नन्दरसग्रहशशाङ्के (१६६६) बभूव। पुराणकथा आश्रित्यास्मिन् काले रचितेषु नाटकेषु नीलकण्ठ कवेः 'कल्याण सौगन्धिकम्', कुलशेखरवर्मण: 'सुभद्राधनञ्जयम, तपती संवरणम', भास्करकवेः 'उन्मत्तराघवप्रेक्षाणकम', नीलकण्ठ दीक्षितस्य 'नलचरित्रम' रामचन्द्रसूरेः 'नलविलासनाटकम्', काञ्चनाचार्यस्य 'धनञ्जयविजय,' इत्येतानि। अन्यविषयानाश्रित्यापि यश पालमन्त्रिण 'मोहपराजय', भूदेवशुकस्य 'धर्मविजय.', आनन्दरायमखिन: 'विद्यापरिणय', महादेवस्य 'अद्भुतदर्पणम्, इत्यादीनि नाटकानि विद्यन्ते।

(४) **वर्तमानकालः**—एकोनविंशतितमाद्वैक्रमशतकादद्यावधि वर्तमानकालो व्यवहृत:। असौ 'विरामकाल' संस्कृतनाटकानाम। उत्तरकाले यद्यपि मध्यकालवदुत्कृष्टानि नारच्यन्त नाटकानि, तथापि तत्र नाटकानां सृजनं न रुद्धम्। पर शतानि तदानीन्तनानि नाटकानि मुद्रितान्यमुद्रितानि नष्टप्रायाणि च। किञ्चास्मिन् द्विशतकमिते काले यथा संस्कृतसाहित्यस्यान्येषामंगानां सृजनगतिर्निरुद्धा तथा नाटकानामपि। अथापि संस्कृतवाङ्मयसुरभितपद्मवृन्दस्य मिलिन्दायमानानां विदुषामपि सन्ति काश्चन नाटक रचनाः। स्तोकाश्चैताः। एतासु शंकरलाल शास्त्रिणः 'श्रीकृष्णाभ्युदय', गोपालचिन्तामणिश्च', रामचन्द्रकवे 'सत्यहरिचन्द्र', सकलसूर्योदयश्च', शेषकृष्णस्य 'कंसवधनाटकम्', पण्डितजगन्नाथस्य 'रति-

मन्मथ नाटकम्, इति वर्णनार्हाणि सन्ति। इदानीमपि केचन रचयन्ति नाटकानि। तत्र मथुराप्रसाद दीक्षितस्य 'प्रतापविजयः" इत्यस्य नाम श्रूयते।

संस्कृतसाहित्यस्य सुधीभि संस्कृतभारतीमुन्निनीषुभिर्नाटकानि नवीनया शैल्या रचनोयानि। सन्ति साम्प्रतं समाज-राजनीति-विषया, जननायकानां चरितानि, इत्येतानुपाश्रित्यापि नाटकानां रचनाऽपेक्ष्यते। आंग्लनाटकानां नाटकरूपेणैव संस्कृतेऽनुवादो-ऽप्यपेक्षणीय एव। एतेनाक्षुण्णा स्थास्यति संस्कृतनाटकानां ख्यातिः साहित्यञ्च परिबृंहितं स्यात्।

---

## "संस्कृत-साहित्ये करुणरसः"

**विमर्शसारः**—१ करुणरसस्य प्राधान्यम्, शृङ्गारकरुणयोः साधर्म्यवैधर्म्ये, २ करुणरसप्रधानाः प्रबन्धा, भवभूतेरुत्तररामचरितम्। ३ करुणस्य रसोद्रेकत्वे तारतम्यकृतं विश्लेषणम् अस्य चित्ताह्लादकता।

इह तावत् साहित्यशास्त्रविशारदै रष्टौ रसा. स्वीकृताः। केऽपि नवान्ये च दश रसानाचक्षते। रसनिर्देशे

कोऽसौ करुणो रस ? दर्पणकार—

'शृङ्गारहास्य करुण रौद्र वीर भयानका.।
बीभत्सोऽद्भुत इत्येते ह्यष्टौ काव्ये रसा. स्मृताः॥'

इत्यष्टौ रसान् स्वीकृत्य अयं—

'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।'

इति नवमं शान्तरसमपि निर्दिशति। एतेषु सर्वेष्वपि रसेषु श्रृंगारकरुणरसयोरेव प्राधान्यं मन्यते। किञ्चैतयोरपि कस्य वरीयस्त्वमित्यत्रापि विभिन्ना साहित्यविदां मतयः। इह करुणरसमधिकृत्य किञ्चित्प्रपञ्चयिष्यते—

कोऽसौ करुणो रस ? इति मीमांसायामुच्यते वियोगनिधनशोकैरपरैश्चाभिघातकरैर्भावैर्यदा क्रन्दनरोदनादि दशा विलपनादयश्च प्राणिनामाविर्भवन्ति तदानीं सहृदयानां मनःसु य सहानुभूतिसमनुकूलश्चित्तद्रवणप्रवणः सर्वाणि गात्राणि शिथिलयन्निव कोऽपि सहृदयैकगम्यो भाव उदेति स करुणो रस । यदा चैवंविधा भावा काव्येषु समर्पिता भवन्ति तदानीमपि तथैव ते सहृदयानां मनांस्यावर्जयन्ति। नाटकेषु चाभिनीयमानास्त एव दर्शकानां हृदि जनयन्त्यपूर्वमेव कमपि रसं करुणोतिव्यपदेश्यम् अमी शोकपीडादयो भावा । रामस्य सीताविरहेण परितप्यमानस्याश्रुपातादि चेष्टा दर्शं दर्शं विलपनानि च श्रावं श्रावं रंगे प्रेक्षकाणां सहृदयाना हृदि रामोऽय न रामोऽयम्, अयमेव राम , राम एवायमित्यन्ययोगायोगात्मिका बुद्धि र्जायते। तत्र तदानीं ते रामादिभि सह स्वात्मनाऽभेदसम्बन्धमिव विदन्तोऽश्रुपातरोमहर्षादि भावै रेकीकृता इव रामादिभिरलौकिकं हृदयद्रवणप्रवण वचसामगोचरमाह्लादं ब्रह्मानन्दैकसहोदरमिव विन्दन्ति। सोयं रामादिभिः सीतादिविषयिक-रतिमद्भि र्विभावै र्भावितो विरहादिभि रनुभावैरुद्दीपितोऽश्रुपातविलापादिभिः

सञ्चारिभावै. सञ्चरितश्चित्ताह्लादप्रदो सहृदयहृदयैकसम्वेद्यो भावविशेष एव करुणो रस. ।

महाकवे र्भवभूतेरुत्तररामचरिते करुणरमस्यातिशयेन वर्णना दृश्यते । भविभूतिस्तु सर्वेषां रसानां करुण-

भवभूते करुणरस रसमेव प्रधान मन्यते । तथाहि—

"एको रस. करुण एव यथा प्रधानं
भिन्नान् पृथक्पृथगिवाश्रयते विर्वतान् ।
आवर्तबुद्बुदतरगमयान् विकारान्
अम्भो यथा सलिलमेव तु तत्समग्रम् ॥"

असौ सर्वानेव रसान् करुणारसस्यैव विकारान् स्वीकरोति । 'उत्तररामचरिते' करुणरसवर्णने कवेरस्य प्रतिभा चमत्कृता प्रतीयते । इदञ्च नाटक करुणरसपूर्णमेव प्रायः । अत्र—

'जनस्थाने घोरे विकलकरणैरार्यचरणै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।'

इति यत्कविनोक्तं तद् यथार्थमेव पर्यवसितम् ।

'पुटपाकप्रतीकाशो रामस्य करुणोरस.'

इति मर्यादापुरुषोत्तमस्य रामस्य सीताविरह-जनितां दशां वर्णयता कविना करुणरसस्य स्वरूपमपि तत्र ध्वनितम् ।

महाकाव्ये वाल्मीकीये रामायणे करुणरसस्य सरसै सरलै पदै र्वर्णना लभ्यते । भारतेऽपि तथैव । पुराणेष्वपि बहुषु । इमे ग्रन्थाः संस्कृतसाहित्यसिन्धो रुज्ज्वला मणय ।

करुणरसप्रधानाः उत्तरकालीनासु कृतिष्वपि करुणरसप्रधाना

प्रबन्धा.

बहवः प्रबन्धा' सन्ति । तत्र कवेर्दिङ्नागस्य 'कुन्दमाला' 'उत्तररामचरित'वदेव भगवत्या जनकनन्दिन्या. सगर्भाया वने प्रवसनं रामस्य च तस्या विरहेण सन्तपनम् अभिनयसमर्पितं वर्णयति । अत्रापि करुणरसः सरसः—

'आर्या स्वहस्तेन वने विमोक्तुं
श्रोतुञ्च तस्याः परदेवितानि ।
सुखेन लङ्कासमरे हतं मा-
मजीवयन्मारुतिरात्तवैर. ॥'

रामादेशेन जानकीं वने त्यक्तुमायात सौमित्रि सन्तपते । रामस्य सीताविरहितस्य का दशा ?—

'नीतस्तावन्मकरवसतौ बध्यतां शैलसेतु-
र्देवो वह्नि र्न च विगणित' शुद्धिसाक्ष्ये नियुक्त' ।
इक्ष्वाकूनां भुवनमहिता सन्ततिर्नेक्षिता मे,
किं किं मोहादहमकरवं मैथिली तां निरस्य ?'

इत्थं स स्वात्मान न्यक्कुर्वन्ननुशेते ।

हनुमन्नाटकेऽपि रामस्य सीताविरहेण दण्डकवने सञ्चरत. कृतानि विलपनानि—

'वैदेही तु कथं भविष्यति हा हा देवि धीरा भव'

इत्येव विधानि करुणरसद्योतकानि ।

श्रीहर्षदेवस्य नागानन्दनाटकन्तु करुणरसाभिनयप्रधानमेव । श्रीबाणभट्टस्य कादम्बर्यां शुकस्य किरातयूथमृगयावर्णनप्रसङ्गेन स्व-दशावर्णने, महाश्वेतायाः स्वोदन्तवर्णनप्रसङ्गे करुणरस समाश्रित. ।

महाकवे श्रीहर्षस्य नैषधीयचरितेऽपि क्वापि क्वापि करुणरसगर्भा वर्णना कृता । नलं प्रति हंसस्य—

'मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दयन्नहो विधे ! त्वां करुणा रुणद्धि न ॥'

इत्येषोक्तिः कीदृशी करुणरससिक्ता ।

कालिदासस्य करुणरसवर्णना

सत्स्वपि करुणरसप्रधानेषु प्रबन्धेषु कविकुलकाननकोकिलस्य कालिदासस्य रघुवंशे कुमारसम्भवे च रति-विलापप्रसङ्गे करुणरसस्य या वर्णना लभ्यते सा सर्वानतिशेत इति वक्तुं न संकुचामः । विशिष्य च रघुवंशे महाराजस्याजस्येन्दुमत्या निधनावसरे विलपनमतीव चेतो विद्रावकम् । तथाहि—

"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणा विमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥"

इत्यत्र कीदृशी सहजा करुणरसाधारभूता हृदय-द्रुतिः । अथापि—

'स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया ॥
अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥'

कीदृशी कान्ता मृदुला पदावली ? कीदृशश्च रससञ्चारः ? इति सहृदया एव वदन्तु । अथैष अत्र विशेषः । करुणरसवर्णने प्रायः 'हा हन्त हे' इत्यादिशोकोद्गार-द्योतकाः पदा निविश्यन्ते यथा—

'हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः' इत्यादौ। किञ्च कालिदासस्य करुणरसवर्णने न तथा। तत्र हि प्रकृतिमधुरा भावोज्ज्वला रससञ्चारणचतुरा पदावल्येव श्रवणसमकालमेव चित्तं द्रावयति पाषाणप्रतिममपि सुधांशुमालिनः किरणावलीव चन्द्रकान्तदृषद । 

प्रकीर्ण वर्णना

प्रबन्धान् सर्गबन्धान् विहाय मुक्तकरूपेणापि प्रकीर्णानि करुणरसगर्भाणि पद्यान्युपलभ्यन्ते। तान्यपि बहूनि तावच्चमत्कृतिमयानि भवन्ति।

'हा मातस्त्वरितास्मि कुत्र ? किमिदं ? हा देवता ! क्वाशिष ?
धिक् प्राणान् पतितोऽशनिर्हुतवहातेऽङ्गेषु दग्धे दृशौ।
इत्थं घर्घर घोर शब्दकरुणा पौराङ्गनानां गिर–
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥'

भट्टनारायणस्येदं पद्यं करुणरसपूर्णम्।

भक्तिकाव्येषु भगवत्स्तुतिमयेष्वपि शान्तसहचरित करुणरसः प्राधान्येन समाश्रितः कविभि । एषु स्तुतिकुसुमाञ्जलि-कर्तुर्महाकवेर्जगद्धरभट्टस्य करुणरसवर्णना विशिष्य समाख्यामर्हति।

"आः किं न रक्षसि नयत्ययमन्तको मां
हेलावलेप समयः किमयं महेश !
मा नाम भूत्करुणया हृदयस्य पीडा,
क्रीडापि नास्ति शरणागत मुञ्चतस्ते।'

अत्रान्तकत्रासत्रस्तो भक्तो भवं विरहीव गद्गदं स्तौति, उपालभते च अथच—'आकर्णयाशु कृपणस्य वचांसि मे त्वं

लब्धोऽसि नाथ ! बहुभिर्ननु जन्मवृन्दैः ।
अद्य प्रभो यदि दयां कुरुषे न मे त्वं,
त्वत्तः परं कथय क शरण व्रजामि ?

यस्य हृदयं भक्तस्येयमुक्ति र्न विद्रावयति स तु 'नृपशुरथवायं पशुपतिरिति जगन्नाथ पण्डितराजस्योक्तेरेव गोचर' स्यादिति वाच्यम् । कस्याप्याधुनिकस्य भक्तवरस्येयं पद्यद्वयी कीदृशी मधुरा—

'अयि मां वद शर्व भामिनि ! शरणं कं करवाणि साम्प्रतम् ।
त्वदृते न हि किञ्चिदस्ति मे वसुधायां शरणं मनागपि ॥
तव लोचनगोचरा न किं सकलेयं मम दुर्दशाम्बिके ।
समलंकुरु मङ्गलेन मां समलं मां किमु शंकसे सुतम् ॥

मिथो विरुद्धाविव प्रतीयमानाविमौ शृङ्गारकरुण- रसौ । परं विप्रलम्भाख्यस्य शृंगारस्य करुणरसेन सह नाधिकं तावद्वैधर्म्यम् ।

शृङ्गार करुणश्च

विप्रलम्भेऽपि विरहोद्भाविताऽश्रुपातविलपनाद्युद्दीपिता भावाः, करुणेऽपि । अतो विप्रलम्भ-शृगारस्य या वर्णनास्तासु करुण-रसोऽप्यनुप्राणित एवोपलभ्यते—तथाहि

"यत्त्वन्नेत्र समानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरित' प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारि-गतयस्ते राजहंसा गता-
स्त्वत्सादृश्य विनोद मात्रमपि मे दैवेन न क्षम्यते"

अत्र विरहिण उद्गारे प्रिया-स्मृति-समुद्दीपितशोकस्य शृंगार-मिश्रित एव करुणरसः ।

'इत. प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता,
मु हुस्तिेष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरु समे ।
पुनर्दृष्टि वाष्पप्रसर कलुपामर्पितवती,
मयि क्रूरे यत्तत्सविपमिव शल्यं दहति माम् ॥'

लावण्यललितांगीं शकुन्तलां तिरस्कृत्य उपलब्धाभिज्ञानांगुलीयकेन जनितस्मृतेः प्रियाविरहेण ताताप्यमानस्य नृपतेर्दुष्यन्तस्यैषोक्ति । अत्र शृगारप्रसक्त एव करुणो रसः ।

मेघदूतेऽपि यक्षस्य करुण-रसानुप्राणिता एव प्रियाया रूपविरहावस्थादिवर्णनपराः शृगार-रञ्जिता सन्देश-भणितय इति नानितिरोहित सुधियाम् ।

उपसहारः

प्रकृतमुपसंहरन्तो वयमिदं ब्रूमः— नास्ति ज..ति संस्कृत साहित्यसमं किमपि साहित्यमुत्कृष्टं माधुर्ये रसाभिव्यक्तौ प्रकृति-चित्रणे च । अस्मिन् साहित्ये करुणरस-स्निग्धा' प्रबन्धा प्रबन्धांशा मुक्तका' प्रचुरतरा. । इह तावद्दिङ्मात्रमेव प्रकृतोपयोगि किञ्चित्प्रपञ्चितम् । येषां कवीनां यासाञ्च कृतीनामिह नामानि निर्दिष्टानि, तेषां तेषां तास्ता' कृतय' साहित्यसुधारसिकै स्वयमेवावेक्षणीया. । संस्कृतसाहित्यस्य सुरम्यम् इदमुद्यानम् अपावृतद्वारम् । ये ये साहित्यास्वादलोलुपा स्तृषार्ता बुभुक्षावन्तश्च कोकिला इव विद्वद्वृन्दा अत्र सस्पृहं प्रविशन्ति विचिन्वन्ति चात्रत्यान् रसालफलनम्रान् सुसुरभिसुमनोभरकम्रान् तरून् सुमधुरवारिपूरपूरितान् कासारान् तेषां बुभुक्षा तृडितिद्वयमेव शाम्यति, ते च न्यक्कृत्य सर्वानेवान्यान् प्रदेशानत्रैव स्वकुलायाश्रयं स्वीकुर्वन्तीत्यस्माकं दृढो विश्वासः ।

# संस्कृत-वाङ्मयस्य भविष्यम्

**विमर्शसारः**—१ अतीते सिंहावलोकनम्, उदारता, विशालता, मृतभाषा, अमरभाषा वा। २ वर्तमान कालीनो ह्रासः, साहित्य सृजनम्। ३ संकोचावस्थायाः परिहारः-राज्य साहाय्यापेक्षा। उन्नतौ के दोषा बाधकाः? तेषां कथं निरोधः? ४. शुभोदर्कः, अत्रास्माक धर्मा.।

हा! अमरभारति! देवि! सुरसदन समुल्लासिते! नारद शारदा वीणानिनादाश्रये! ननु द्युलोकादवतीर्य त्वं पूर्वमिमामेवास्माकं भरतमेदिनीं स्वसंगीतध्वनिनाऽपूरयः। इत विषाद एव सकलावनी-तलतल्लजान् भूभागानपरान् भवत्याः सा मधुर-मधुरा झंकृतिः प्रासरत्। अत्रैव पर सहस्राणि वर्षाणि भवतीमुपासमाना भारतीयाः कवयो विद्वांसश्चामरां कीर्तिं लेभिरे। इहैव पूर्वं श्रवणमधुरस्तावकीन स साम-संगीतोऽश्रूयत्। नन्वासन् अत्रैव कवयो ये त्वामिष्ट देवतामिवोपासाञ्चक्रु.। यांस्तवैव करुणाकटाक्षेणानुगृहीतान् भूपालकुलमौलिमुकुटमणिचुम्बितचरणाः सम्राजो नतेन शिरसा बद्धेन चाञ्जलिना प्रणमन्तः स्वीयमहो भाग्यमिवाकलयाञ्चक्रुः? हाः! क्व गतः स कालो यदा

'पुत्रोऽपि यो भवेन्मूर्ख' स पुराद् बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम ॥'

इति सडिण्डिमघोषं राज्ञां त्वद्रसज्ञानां चचार वाक्। यदा वा

यत्र स्त्रीणामपि किमपरं जन्मभाषा वदेव
प्रत्यावासं विलसति वच संस्कृतं प्राकृतञ्च ।।"

इति वनितानामाप्यमर-भारती माश्रित्य बभूपुरालापाः संलापाश्च। क्व गतः स समयो यदा—

"जगुगृ हेऽभ्यस्त समस्तवाङ्मयै,ससारिकै. पञ्जरवर्तिभि शुकै ।
निगृह्यमाणा बटव पदे पदे,ऋजू पि सानानि च यस्य शंकिता. ।।"

इति शुकसारिका अपि वेदान जगु रेतद्देशीया ।

हन्त ! आसीत् सुदिष्टमगो[1] दिष्टो[2] यदा वय पारेऽर्णवमपि सिंहल-यव-सुमात्रादिद्वीपान गत्वा तत्र कीर्तिस्तम्भान न्यखनाम। काम्बोज बाल्हीक चीनेपु चार चार नव संगीतमगायाम। हहो! कालस्य गति. ? अधुना तु भवत्या एव पुत्रा भवतीं मृतां विकृतामरुचिरामिति किं किं न वदन्ति ! मातस्तवाद्यतनीयां जीर्णावस्थामालोच्य शंकन्ते तावन्निष्णाततमा अपि नानया स्तवायु । त्वत्सेवोपासनयाऽऽत्मन पुनीतान् मन्यमाना अपि सन्दिहन्ते कीदृशी तवायत्ति स्यादिति। त्वं चाधुना स्ववीणा-निनादनलीना न ज्ञायते कुत्र निलीनासि ? पर तवाज्ञया ग्रन्थ-विभूतिस्त्वत्रैवास्माक पार्श्वे । त्वं हि कामं महर्घान ग्रन्थमणीन् स्वेन सह नीत्वा सगीतविनोदपरायणा रुष्टा वा निलीयस्व ! परं कि करिष्यसि मात ? यस्तु तेऽत्र ग्रन्थकोषस्तस्य बलेन नूनं भवत्या वत्सला स्वामनुनीय देशाद्देश पत्तनात्पत्तनं निगमा न्निगम जनपदाच्च जनपदमाहिण्ड्यमाना. प्रत्यानेष्यन्ति ? भवत्यास्तां मरसां सुमधुराञ्च वीणां स्वयं श्रोष्यन्ति श्रावयिष्यन्ति चान्यान्। लगतु[3] नामात्र काल । किन्तेन ! प्रयत्नां

---

१. सौभाग्यमय । २. काल । ३. लगि गत्यर्थं ।

श्चेन्न त्यजामस्त्वामनुनीय पूर्ववदेवात्र प्रचारयिष्याम इति विश्वसिमः।

इतिहासनिष्णातानामत्र सर्वेषामैकमत्य यत्पुरा सर्व एवार्या एकत्रावस्थिता एकामेव भाषामभाषन्त। सा चासीदिय संस्कृत-भारती। संसारस्य सर्वा भाषा विशिष्य पुरा चार्यजातीयानां जनानां संस्कृत-मूला एव। अथ बहुकालं यावद्बहुषु देशेषु संस्कृतभाषैव लब्धप्रचाराऽवर्तत। इत. सार्धद्विसहस्रवत्सरेभ्यः पूर्वं यास्को महर्षिर्निरुक्ते—

'शवतिर्गतकर्मा काम्बोजेष्वेव भाष्यते विकारमस्यार्येषु भाषन्ते शवइति' इतिकाम्बोजेष्वपि संस्कृतभाषाया प्रचारं वदति। अद्यत्वे यथाऽंगलभाषया सर्वत्रागन्तुकास्तेषु तेषु देशेषु व्यवहरन्ति तथा तदा गीर्वाणवाण्येव देशान्तरेषु बभूव व्यवहारभाषा माद्यावराणां वणिजां सार्थवाहानां बहूनामन्येषामेवं विधानां जनानाम्। नाति कालो व्यपेतो यदोदीचां दाक्षिणात्यानाञ्चात्रभारते संस्कृतमाश्रित्यैव व्यवहारोऽभून्मिथः। अद्यापि क्वचन भवत्येव।

इयमासीत्तदा राष्ट्रस्य राज्यस्य च भाषा। परमिदन्तावदध्येयं यत्सकलजनानां प्राकृतानाञ्च जनानां व्यवहारा स्वदेशभाषाभिरेव बभूवुः। महाभारतकालेऽपि संस्कृतं शिष्टवर्गस्यैव भाषाऽऽसीदिति प्रतीयते। रामायणकालेऽपि प्राकृतानां जनानामन्यैव काचन भाषाऽऽसीत्। द्विजानां राजन्यानामन्येषाञ्च शिष्टानां संस्कृतभाषया व्यवहारा अभूवन्। तथाहि रामायणेवाल्मीकीये—

"यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति॥"

इत्यशोकवाटिकाया निलीय हनुमत उक्त्या प्रतीयते ।

परमेषाऽऽसीदिह भारते सर्वत्रैव राज्यभाषा । साधारणोऽपि जनस्तावदनया स्तोकं व्यवहारक्षमं वक्तुं समर्थोऽभवत् । सम्राजोऽशोकस्य शिलालेखा संस्कृतभाषयोत्कीर्णा लभ्यन्ते । संस्कृतविदुषः पुरा महीपतयो बहु समाद्रियन्ते स्म । संस्कृत मठानां श्रेष्ठेभ्योऽग्रहारान्[१] प्रायच्छन् । मठान् विहारान् शिक्षालयांश्चान्यान् प्रचुरैरग्रहारैः सयोज्य बटुभ्योऽन्नवसनादीन् व्यतरन् । राजानो विदुषामादरणे कियन्त सतृष्णा बभूवुरिति हि नेतिहासविदामगोचरम् । तथाहि तदा राजानोऽपि स्वय ग्रन्थान् काव्यानि चारीरचन । वाक्यपदीयस्य शतकत्रयाणाञ्च कर्तुः पाणिनीयस्य भर्तृहरेः को नाम न वेद ? रत्नावल्यादि नाटकत्रयकर्तुः कवेर्हर्षदेवस्य च चरितं को न जानाति ?

'बुधैः सह ययौ वृद्धिं स जयापीड पण्डित '

इति हि महाकवि कल्हणोऽनेकोद्भट-वामनादि पण्डिताश्रयप्रद नृपवरं जयापीडमुपश्लोकयति राजतरङ्गिण्याम् । स हि—

'विद्वान् दीनारलक्षेण[२] प्रत्यहं कृतवेतनः ।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥'

इति संस्कृत-पण्डितानमानयन् । तदानी संस्कृत-साहित्य कथं न परिवृद्धिं व्रजेत् ? नात्र चित्रम् ।

किञ्च मुहम्मदीयानामपि राज्ये संस्कृत-भाषाया पण्डितानाममविच्छिन्न आसीत्साहित्यरचना प्रयासः ।

यवनकाले एतस्मिन्नपि काले ऽत्र भारतेऽनेक उद्भटाः

---

१ भूसंपत् (जागीर) । २ पणस्यचतुर्थांश (पैसा) ।

पण्डितप्रकाण्डा बभूवुः प्रशस्तग्रन्थकर्त्तारस्तथाहि तानिह नाम्ना निर्दिशाम. कतिचन—

जगन्नाथकविराज, अप्पयदीक्षित, भास्करराय:, शेषकृष्ण', जगद्धरभट्ट, रत्नकण्ठ, भास्करकण्ठ:, भावमिश्र', शार्ङ्गधर., विश्वनाथ । एते च ख्यातकीर्तयो ग्रन्थकर्तार स्तिलराशेस्तण्डुल-कणा इवेहोच्चित्य दर्शिता । सन्त्यन्येऽपि शतशस्तत्कालोद्भवाः साहित्य-दर्शन-ज्यौतिषव्याकरणायुर्वेदादिविषयानवलम्ब्य ग्रन्थानां रचयितार । असत्यामपि राज्य प्रोत्साहनायामेतावतां प्रकाण्ड-पण्डितानां तदानीमुदयस्तेषाञ्च बृहतोग्रन्थरचना कि द्योतयति तावत् ? अमरभारत्या अमरसाहित्य न जातु नश्यति । प्रत्युत निकृत्तशाख शाखीव तनोति ।

इदानीं सस्कृतभाषाया तथा राज्यसाहाय्यं नास्ति न वेयं राज्य-भाषैव । वदन्ति चेमां भाषां मृतभाषां केचन । दिनाद्दिनं चास्या. पठन-पाठन प्रणाली मन्थरतामायाति । एतै. कारणै र्यदि

अद्यत्वे

विद्वांसोऽपि संस्कृतज्ञा हताशा भवेयुरस्या असम्भवामुन्नतिं मन्य-मानास्तन्नात्र विस्मयः । परमिदमवधेय यदा यवनानां राज्येऽपि संस्कृतभाषा न लुप्ता तदाद्य कथमेषा लोपमियात् ?

किं कर्तव्यमस्माभि' ?

संस्कृतभारत्येषा स्वगुणैरेव भवतु नाम चिरञ्जीविन्यमरा वा । सन्ति तावदत्रास्माभिरपि समनुष्ठेयाः प्रयत्नास्तानिह सगृह्य संक्षिप्य च निर्दिशाम'—

संस्कृतस्याध्ययन प्रणाली विचित्रा। नैषा सन्तोषप्रदा। 'अनन्तपारं किल शब्दशास्त्रमिति पुराऽपि विद्वांसोऽमन्यन्त। संस्कृताध्यापनस्याध्ययनस्य च सरला प्रणाली समाश्रयणीया भवेत्कान्त्वत्र प्राचीनार्वाचीनोभयमध्यमार्गोभयमिश्रा वा। पाणिनीयानि सूत्राणि सरलसंस्कृतभाषया व्याख्याय प्रयोगपदैरन्वितानि विधाय ततस्तेषां सोपानक्रमेणैवाध्ययनक्रमं कक्षाक्रमेण सह निर्धार्य शिक्षणीयानि। कोषोऽपि सोपानक्रमेणैव पाठ्यः। तत उत्तरोत्तरमुच्च श्रेणीषु मूलग्रन्थानां पठनम्।

अध्ययन प्रणाली

अद्यत्वे विज्ञानकृषिचिकित्साकलादीनामसंख्याः शब्दा आंगलभाषायां लभ्यन्ते पारिभाषिका अपारिभाषिकाश्च। संस्कृतवाङ्मये तेषां समावेशो विधेयः। एतेनास्या भाषायाः शब्दकोषोऽतिविशालतां यास्यति विश्वजनीनमस्या यशोऽव्याहतं स्यात्। अवधेयमेतत् आंगलभाषायामनेकेषां देशानां शब्दाः सम्मिश्रिताः सन्ति नात्र तद्देशोद्भवा एव। एतच्चान्यत्र विशकलय्य विवेचयाम।

शब्दसञ्चयः

आंगलभाषायां प्रत्यहं पञ्चशत्युपन्यासानां लिख्यत इति भाषाविदां सकलनेन ज्ञायते। अन्यासामपि भाषाणां भारतीयानां साहित्यं वर्धत एवेह्यापि। परं संस्कृतविदुषां न ज्ञायते किमर्थं लेखनी कुण्ठिताधुना? पुरा तु भारतीयाः स्वदेशभाषा उपेक्ष्यैक-

ग्रन्थरचना

सूत्रतामन्यैः प्रान्तैः सह रचयितुं संस्कृतभाषायामेव स्वोत्कृष्टान् ग्रन्थानरचन् न तथाधुना ? सोऽयं दैवप्रकोपो वाऽस्माकमुपेक्षा वाऽनुत्साहो वेति विद्वांस एव प्रमाणम् ।

व्यवहारे

'संस्कृतभाषाभिज्ञैः सह संस्कृतभाषयैव व्यवहरामः,' इति तावदस्माभिर्दृढं निर्धार्यानुपालनीयम् । यदि संस्कृतविद्वांस संस्कृतच्छात्रा वा लेखे भाषणे चैनां भारतीं न समाश्रयेरन्, तर्हि के ? छात्रैः सङ्कोच भय व्रीडां वाऽपहाय पाठशालासु छात्रावासेषु गृहेषु च भाषयाऽनया यथावकाशं व्यवहरणीयं गुरुभिरपि दोषोट्टङ्कण-मुपेक्ष्य तथैवानुवर्तनीयं प्रोत्साहनीयाश्च स्वेऽन्तेवसन्तः ।

स्वतन्त्रभारते

चिराय वैदेशिकविलासोपभोगभूताऽस्माकं जन्ममेदिनी दासताया दृढशृङ्खलाया मुक्त्वा स्वतन्त्रा संवृत्ता । अधुना विलसति स्वतन्त्राणामस्माकं सौराज्यम् । भारतीया अस्माकं शासकवरा भारतसमुन्नतौ प्रतिक्षणं सक्षणा । अतो भारतीयसंस्कृत्या महा-पगानां जलनिधिरिव विश्रामस्थानमुद्गमभूमिश्चास्माकं संस्कृतवाङ्-मयम् । न चास्माभिरनुत्साहैर्भवितव्यम् । इतो विंशतिवर्षानन्तरे भारतस्य समृद्ध्या सार्धमेव संस्कृतवाङ्मयमपि समृद्धं भविष्यति । न स कालोऽस्ति दूरे यदा संस्कृतभाषामध्येतुमन्यदेशीयाश्छात्रा अपि भारतमागमिष्यन्ति । इदानीमपि हरिवर्षेऽमेरिकायां चीने जापाने रूसे च संस्कृतवाङमयं तत्रत्येषु विश्वविद्यालयेषु पाठ्यते । अस्म-त्प्रतिवेशवर्तिनि काम्बोजे (काबुले) ऽपि संस्कृतस्याध्ययनं प्रारब्धम्

तत्रत्यै मुसलमानैरपि। तत्राधुना लैटिन, ग्रीक्, जर्मनीत्यादि भाषावदेव संस्कृतमप्यध्याप्यते। वर्तते नागपुरेऽन्तार्राष्ट्रीयशिक्षा-सस्था डा० रघुवीर महोदयस्य यत्र विदेशेभ्य आगत्य कतिपये छात्राः संस्कृताध्ययन कुर्वन्ति।

महानसादौ धूमासहचरितं वह्निं निरीक्ष्य वह्निधूमयोरविनाभावतया साहचर्यं ज्ञात्वा दूरस्थितोऽपि पर्वते धूमं विलोक्यैव 'पर्वतो वह्निमान्' इत्यनुमिनोति। इत्येतां मनोविज्ञानयुक्तिमाश्रित्य वयमेतद् द्रढयामो यदस्माक संस्कृतवाङ्मयस्यार्यातिमङ्गलमस्त्येव, यतो हि यस्या भूतमुज्ज्वलमासीत्, या सुदारुणे यावने शासने लोपितापि नानशत्, या चेदानीमपि प्रकाशते नीहारविमुक्तैन्दवी लेखेव, याञ्च स्वगुणैरेव सर्वे प्रशसन्ति, यस्या आधारो दृढतम, सा कथमधुना स्वतन्त्रे भारते नङ्क्ष्यति। विकसिष्यत्येवेत्येव सुदृढं ब्रूम।

उपसंहार

आम्, यदि संस्कृतज्ञा स्वकर्तव्यानि संस्कृतभाषासमुन्नतिकराणि नानुपालयिष्यन्ति, यदि वा भारतं संग्रामसङ्कटे पतेत् तदाऽस्याः प्रगति मन्थरा भविष्यति।

---

## हिन्दू-कोड-बिलः ( विधेयकः )

**विमर्श सारः**—१ स्वरूपम्, नारीणां हितम्, देशसमाजदशायां प्रभाव, दोषबाहुल्यम। २ परिष्कार, हिन्दूजनताया अप्रसाद ।

गत दिवसेषु भारतीयसमाचार-पत्रेषु 'हिन्दूकोडबिल' इत्यधिकृत्य दीर्घदीर्घतरा विवादात्मका प्रकाश्यन्ते स्म तावदुन्ता। को नामैष हिन्दूकोडबिल इति विवक्षायां ब्रूम ।

स्वरूपम्

भारतस्य स्वातन्त्र्य लाभात्प्रागेव श्रीडाक्टर-देशमुखमहोदयो हिन्दुजनतायां नारीवर्गस्यानेकै सामाजिकै कष्टै प्रेरितो नारीणा दशा विधानबलने समुद्धतु बहून् भारतीयान विधानविचक्षणान् सम्मन्त्र्यैकमतिविस्तृत प्रबन्धमरचयन् यत्र हिन्दुजनतायां प्रचलितान् दुर्व्यवहारान् नाशयितु विशिष्य च वनितावर्गस्य दयनीयां दशा समुन्नमितु बहूनुपायान् विधींश्चादर्शयत्। तदानीमयमेव 'हिन्दूकोडबिल' इति नाम्ना प्रसिद्धिमगात्। अथ श्रीरावमहाभागस्याध्यक्षतायामेका समिति संस्थापिताऽभवत्। अस्यां पञ्चदश सदस्या न्ययुज्यन्त। एते हि देशमुखमहोदयेन सूत्ररूपेणोपस्थापितान विचारान् मिलित्वा पुनर्व्यमर्शयन्। एतेऽखिलभारते लब्धप्रचारान हिन्दुसमितीनां सदस्यानप्यामन्त्र्य तै सह हिन्दूनां सामाजिकधार्मिक-दशास्तासां परिष्करणादिकञ्चावलम्ब्य मन्त्रणामकुर्वन। ततस्ते तान परिष्कारपूर्णान् विचारान् निबध्य शासनाधिकारिण उपस्थापयामासुः पुन विचाराय प्रचाराय च। हिन्दुजनतादशापरिष्कारगर्भा विचारावली

नविस्तृता एषैवाधुना हिन्दूकोडबिल इत्यभिधया ख्याता ।

अस्मिन हिन्दूकोडबिले हिन्दुधर्मस्य हिन्दुसमाजस्य च प्राय सर्व एव व्यवहारा आचाराश्च विवेचिता । स्मृतीनामेवेदं कलियुगीयमेकं प्रतिरूपमिति युज्यते वक्तुम् ।

विषया

अत्र प्राधान्येन 'नार्या जीवन्तं भर्तार विहाय पत्यन्तरगमनम् , विधवाया सम्पत्त्यधिकार , बहुविवाहो नराणाम् , नार्या स्वपितु सम्पत्तावधिकार', दत्तकदायम् , इत्यादय पारिवारिकसामाजिकाश्चान्ये विषया: सन्निवेशिता । एतेषा विस्तृत्य विवेचन नियमनिर्धारणञ्चात्र कृतम् । एवमयं 'बिल.' स्मृतिशास्त्राणां दायभाग-विवाह-प्रकरणोक्तान् नियमान् विशिष्य स्वैरतया परिवर्तयितुमिवोद्यतः ।

भारते धर्मस्य समाजस्य च वर्तमाना दशामनुचिन्त्य 'बिले'-ऽस्मिन् निर्दिष्टा. केऽपि युक्तिगर्भा सशोधनकरा विचारा गुणपक्षमप्याश्रयन्ते । तथाह्यत्र सन्ति केऽपि गुणास्ते च—

गुणा

(१) पुरुष एकपत्नीव्रत. स्यात् ।

(२) विधवाया: सम्पत्त्यधिकार. ।

(३) दत्तक-सम्बन्धिनो विविधा विषया. ।

एवमत्र दृश्यते पुरुषा सत्यामपि जायायां दारान्तरग्रहणं कुर्वन्त उपरतायां पूर्वायां भार्यायां पुनर्दाराहरणं रचयन्तो न नाम निगृह्या भवन्ति । ते हि विविधाभि पीडाभि स्वभार्या दु.खीकुर्वन्ति । कि नैषा स्वैरकारिता तेषाम् ? अनेनैव स्वभर्तॄणां दुर्व्यवहारेण

पतिपरायणा बह्व्यो नार्य आत्महत्यां कुर्वते। बह्व्योऽपरा आततायिनां हस्तेषु पतन्ति, स्वधर्ममपि जहति। नराणामेष स्वच्छन्दाचारो न नाम निग्रहमर्हति किम् ? इयन्तु जीवत्भर्तृकाणां दशा। अथ मृतभर्तृकाणां दशा ततोऽपि भृशं शोचनीया। यस्या पतिरेवैकं शरणम्, सा मृते भर्तरि नि सहायावस्थां प्राप्नोति। ज्ञातयश्चैतां सम्पत्तिमाजिहीर्षव कदर्थयन्ति मारयन्ति च। इदमनेकधा दृष्टचरम्। कदाचनाऽनपत्या विधवा स्वपितृकुलादन्यस्माद्वा गोत्राद् दत्तक जिघृक्षति परं ज्ञातिभिर्नानुमन्यते स्वभर्तृगोत्रादेव दत्तक गृह्वाणेतिवादिभि। सोऽय तावद् गृध्नूनां तेषा कदर्थनापटीयान् निर्बन्धपूर्णो दुर्व्यवहार क्षते क्षारनिपात इव दु खीकरोति वराकीम्।

दोषा अस्मिन् 'बिले' तावद्दोषा अपि सन्ति बहवः। तानिह निर्दिशामः।

आलोचनाचतुरास्त्वामनन्ति यदत्र हिन्दु-सस्कृतेः सुरक्षाया नास्ति विचार.। अस्य 'बिलस्य' निर्मातार सर्वे एव पाश्चात्य-सभ्यतायां दक्षा भारतीय-संस्कृत्यनभिज्ञाः। श्री देशमुख महोदया चतुर्थं सन्दर्भं विशिष्य सविरोधमालोचयन्त एवं भणन्ति—

'भारतीयस्य जीवनस्य मर्मपूर्णं विचारं बलादिव प्रक्षिप्तानां समुन्नतिप्रदतया निर्दिष्टाना विषयाणां प्रचारार्हन्तीं च विनैव शुद्धतमानां भारतीयाचाराणामुत्पाटनं न तावत् पाण्डित्यम्' इति। अत्र सन्ति मुख्या दोषा इमे—

## (क) जाया परित्यागः

नर स्वजायां पत्यन्तरं गन्तुमीहमानां त्यक्तुं क्षमः। अयञ्च

परित्यागस्तदैव भवितुमर्हति यदा—

(१) उभययोरेकतरस्य क्लीवत्वं शंक्येत ।

(२) उभययोरेकतरस्य च दुर्वृत्तम् ।

(३) पति पत्नी वा स्वधर्मं परित्यजेत् ।

(४) दम्पत्योरेको दु साध्यैरुन्मादादिभि र्गदैर्ग्रस्तो भवेत् ।

इतीदृशी दशा समापतेत् । किञ्च सूक्ष्मेक्षिकया निरीक्षमाणानां प्रेक्षावतां नेदमतितिरोहितं यदनेन न स्यादिष्ट-साधन, वनितानामपि त्वनिष्ट-साधनमेव । तथा हि बन्धन-निर्मुक्त पुरुष. कापटेन छलेन वैनयकौशलेन च स्व [illegible] कृत्य जह्यात् । स्वमनोऽभिप्रेता काञ्चनापरां कलत्रत्वेन च स्वीकुर्यात् । विषेणान्येन केनाप्यति गूढेनोपायेन वा जाया पति पतिर्वा पत्नीं व्यापादयेत् । यथा [illegible] नारी नरो वा स्त्रीयां कुटुम्बिनो गृहदेवतामिव सनादरेन दृश्यते तथा ऽसौ भारतीय-संस्कृत्या प्राणमयी भावना शनै शनै लोपं गमिष्यति । पतित्यक्ता नारी हिन्दूसमाजे न स्वाभिजनाद्यनुरूपं द्वितीयं वर सुखेनैव प्राप्स्यति । तदा चेहापि पाश्चात्यदेशवद्विवाह इत्येषा सञ्ज्ञा विधानपत्रेष्वेव स्थानं लप्स्यते । दाम्पत्यजीवनस्यात्र प्रेममयी सहानुभूतिमयी च भावना नङ्क्ष्यति । सत्यामेव शरीरशक्तौ सत्येव वा विभवे पुरुष स्वभार्योपचरिष्यति । सत्येव शरीरलावण्ये तारुण्ये वा नारीं पुरुषोऽप्युपचरिष्यति । पलक्नीनां दुर्बलाना दरिद्राणां रुग्णानां वा दैवमेव शरणं तदा ।

## (ख) दुहितृभ्यो दायप्रदानम्—

अनेनापि नारीणां लाभोऽल्पीयान् हानिस्तु महीयसी। तथाहि—

(१) यदि स्वपितृकुलात्सम्पत्तिमाहरिष्यत्यपि नारी, स्वभर्तृ-कुलादपि तया स्वननान्द्रे देय. स्यात् सम्पत्ति भाग पत्रु ।

(२) पतिसद्मने निवसन्ती नारी दूरे स्थिता स्वपितृसम्पत्ति प्रबन्धयितु नानायासेन क्षमा। सा चाल्पमूल्येनैव पितृपैतामहिकं दाय विक्रीय न तस्मात् प्रचुर लाभ प्राप्नुयात्। अनेन शनै' शनै हिन्दुसमाजो रङ्कोऽपि सम्भविष्यति। मुसलिमसमाजस्य दारिद्र्यस्य बलवान हेतुरयमप्येको यत्ते स्वदुहितृभ्यो दाय ददति। गुर्जर-मुम्बा-पुरी-प्रान्तयो निवसन्तो मोमीन-खोजा-जातीया मुसलमाना मिता-क्षरा-विधानमनुसरन्ति। ते हि समृद्धतमा यवनानाम्, पारम्परी-णमपि तेष्वाढ्यत्वं तिष्ठति। अन्ये विरला एव ते मुसलमानाः त्रिपुरुषादधिक येष्वाढ्यत्वं तिष्ठेत्।

(३) भ्रातृभगिन्यो सहजः स्नेहोऽपि विलय यास्यति। तयोर्मिथः कलहो द्वेषोऽभियोगाश्च प्रचलिष्यन्ति।

(४) अथाप्ययमपरोऽपि दोषः स्यात्—पितृसम्पत्तिमतीमेव कन्यां वरितु सर्वे कामयेरन्। पितृसम्पत्तिरहिता स्वानुरूपान् वरानपि न लभेरन्। या हि पितुरेकमेवापत्य स्यात् तामभ्रातृमतीम्, अभगिनिकामेव कन्यकां कलत्रत्वेन ग्रहीतु सर्वे विचेष्यन्ति। सोयं विवाहमहार्घप्रथा-भाराभिभूते हिन्दुसमाजे स्पष्ट गण्डस्योपरि पिडक एव भविष्यति।

हिन्दूकोडबिलस्य समस्ते भारते नरैर्नारीभिश्च विरोधः प्रदर्शितः। अनेन हिन्दुजनानां समाजे महान् कोलाहलः सञ्जातः। भारतस्य प्रतिकोणाद्दिल्ल्यां शासनाधिकारिणस्तारपत्रैरन्यैश्च पत्रैः प्रार्थिता अशेषैरेव समाजधर्मसभासदस्यैः। कतिपयेषु नगरेषु जनसम्मर्दस्य निर्गमोऽप्यभूत्। अथ चास्य पक्षं समर्थयन्त्योऽतिविरला एव दृश्यन्ते नार्यो नराश्च तादृशः। सप्तोत्तर-द्विसहस्रवैक्रमे माघे दिल्ल्यां येषु दिवसेषु राज्यसंसदि हिन्दूकोडबिलमधिकृत्य वादोऽचलत् तेष्वेव दिवसेषु तत्र राज्यसंसद्भवनस्य द्वारे विरोधपक्षमाश्रितानां च समर्थनपक्षेऽवस्थितानां च सङ्घट्टमयो महान् कोलाहलोऽभूत्। विरोधवादिनस्त्वमुं हिन्दूकुष्ठ (कोढ) बिलेति संज्ञया व्यवहरन्ति स्म।

जनताया कोलाहल

सप्तोत्तर-द्विसहस्रवैक्रमवत्सरस्य माघे राज्यसंसदि महान् वादोऽचलदमुमधिकृत्य। तत्र तु श्रीनजीरुद्दीन अहमदाभिध एको मुसलमान-सदस्योऽप्यमुं हिन्दूनां कृते हानिकरमेव प्रत्यपादयत्। अत्र विविधा बुद्धिमन्तः सदस्या 'बिले' सार्वजनीनान् परिष्कारान् चिकीर्षवः स्वान् स्वान् विचारानुपस्थापयाञ्चक्रुः। एतेषां विचार-निबन्धनानां संख्याऽपि पञ्चाशदुत्तर-पञ्चशतमिताऽभवत्। यद्यत्र परिमार्जनं तथा क्रियेत यथा नानेन भारतीया संस्कृतिर्व्याहन्येत तदाऽयं सार्वजनीनः संपद्यतेऽत्र भारते येन च सर्वोऽपि हिन्दुसमाजः समृद्धिं समुन्नतिं च प्राप्स्यतीति दृढं

सार्वजनीनता कथं स्यात्?

विश्वमन्ति सर्वे संस्कृति-रक्षण-मक्षणा. भारतीया नीतिदक्षा विचक्षणा ।

---

## संसारस्य मुख्यानामादोलनानां गतिः

**विमर्शसारः**—१. जनादोलनानां प्रगति. २ विश्वनीतावेतेषां प्रभाव । ३ शान्ति, पुनरुत्थानम्, संघर्ष ।

गतिमान् संसार । जन्तुशास्त्रपण्डितानामस्त्येको 'विकासवाद' इत्याख्य सिद्धान्त । तत्र जगतो विशिष्य च मानवानां विस्तारं प्रसारञ्चाधिकृत्य श्री-डार्विनादिभिर्जन्तुशास्त्रकोविदैरनेकानि विज्ञानतुलायां सन्तुलितानि युक्तिप्रतिपादितानि मतानि निर्दिष्टानि यान्यधुना सर्वे पण्डिता स्वीकुर्वते। तत्रैव 'स्थित्यै[1] संघर्ष' इति 'बलवत्तमस्यैव[2] जीवनम्' इति च सिद्धान्तद्वयी संसार-विकासस्य हेतुषु परिगणिता। नरा स्वं स्वसमाजं च समुन्नमितु प्रयतन्ते। समुन्नताश्च ते सर्वस्यामेव मेदिन्यां स्वप्रभुत्व रचयितुं चेष्टन्ते। एषा नैसर्गिक्येव मानवी प्रवृत्ति.। तत्र ये बलिष्ठा स्तेऽपरान् तिरस्कृत्य सर्वोत्कर्षेण वर्तन्ते। इयमेव चेष्टा विश्वस्मिन्नपि जगति कोलाहलान्, युद्धानि, तानि तानि च जनादोलनानि जनयति।

उपक्रम.

---

1. Struggle for Existence 2 Survival of the fittest.

"आरब्यजातिरेका संघटिता संघमयी च जातिर्भवेत्, सा च विस्तारमागच्छेत्। अरबदेशोऽपि विस्तरेत्", अयमस्यादोलनस्योद्देश्यः। अस्य नायकास्त्वेव भणन्ति—मोरक्को देशाद् इराकस्य कच्छं यावदेकं दुर्भेद्यमारब्य-साम्राज्यं स्थापनीयम्। मिश्रदेशः पाकिस्तानप्रदेशोऽप्यस्य सक्रियं साहाय्यं कुरुत। अस्य केन्द्रं 'सीरिया' वर्तते। प्रधाननायकः श्री माउदीमहोदयः।

पैन-अरब-आदोलनम्

तुरुष्कदेशस्य शासको धर्माचार्यश्च श्री अब्दुलहमीद महाभागोऽस्य प्रधानः सञ्चालकः। जातिवशवर्णादिकृतान् भेदानुपेक्ष्य समेषामेव मुसलमानानां संस्कृतिं धर्मञ्चावलम्ब्यैक एव संघो भवेत्। येन मुसलमानानामेकं बृहद्राष्ट्रं निर्मीयेत। अस्यादोलनस्य साहाय्येन स स्वप्रभावं वर्धयितुमैच्छत्। अब्दुलहमीदस्य मृत्योरनन्तरं मन्दगतित्वं प्रापद्द आदोलनम्। परं तथाप्येतेन प्रेरिताः सर्वे मुसलमानाः स्वाधीनतायै चेष्टयितुं प्रारभन्त। काले काले चानेके मुसलमान-नायका आदोलनमिदं प्राचारयन्। पुपुषुश्च तैस्तैः प्रयत्नैः। पैन-अरब-आदोलनादस्योद्देश्यो विस्तृतो वर्तते।

पैन-इस्लाममतम्

अयमितः पंचविंशतिवर्षेभ्यः पूर्वं संस्थापितोऽभवत् संघः। अस्य प्रधानकार्यालयो जिनेवानगरेऽस्ति। अस्मिन् द्वौ राज्यानां प्रत्येकस्य देशस्य, एको बृहद्यन्त्रालय-स्वामिनामेकश्च श्रमिकाणामिति मिलित्वा चत्वारः सद-

अन्ताराष्ट्रिय श्रमिका-

दोलनम्

स्या प्रतिराष्ट्रस्य भवन्ति। प्रतिवर्षमस्य संघस्य जिनेवानगरे भवति परिषत्-सम्मिलनम्। श्रमिकाणां शिक्षाऽर्थ-स्वास्थ्य-निवास-कार्यकालविभागादीनां विमर्शोऽत्र भवति। यद्यपि शासनसञ्चालकानामस्मिन् नाम्नि तादृशी निष्ठा तथापि राष्ट्रसंघेऽद्यावधि सप्ततिमिता सन्धयो नवशतमिताश्च प्रस्तावा अस्मिन्नान्दोलने प्रतिष्ठां लेभिरे। श्रमजीविनां मानस्याप्यनेन रक्षा विधीयते।

फासिस्टान्दोलनम्

ख्रिस्तीये नेत्रनयननन्दशताब्दे (१९२२) यदा मुसोलिनी महोदय इटल्या अधिनायकपदम् अलञ्चकार तदा [illegible] 'फासिस्ट' इतिनाम्ना व्यपदिदेश। 'राष्ट्रस्यैक एव नेता युज्यते। तमाश्रित्यैव राष्ट्रस्योन्नतिः। शासनसञ्चालनमपि तेनैव। इत्येष सिद्धान्तोऽस्यान्दोलनस्य। साम्राज्यवाद-पक्षस्थमिदं जनतन्त्र-विरुद्धञ्च। मुसोलिनीमहोदयस्य निधनेन सहैवेदमपि विलीनम्।

अन्ताराष्ट्रिय[1]-समाजवाद

शतवर्षाणि समाजवादसंघस्यास्य व्यतीतानि। अस्य ध्येयस्तु श्रमिकाणाम् आढ्यशोषणान्मोक्ष इति विद्यते। शतवर्षाऽभ्यन्तरे चतुर्वारं संघस्यास्य विघटनं प्रतिघटनञ्चाभवत्।

(१) ख्रिस्तीये वह्निवेदवसुशशांके (१८४३) वर्षे रूसदेशे संसारस्य सर्वान् श्रमिकान् संघटय्य तान् धनेश्वराणां पीडाया मोचयितुं

---

१ कम्यूनिस्ट इंटरनेशनल।

श्री कार्लमार्क्स-श्री फ्रेडरिकएगल्समहोदयौ सघममुं प्रतिष्ठापयामासतु. । अनतिकालेनैव विघटितोऽभवत् संघोऽसौ ।

(२) खिस्तीये शशिवसु वसु चन्द्रे ( १८८१ ) वर्षे फ्रांसदेशस्य राज्योपप्लवस्य शताब्दोत्सवोऽभूत् । तदानीं संघस्यास्य पुनरपि संघटनमभवत् । ततो द्वात्रिंशद्वत्सरान प्राचलन् । अथ यदा प्रथमविश्वयुद्धावसरे 'संसारस्य श्रमिकाणां युद्धविषयिणी कीदृशी नीति स्यात् ?' इति विषये मतभेदोऽभवत् तदा संघोऽसौ पुनर्भग्न ।

(३) एकोनविंशत्युत्तरैकोनविंशतिशतवत्सरे (१९१९) खिस्तीये रूसे राज्योपप्लवो महानभूत् । तदा तत्रत्यै. कार्लमार्क्स महोदयस्य लेनिनमहोदयस्य चोदारान सिद्धान्तान प्रचारयितुमसौ संघ प्रतिघटित । तदानी 'कोमिटरन' इति संक्षिप्त नाम चास्य कृतम् । पर द्वितीयमहायुद्धे पुनरपि विघटितोऽयम संघः ।

(४) रूसदेशस्यैको नायक श्री ट्राटस्की महोदयोऽमुं पुनरघटयत् । तदानीं फासिस्टवादस्य तात्कालिकरूसशासनस्य च विरोधायास्य प्रतिष्ठापनाभवत् । परं ट्राटस्कीमहाभागो मृत । अयमपि सघ. शैथिल्यमाप ।

भारतस्य समाजवादान्दोलनम्

अयं संघो भारते वर्तमान शासनेन न सन्तुष्ट । देशस्य दारिद्र्यं दूरीकर्तुं पतितान दीनानन्त्यवर्गान जनानुद्धर्तुमस्य प्रयास । विश्वजनीनान भावान प्रचारयितु चेष्टतेऽसौ सघ । राष्ट्रस्योन्नति समाजस्योन्नतिमपेक्षते । अत पूर्वं स्वीय समाज एव प्रबोध्योत्थापनीयस्तदा राष्ट्रकल्याण सम्बो-

भवीति । अनेन समाजवादादोलनेन स्वकार्यप्रणाल्येवं तावन्नि-र्धारिता—

(१) दरिद्रता—प्रतिशत नवतिजना भारते दरिद्रा । अत्र प्रतिमासमायस्य सामूहिककलनया ज्ञायते यदेको विंशतिरूप्यकाणि लभतेऽपरो लक्षाधिकान्यपि । स एष महान् भेदः । एकस्मिन्नेव राष्ट्रे निवसतां कैमर्थिकोऽयं गरीयान् विशेष ? अयमुत्पाटनीय । राज्यभुजां निधयो निर्धनेभ्यो वितरणीया ।

(२) भूविभागः—य एव कृषि कर्षति, बीजं वपति, सस्यं पालयति, लुनाति च स एव भूमेरीश्वर नान्यस्तत्रान्येषां न स्यादणीयानपि हस्तक्षेप । निःश्चितैव कर्षितु शक्या भू स्याद् हालिकानामपि, नाधिका ।

(३) भूस्वामितालोपः—न कोऽपि भूस्वामी स्यात् । ये हीदानीं महाभूस्वामिनस्तेभ्यो भूमिरपहृत्य सविभजनीया । न च तेभ्यस्तस्या प्रतिमूल्यं देयम् । ये तु लघुभूस्वामिनस्तेभ्योऽपि कृषि-कर्महितमनुचिन्त्यैव देयम् ।

(४) ग्रामनिर्माणम्—भारतगणराज्ये सार्धपञ्चलक्षमिता ग्रामाः । तेषामार्थिकी सामाजिकी दशाऽतिकृपणा दयनीया च । नगराणा हिताय ग्रामा शोष्यन्ते । अतो ग्रामेभ्यो जना नगरमभि-यान्ति । तत्रैव च वसन्ति । अय क्रमो न श्रेयस्कर । ग्रामाणा पर्यवस्थापनं समुन्नयनञ्चापेक्ष्येत । ग्रामान्नगरे समाश्रितास्तत्रैव प्रतिनिवासनीया ।

**(५) उद्योग प्रोत्साहनम्**—धनाभावेनोद्योगो न लभते प्रोत्साहनम्। एतच्च राज्येनैव शक्यते कर्तुम।

**(६) शिल्प शिक्षा**—धनस्योद्योगयन्त्राणामस्तु नाम न्यूनता परं श्रमजीविनामत्र महीयसी संख्या। यदि श्रमजीविन शिल्प-शिक्षासु दक्षा भवेयुस्तदाऽपि भवेदुद्योग-व्यवसायानां समुन्नति।

**(७) धनम्**—राज्यशासन परराष्ट्रेभ्यो धनमृणरूपेण गृहीत्वा भारतस्योद्योगशालानां शिल्पशिक्षालयानां निर्माणाय अन्येषाञ्चैव-विधानां निर्धनता-नाशकराणाम उपायानामवलन्बनाय तत् प्रयोज्यम्।

**(८) व्यापारः**—राज्यादेशपत्राणा प्रचारेण साधारणा वणिजो यावद्राज्येन जीवितु न समर्था। पक्षपातोप्यत्र बलीयान् दृश्यते। विदेशैः सह वाणिज्यव्यवहारेषु राज्यशासनस्य पूर्ण निय-न्त्रणं स्यात्।

**(९) महर्घता**—अन्नानामत्युत्पादनेन राज्यवेतनानाञ्च नियमनेन द्रव्याणां मूल्यानि नूनमल्पीभविष्यन्ति।

**(१०) तस्कर विक्रयः**—अस्योन्मूलनाय प्रबलः प्रयत्न. समाश्रेय। आयकरनिरीक्षिका समितिरत्र न साफल्यं लेभे। अन्य कोपि विधिरनुष्ठेय।

**(११) आजीविकाभावः**—निर्दिष्टकार्यमरण्याचरणेनैव जीविकाप्रश्नोऽपि स्वयं व्यपेष्यति।

**(१२) पुनर्वासः**—शरणार्थिनां पुनर्वासो द्रुततर प्रचुरेण धनेन विधेय।

(१३) आचार भ्रंशः—अयमसुरसमूह इव प्रत्यहं वर्धते। अस्य नाशायाऽपि प्रयतनीयम्।

(१४) शासनप्रणाली—वर्तमाना शासनप्रणाली बृटिश-शासन-परिपाटीमेवोपजीवति। अस्यामपि परिवर्तनमपेक्ष्यते।

(१५) केन्द्रशासनान्मुक्तिः—प्रान्तशासनं न केन्द्रशासन सम्बद्धं स्यात्।

(१६) शिक्षा—प्रारम्भशिक्षाऽनिवार्या निःशुल्का च भवेत्। मध्यमशिक्षा शिल्पमयी। उच्चशिक्षा केवलमनुसन्धान प्रवणानामेव स्यात्।

(१७) जनसंख्या—रक्तबीजबिन्दुवत्समेधमाना जनसंख्या सन्ततिनिरोधादिभिरुपायैर्नियमनीया।

(१८) विधानम्—भारतगणराज्ये घोषितं जनतन्त्रशासन प्रक्रियारूपेण वर्तनीयम्। विनाभियोगं कारावासो मा भूत् कस्यापि।

एवमेतेऽष्टादशोपाया भारतस्योन्नतं कर्तुं समर्थाः।

अस्य समाजवादसंघस्य कार्याणि न्यूनानि क्रियात्मकानि बहूनि चालोचनात्मकान्येव भवन्ति।

---

# विज्ञानाविष्काराणां मानवजीवनाय हितकर्तृत्वम्

**विमर्शसारः**—१ विज्ञानमयजीवनम्, स्थलजलाकाश पातालमार्गाणां जयः। २ विद्युत प्रभाव, मणिनिर्माणम्, दुरुपयोगो दारुण।

उपक्रम

विज्ञानप्रधानेऽस्मिन् युगे मानवोऽपि विज्ञानमय एव दरीदृश्यते। न हि किमपि तद्यत्र विज्ञानं नानुस्यूतं स्यात। यदन्नमद्मस्तत्रापि विज्ञानस्य प्रवेश। यानि वस्त्राणि धारयामस्तत्रापि विज्ञानस्य व्याजृम्भ। एवं यानि पुस्तकानि समाचारपत्राणि च प्रत्यहं पठामस्तान्यपि वैज्ञानिकैर्यन्त्रे निर्मितानि। यानि मधुरमधुराणि संगीतानि दूरदेशानाञ्चोदन्तान् ध्वनिवाहकयन्त्रैः शृणमः, यैर्यानैर्वाष्पचालितैर्दूरदेशान् याम, यानि चित्राणि चलचित्ररंगशालासु विलोकयामस्तत्र सर्वत्रात्मेव व्याप्तं विज्ञानम। अशने पाने विहारे व्यवहारे च विज्ञानस्यैव व्याजृम्भितं प्रभावं निर्वर्णयामः। किं नाम तद् यन्न विज्ञानेनाधुना सम्पादितं सहकृतं व्यापृतं वा स्यात्? विज्ञानस्यैतावतीं सर्वव्यापकतां पर्यालोच्येदमनुमातुमपि न शक्यते यदित पूर्वं यदामी विज्ञानाविष्कारा न बभूवुस्तदा कथंकारं लोकाः स्वजीवनयात्रां निरवहन्निति। किञ्च तदापि लोका अवर्तन्त। अशनवसनादीनि द्रव्यजातान्यासन् तदापि। विज्ञानस्य प्रभावेण मानवलोक कियानुन्नतोऽभवत? इयञ्चोन्नतिरस्यायत्तावपि मंगल-

मेव करिष्यति न वेत्येष प्रकृतो विषयः। एतदधिकृत्येह किञ्चिद् विवेचयाम —

विज्ञान पूर्वं स्थले स्वराज्यं प्रासारयत्। विद्युत आविष्कारः पूर्वमभूत। अस्या आविष्कार एव विज्ञानयुगस्य बभूवारुणोदयः। विद्युदेवोत्तरकालिकानां सर्वेषामेवाविष्काराणां जननी। विज्ञानाविष्कारहर्म्यस्य असावस्ति दृढा बृहती चाधारशिला।

स्थले विजयः

जेम्सवाट महोदयस्ततो जार्जस्टीफन्सनमहाभागो वाष्पयानमाविश्चकार। तदा सर्वे लोका विनैव वाहबलेन चालितानि वाष्पयानानि दृष्ट्वा चकिता अभूवन्। अथ शनैः शनैः विद्युन्माहात्म्येन विविधानि विस्मयकराणि द्रव्याणि यन्त्रमयान्याविष्कृतानि वैज्ञानिकैर्यानि साम्प्रतमस्माकं जीवनस्य वर्तनाभागभूतानि सञ्जातानीति वयं विद्मः।

स्थलस्य विजयेन सहैव जलेऽपि मानवः स्वगतिं निराबाधां रचयितुमैच्छत्। अकूपारतले महाकाया दानवनिकाया इवाधुना सहस्रशो जनान् ढौकयन्तः पोतनिचया धावन्ति। भारतात् पञ्चसहस्रक्रोशमितदूरे स्थितान् पारावारपरतीरवर्तिनो हरिवर्षस्य प्रदेशान् पक्षेणैव पोतमारुह्य प्राप्नुमः। जलाभ्यन्तरेऽपि यास्तरण्यः सञ्चरन्ति ता जलनौका अपि वैज्ञानिकैः निर्मिताः। एता युद्धकाले गुप्तसेनासंवहनायाधिकमुपयुज्यन्ते। किञ्चैतासां जलतरीणां नाशनस्यान्वेषणस्याप्युपाय आविष्कृतः। एकं वर्तुलाकारं टारपीडोयन्त्र-

जले विजयः

मेता जलाभ्यन्तरचारिणीरतरणीरन्विष्य तथा प्रहरति यथा जलतरी शतधा खण्डिता भवति । पोतविद्यायाः प्रभावेणैव वयमकूपारपारीणानि वस्तूनि स्वदेशजानीवाल्पेनैव मूल्येन लभामहे ।

आकाशे किलोड्डीयमानान् खगान् पश्यन् मानव आदिकालादेव गगने स्वगतिं चकमे । पर विज्ञानयुगेऽस्मिन मानवस्य सैषा चिरलालिता लालसाऽपि शशाम । वैज्ञानिकै

आकाशे विजय

बृहत्परिणाहा विमाना रचिता ये शताधिकानपि जनानेककालमेव ढौकयितुं समर्थाः । वैहायसेनाध्वना चतुर्विंशतिहोराभिर्वयं लण्डननगरीं व्रजाम । स्थले जले वा कष्टान्यभूवन् यानि यात्रिणां तानि सर्वाणि विमानैरल्पीकृतानि । युद्धकाले त्रियति गतिमतां तादृशानां विमानानां निर्माणमऽभवत् यै शताधिकाऽपि सेना युद्ध-सम्भार-सम्भृताऽवाह्यत ।

भूगर्भेऽपि विज्ञानसाहाय्येन मानवा सञ्चरन्ति । क्रोशान वितता आकरा कोलकादीनां येषु सहस्राधिकाः श्रमिका नक्तन्दिनं कर्मसु सक्ता । भुवो गर्भेऽपि स्थलवद्

पाताले विजय.

बाष्पयानानि चलन्ति पाश्चात्येषु । प्रासादा अपि शोभन्ते । नदीनां कुल्यानाञ्चाधो वसतयो विलसन्ति । सोऽयं पातालेन सहैव सम्बन्धितो भूलोको धुना कथन्नाश्चर्यं जनयेत् ?

वैज्ञानिका द्युलोके न केवलं सञ्चरन्ति अपितु तत्रत्यानां

ज्योतिष्मतां लोकानां सर्वं स्थूलं वृत्तं ते पश्यन्ति। तथाहि तादृशान्यणुवीक्षणयन्त्राणि निर्मितानि यैः

द्युलोके

किमपि वस्तु स्वाकृत्याः सप्तदशसहस्रगुणित स्थूल बृहत्परिणाहञ्च दृश्यते। एतत्साहाय्येनाधुना दूरदूरतनानामपि ज्योतिष्पिण्डानां वृत्तं गतीश्च वयं जानीमः। सौरमण्डलन्तु सविशदं ज्ञातमस्ति। चन्द्रलोकं प्राप्तुं च प्रयत्यते। इदं च वैज्ञानिकैरुद्घोषितम् यदागामिदशवर्षाभ्यन्तरे ते चन्द्रलोकं यास्यन्ति। इदमत्रावधेयम्—प्रकाशस्य गतिः प्रतिनिमेष[1] सार्धैकनवतिसहस्रयोजनमिता वर्तते। [illegible] प्रकाशो भूलोकं सार्धाष्टकलानन्तरं[2] प्राप्नोति। एतेनैवानेन सवितृमण्डलमस्मल्लोकात् कियद् दूरेऽस्ति। किञ्च येषां नक्षत्राणां तारकाणां च प्रकाशो वर्षसमूहानन्तरं प्राप्नोतीह ते कियन्तो दूरतमाः स्युरस्मज्जगतीतलादिति तर्कयितुमपि वैज्ञानिका एव प्रभवः। तेषामेवं विधानां ज्योतिर्मयानां लोकानामपीतिवृत्तं वैज्ञानिकै रणुवीक्षणैर्विदितमस्ति।

अन्तरिक्षे सञ्चरद्भिर्वैज्ञानिकै र्वायुलोकः स्वयमेव निर्जितः। किञ्च वायुलोकेनामी स्वोदन्तानां सुकरां गतिम् अवगत्यापरमपि महान्तमस्योपयोगमलभन्त। तारयन्त्राणां

वायुलोके

कृते रज्जुविस्तारः खेदावह एवाभूत्। मूकभाषणेनापि किम्? ध्वनिवाहकयन्त्रस्याविष्कारेण स एष खेदोऽपाकृतः। अधुना गृहे गृहे ध्वनिवाहकयन्त्रेण संगीतानि वार्ताश्च

---

१. सैकण्ड। २. मिनिट।

अस्तु न. 'समस्तं जगत् करतलस्थमिव चाकलयाम'। नाधुना वायुरेव त्वरितगति सञ्चारो वा? ध्वनिवाहकयन्त्रेण पराजितो ऽसावपि नियन्त्रितश्च।

शरीरस्य रहस्यं सूक्ष्मतममपि नाविदितमभून् वैज्ञानिकानाम्। तेषां तेषां दारुणतमानामपि रोगाणां निदानानि नैदानानि यन्त्राणि विविधाश्च चिकित्सापद्धतय आविष्कृता। शल्यतन्त्रे विशिष्यामीषां श्रमः श्लाघनीयः। मोहनौषधस्य[3] प्रभावेण मस्तिष्कस्यापि शस्त्रैकसाध्यान् गदानधुना शस्त्रोपचारैश्चिकित्स्यन्ते। अणुवीक्षणयन्त्रैस्तु रोगोत्पादकान् कीटाणून् साक्षात्कुर्वन्तो 'विषस्य विषमौषधम्' इति प्राक्तनिकसिद्धान्तसरण्या तैरेव गदनाशकं तरलं घनं वौषधं निर्मीयते। क्षकिरणैरान्तरं शल्यं शरीरविकृतिं वा राजयक्ष्मादिष्वस्थिभङ्गं वा ज्ञात्वा तदुद्धरामश्चिकित्सयामश्च।

शरीरे

वैज्ञानिकैर्यन्त्रैरद्यत्वे कृषिकर्मणि महती वृद्धिः सम्पन्ना। सहस्रमितैर्जनैर्मासान् व्याप्तैः यावत्कार्यं क्रियेत तावदेकयैव घटिकया यन्त्रेण क्रियते। एतेन पाश्चात्येषु भूमयः कर्षितुमशक्या अपि कृष्यन्ते शताधिकञ्च फलं प्राप्यते। रूसदेशे तु विज्ञानरीत्या विद्युतः सूर्यरश्मीनाञ्च साहाय्येन शीततमेष्वपि प्रदेशेषु ग्रीष्मस्येवौष्ण्यं संपाद्य मनोभिलषितानि फलानि सस्यानि पुष्पाणि

कृषिकर्मणि

---

३. क्लोरोफार्म।

चावाप्यन्ते । कृत्रिमवर्षणेन च देवमातृका भूमयोऽप्यवग्रहेषु[1] सिच्यन्ते । येन तत्र दुर्भिक्षपीडा नामावशेषतामेव याता । अधुना भारतीया शासका अपि विज्ञानरीत्या कृषिकर्मसु सलग्नाः । अचिरेणैवेहापि सुभिक्षं भविष्यति ।

वैज्ञानिकानामन्वेषणं प्रचलति । कृष्णनमेन तारकोल-द्रव्येण विविधा मनोहरा रंगा अन्ये च चाकचक्यगर्भा द्रव्यचया निर्मीयन्ते । भौतिकविज्ञान-शास्त्रिणस्तु अनेन

रत्ननिर्माणम्

कोलकद्रव्येण रत्नानां निर्माणाय संलग्ना । अत्र भारतीयस्य वैज्ञानिकस्य श्रीकृष्णमहोदयस्यैवान्वेषणं प्रचलति । नेदीयानेव स समयो भवेद् यत्र स्वेच्छया रत्नानां स्वर्णस्य च निर्माणमपि वैज्ञानिका कुर्युः ।

त्रिषु लोकेषु सर्वासु च प्रायः प्रकृतिक्रियासु विज्ञानमुत्तरोत्तर विजयमेव लेभे । अस्य विजयस्य परिणामस्तु मानवानाम् अतर्किताय कल्पिताय च कल्याणाय कल्पते ।

दारुणा आविष्कारा

कस्तावत् सचेतनो नरो यो विज्ञानस्येमां परमामुपकृति न सोपकारं गणयेत् ? हन्त ! विज्ञानस्येदं दिव्यं ज्ञानं लब्ध्वा मानवो भूलोकं स्वर्लोकादप्यतिशयान रचयेत् । किन्त्वधुनास्य गतिर्मानवविनाशमभिलक्ष्य प्रसरति । गतमहायुद्धे वैज्ञानिकैर्महान्ति दारुणान्याग्नेयास्त्राणि खल्वाविष्कृतानि । एतेषु परमाणुबम इत्याख्यो नवीनतमोऽतिशयेन विस्मयावहो दारुणतमश्चाविष्कार प्रथते । अनेन महानगराण्यपि क्षणेनैव

---

१. अवर्षणेषु ।

दग्धोत्खातानि दारुणभूकम्पध्वस्तानीव कर्तुं शक्यन्ते। गतद्वितीय-महायुद्धे चामेरिकाजनैः जापानस्य हीरोशिमाभिधा महानगरी परमाणुबमेन ध्वंसिता। तत्र वराका दीना प्रजाजना मृताः। क्षणेनैवेषा नगरी दारुणा दग्धोत्खाता मरुभूरिव सवृत्ता।

अनेकानि स्फोटमयानि दारुणान्याग्नेयास्त्राणि वैज्ञानिकैरा-विष्कृतानि यानि परः सहस्रक्रोशेभ्यः प्रक्षिप्तानि रिपुवाहिनीर्विध्वंस-यन्ति। साम्प्रतं सर्वेषां पाश्चात्यराष्ट्राणां परमाणुबम एव सर्वं सुरक्षितं बलम्। अस्मादपि घोरतर आविष्कृत उद्जनबमोऽधुना। कोट्यधिकानि रूप्यकाणि तस्य निर्माणाय व्ययीक्रियन्ते परिणामस्तु पर्यन्ते जनसंहार एव। हन्त! दिव्यमिदं विज्ञानं येन भूलोकोऽयं स्वर्लोकस्पर्धनां प्राप्तवान्—मानवानां विनाशायार्थ-लोलुपानां प्रेरणयाधुना वैज्ञानिकैः प्रयुज्यते। यदीदृश्येवास्य गति-र्भवेत् तदा सत्स्वपि तावदपरिगणनीयेषु गुणेषु लाभेषु चाहितायैव मानवानां वैज्ञानिकानामिदं विज्ञानम्। यदि दारुणानमून् जनसंहारकरानुपायानुपेक्ष्य मानवानां समुन्नत्या अभ्युदयाय च विज्ञानमुपयुज्येत तर्हि नाधिकेनैव कालेन विज्ञानबलेनायं संसारः सर्वाभिर्विभूतिभिः समृद्धो नूनं स्वर्गोपम एव भवेदिति सर्वे दूरदर्शिनो मेधाविनो विश्वसन्ति।

---

निपुणमतीनां शालकानाम । किञ्च पश्याम सर्वा इमा दुःस्थितयो महता नीतिबलेन गाम्भीर्येण चास्माकमेभिः परमसात्त्विकै र्नायकमहाभागै सुस्थापिता । एतावताल्पेन कालेनैव भारतमधुना मम नस्य जम्बूद्वीपस्य नेतृत्वमधितिष्ठतीति जना ईर्ष्या कुर्वन्ति । अयञ्चास्मावश्यम्भाविनं शुभमेवोदर्कं द्योतयति ।

कृषीवलानामार्थिकी दशा समीचीना भविष्यति । महिलाना दशाऽपि विशिष्य समुन्नतिमेष्यति ; ता सुशिक्षिता भविष्यन्ति । राज्यशासनविभागेष्वन्येषु च तासां

समान दशा

संख्या वर्धिष्यते । भूरवाधिपवाहीकया अभिकारं गते सेवकसेवकयोरन्ध सघर्षो न चात्यन्तमेव विलप्स्यते । कृद्धा न्दना यस्यति । विधिद्विवाहविलादीनां परिष्कृतानां प्रचारणेन हिन्दुसमाजस्य बहवो विघातकरा दोषा नंक्ष्यन्ति । अन्त्यजानां दशाऽपि विशिष्य समीचीना भविष्यति । मध्यमवर्गस्था जना सुखिनो भविष्यन्ति । उच्चवर्गस्थानां जनाना संख्या शनै शनै न्यूनता गमयति ।

शिल्पकलाविद्यालया उद्घाटयिष्यन्ते । एतेषां शिक्षार्थं भारतीया छात्रा न विदेशान् यास्यन्तीहैव तां शिक्षामवाप्स्यन्ति । हिन्दी भाषाया सर्वत्र प्रचारो भविष्यति । भारते-

सांस्कृतिकी दशा

तरराष्ट्रेष्वस्या पठनाध्यापका नियोजयिष्यन्ते । संस्कृतभाषाया समादरो भविष्यति । अस्या भाषाया सर्वेषां ग्रन्थानामनुवादमन्यभाषासु विशिष्य हिन्दी भाषायां कर्तुं बहूनि विद्यापीठानि सम्पत्स्यन्ते ।

अंग्रेजी भाषाया प्रचारो मन्दतां यास्यति । अन्यराष्ट्रेभ्यो विशिष्य च जम्बुद्वीपस्येतरप्रदेशेभ्यो विद्यार्थिनो भारतीयान् विश्वविद्यालया-नुपेष्यन्ति शिक्षामधिगन्तुम् । वर्गभेदो व्यपेष्यति । भारतीयाना-मन्येऽपि देशा जनानां चरितान्यनुकरिष्यन्ति । वर्णभेदो न बहु गणयिष्यते । दक्षिणभारतेऽपि हिन्दीभाषा प्रचरिष्यति सर्वत्र । जना स्वावलम्बिनो भविष्यन्ति । अनुसंधान-शालानामपि वह्वीनामत्र भविष्यति संस्थापना । भारतीया वैज्ञानिका अपि नवीनानाविष्कारान् विधाय भारतस्य ख्याति वर्धयिष्यन्ति । विश्वशान्तिं द्रढयितु भारतमेवाग्रे नेष्यते सर्वाण्यन्यानि राष्ट्राणि । वर्तमाना शिक्षा परिपाटी परिवर्तिष्यते । परीक्षाणां महत्त्वं न स्थास्यति । अनुसन्धानकारिण एवोच्चशिक्षिता सर्वत्र मंस्यन्ते समादृततमाश्च भविष्यन्ति । कलाकौशलं वृद्धिं यास्यति । कृषि-विज्ञाने भारतीयाना परिश्रम सविशेषं भविष्यति ख्यातिश्चानुकरणार्हा लप्स्यते । अन्यै राष्ट्रैः सह विशिष्य च प्रतिवेशि-देशैर्भारतस्य सौहार्दं दृढं भविष्यति ।

आर्थिकी दशा

अत्र बाह्यद्रव्याणामागमनमतिशयेनाल्पता यास्यति । निर्गमश्च भारतीयद्रव्याणामधिको भविष्यति । अन्नसंकटमपि न स्थास्यति । अत्रत्यानां जनानां जीवनायात्रत्यमेव तावद-न्नजातं पूर्णं भविष्यति । कृषिवृद्ध्या वाणि-ज्यवृद्ध्या चार्थस्य दशापि जनानां सुस्था भविष्यति । देशजानां तावदौषधवसनादीनामन्येषाञ्च धात्वादि-निर्मितानां द्रव्याणां निर्माणकौशलं वर्धिष्यते येन तानि सारवन्ति

गुणकराणि च भूत्वा जनानां रुचिमभिवर्धयिष्यन्ति स्वदेश-वस्तुविक्रयाय सर्वेषाम्। एतेन महर्घता न वृद्धिं यास्यति। इतोऽपे-क्षयाऽर्थदशा जनानां समीचीना भविष्यति परमुत्तरोत्तरञ्च साऽत्यन्त वृद्धिं यास्यति। अत्र भविष्यत्याकराणां गवेषणा। नवानि च द्रव्याणि खानिजानि प्रचरिष्यन्ति। तेषु कतिपयानि बहि-र्देशेष्वपि प्रेषयिष्यन्ते। एतेन निष्कर्मता ह्रास यास्यति। तत सुतरा-मेव जनानामार्थिकी परिस्थिति रुन्तोपप्रदैव भविष्यति।

धार्मिकी दशा

अर्थस्य राजनीत्याश्च दशाया परिष्कारेण जनानां धर्मक्रियासु रुचिर्वर्धिष्यते। आस्तिक्य चोदेष्यति नास्तिक्यं तिरोदधत्। लघुमनानां भारतीयजनतायां विपक्रमिस्तोमवत्प्रसृताना प्रभावो न स्थास्यति, वैदिक औपनिषदे च धर्मे शास्त्राणाञ्चाचारे जनानां प्रवृत्ति समेधिष्यतेतराम्। यागेषु श्रद्धोपचेष्यति। अनार्यधर्मानु-यायिनोऽपि वैदिकं सनातनञ्च धर्ममनुवर्तिष्यन्ते बहवोऽस्मिन् वा श्रद्धालवो भविष्यन्ति। आध्यात्मोन्नतौ प्रयत्ना समुदेष्यन्ति। अन्यान्यपि नास्तिकवाददूषितानि राष्ट्राणि भारतस्यास्तिकवादमार्ग-मनुसर्तुं प्रयतिष्यन्ते। तेनैव च विश्वशान्ति स्थास्यतीति च स्वीकरिष्यन्ति।

उपसंहार

उपर्युक्तास्तावद्भविष्यकल्पना नातिसन्देहदूषिता ज्ञेया। किञ्चात्रेदमवधेयम्—साम्प्रतं सर्वत्रा-शान्तिर्विरोधो रक्तपात इत्येव शोश्रूयते। तृतीयस्य विश्वयुद्धस्याशङ्कातङ्कः सर्वत्र

लोको न लोकः पारमार्थिकः" इत्याभाणकमनुसृत्य को नाम निराकुर्यादिमानधिक्षेपान्। संसारस्य प्रसिद्धो नाट्यकर्ता बर्नार्डशा महोदयः स्वात्मकथामेवं विवृणोति—

"अहं पाठशालां गन्तुं न मनसा कदाप्यैच्छम्, तत्र ग्रीकलैटनादि भाषाणामभ्यसनं मामतिकठिनं प्रतीयते स्म, किञ्चैतासामपेक्षया संस्कृतभाषाया अभ्यासो मया सुकरोऽनुभूयते स्म।"

दृश्यताम्—वर्तमानजगतो वैदेशिको महाकविस्तावत् संस्कृतभाषां कठिनां न मनुते स्म। पाश्चात्येषु बहवोऽन्येऽपि विद्वांसो देववाणीं स्वभ्यासां मधुरां प्रियाञ्च कीर्तयन्ति।

इदं शिष्टानां मुखादनुश्रृणुमः—महाकविः कालिदासो मूर्खः सुबहुकालमवर्तत, स हि विद्ययाऽवमतो निर्विण्णो गुरूनुपास्य संस्कृतभाषाया महाकविपदमशोभयत्।

वाराणस्यां जगन्नाथपण्डितो विंशतिवर्षाणि यावदत्यन्तमशिक्षितोऽभवत्। स स्वमात्रा प्रेरितोऽल्पेनैव कालेन गीर्वाणवाण्यां प्रावीण्यं लेभे। ग्रन्थाञ्चारीरचत् पाण्डित्यगर्भान्।

काश्मीरेषु भास्करकण्ठो नामैको द्विजस्त्रिंशद्वर्षाणि यावत्तेन जीवन्ननभ्यस्तविद्योऽक्षरज्ञानहीनोऽभवत्। ततः स प्रयत्नपरवशोऽल्पकालेनैव गीर्वाणवाण्यां प्रागल्भ्यमलभत। ईश्वरप्रत्यभिज्ञायाः शैवदर्शनसिद्धान्तमय्या 'भास्करी' नाम्नीं बृहत्तमां टीकामरचत्।

एवमेतादृशान्यन्यानि च सन्ति निदर्शनानि यैः संस्कृत भाषायाः 'काठिन्यमित्युट्टङ्कितः प्रवादो निराधार आलस्यलालित एव' इति निगदितुं शक्नुमः।

पुरा किलेह भारते वार्षिकपरीक्षाबन्धनहीना अन्तेवासिनः स्वगुरूनुपेत्य विद्यालयेषु गृहेषु च स्वाचार्याणां सविधावेव विद्यामध्यजीगयन्। ते हि पूर्वं व्याकरणं कोषञ्चाभ्यारयन्। ततो यथेच्छं दर्शनादिषु ते प्रावर्तन्त पाण्डित्यमधिगन्तुम्। वेदस्मृतीनामध्ययनमावश्यकमासीत्। अलङ्कारकाव्यछन्द शास्त्राण्यपि प्रारम्भशिक्षायामेवागण्यन्त। उत्सवेषु सर्वजनसमक्षं पण्डितपरिषत्सु वादा अवर्तन्त। वादे य खलु प्रतिवादिन पराजेष्ट तस्मै प्रमाणपत्राणि व्यतीर्यन्त सपुरस्कारम्। अत्र कदाचन राज्ञामपि बभूव सन्निधि। अथ वादपरीक्षिता एते वटव उच्चशिक्षालयेषु प्रविश्य यथेच्छं दर्शनज्योतिषायुर्वेदादीनामध्ययनमारभन्त। तत्रापि बभूव पाण्डित्यपरीक्षणं वादेन प्रक्रियया वा। एषा च परिपाटी भारतेऽत्र बृटिशराज्यारम्भं यावदवर्तत।

प्राचीना परिपाटी

अस्या परिपाट्या गुणा बाहुल्येन दोषा अल्पीयांस आसन्। ते हि—छात्राणां गुरुशुश्रूषयैवाभवद् विद्यालाभ। अत्रापेक्ष्यते स्म महान् काल। य एव गृहस्थितिमनुकूलां लब्ध्वा गुरुकुलमुपेत्य महता श्रमेण गुरुसेवायां निरतोऽभवत् स एव विद्यामधिगन्तुमपारयत्। कदाचन पण्डितम्मन्यमाना स्व शिष्याणां कालमेवाक्षिपन् न च तेषां ज्ञानपिपासां प्रशमयितुमलम्बभूवु। यथोक्तमाचार्याभिनवगुप्तपादै स्वजीवनमभिलक्ष्य—

अत्र दोष

"सोऽहमिह बहुभिरेवं वञ्चितस्तत्त्वोपदेशकम्मन्यै।
तत्त्वमिति वर्णयुगमपि येषां रसना न पस्पर्श॥" इति।

कालो विपरिवर्तितः । अधुना राज्याश्रयो न संस्कृतविद्यार्थिनां विदुषां वा तावान् यावान् पुराऽवर्तत । लघीयमानेहसा सर्वे गरीयांसं लाभं कामयन्त इत्यस्ति जनानां प्रवृत्तिः । साम्प्रतं विश्वविद्यालयैः प्रचारितोऽयं परीक्षाक्रमो ज्यायान् ।

आधुनिकी परिपाटी

न चाधुना वादेनैव प्रमाणपत्राणि दातुं शक्यन्ते । तेन लाभोऽल्पीयानेव हानिरेव स्यान्म-हीयसी । पञ्चनदेऽत्र संस्कृतपरीक्षासु विषयवैविध्यं वर्तते । वाराणस्यादिषु तु तावदेकस्मिन्नेव विषये भवति परीक्षण-माचार्यादिपरीक्षासु । एतयोरपि गुणा दोषाश्च सन्ति । विषयवैविध्ये-नैकस्मिन्नपि विषये न जायते विशेषः । एकविषयपरीक्षणेऽपि तावद् अन्यविषयाणामत्यन्तापरिचयेनानुभूयते न्यूनत्वम् । अत किमप्युभयमार्गमाश्रयणीयं स्यात् ।

कीदृशी परिपाटी स्यात्

संस्कृतविद्यायां कीदृशी परिपाटी ज्यायसी परीक्षाऽध्ययनाध्यापनादीनामित्यधिकृत्य यथामति स्वान् विचारानुपस्थापयाम इह—

**(१) परीक्षा प्रणाली**—सर्वेषु भारतीयेषु विश्वविद्यालयेषु प्रवेशमध्यमशास्त्र्याचार्यविभागः परीक्षाणां समान एव स्यात् । तत्र प्रवेश-परीक्षाया नावधिर्निर्धार्यः । मध्यमपरीक्षायां प्रवेशपरीक्षामु-त्तीर्णा एव प्रवेश्याः । वर्षद्वयावधिकश्चास्यां पाठ्यक्रमः । एवं मध्यमामुत्तीर्यैव शास्त्रिपरीक्षायां प्रवेशं लभेरन् । वर्षत्रयावधिकश्च स्यादस्याः पाठ्यक्रमः । आचार्यपरीक्षायाः पाठ्यक्रमोऽपि न स्याद्वर्ष-त्रयाधिकः । अत्र विषयवैभिन्न्यमपेक्ष्यते । परीक्षाक्रमस्तु विश्वविद्या-

सर्वेषु सर्वेषु सम एव स्यात् । येन यथारुचि सर्वे सर्वत्र प्रवेश लभेरन् । किञ्चात्र अपि प्रचुरैरध्यापकैः प्रभूतग्रन्थोपचितैः पुस्त-कालयैः संयोजनीया । अत्र राज्यस्य श्रेष्ठिनामर्थपतीनां साहाय्यं विशिष्टमपेक्ष्यते ।

(२) पाठ्यक्रमः—

(क) प्रवेशपरीक्षायाम्—अत्र तावदमी विषया निर्धार्याः —

कोष, व्याकरणम्, छन्द, काव्यम, गणितम्, अनुवाद भूगोल, इतिहास ।

(ख) मध्यमपरीक्षायाम्—

कोष, व्याकरणम्, काव्यानि, अलङ्कार शास्त्रम्, गणितम्, स्वास्थ्यशिक्षा, इतिहास, शरीर-विज्ञानम्, दर्शनम्, प्रबन्ध, अर्थ शास्त्र नागरिकशास्त्रम्, एतेषु शरीर-विज्ञानार्थशास्त्र-नागरिकशास्त्राणि भवेयुरिच्छाधीनानि बहूना-मेकस्यैवाध्ययनमपेक्षणीयं स्यात् ।

(ग) शास्त्रिपरीक्षायाम्—

व्याकरणम्, वेदाः, निरुक्तम्, काव्यानि, दर्शनानि, प्रबन्ध, गणितम्, शरीरशास्त्रम्, अर्थशास्त्रम्, नागरिकशास्त्रम्, इतिहासः, अलंकार शास्त्राणि ।

एतेषु दर्शनगणितशरीरशास्त्रार्थशास्त्रनागरिकालंकार शास्त्रे-तिहासविषयाणाम् अन्यतम एवेच्छया ग्राह्यः ।

(घ) आचार्यपरीक्षायाम्—

अत्र प्रथमे भागे सर्वे विषया निर्धार्याः तेष्वेकतम एवेच्छया

कोऽपि भवेदध्येय परीक्षायाम्। ज्यौतिषायुर्वेदगो पृथगेव स्वतन्त्रा विद्यालया स्यु । अमी च विषया —

प्रथमे भागे— व्याकरण काव्यालङ्कार वेदस्मृति मीमांसा न्यायवैशेषिकवेदान्त सांख्ययोग जैनदर्शन गणिताख्य ।

द्वितीये भागे— एते विषया आवश्यका स्यु —

प्रबन्ध , समाजनागरिक-शास्त्राणि, ग्रन्थ-सम्पादनकला ।

(३) विषय प्रवेशः—

न पाठ्ये निर्दिष्टानां विषयाणां मध्ये प्राचीनार्वाचीनोभयरूपा ग्रन्था निर्धार्या , येन प्राचीनानामर्वाचीनानाञ्चोभयविधानांसम्मिश्रणेन वर्तमानां प्राचीनाञ्च विचारधारां सम्यगवगच्छेयुर्विद्यार्थिन ।

(४) अध्यापन प्रणाली—विद्यार्थिनस्तथोपाध्यायवरा पाठयेयुर्येन ते रटनमवहेल्य मननमेव बहुमन्येरन । विषयावबोधश्च तेषां पाण्डित्यापादनायालम्। रटनेन तु मस्तिष्कशक्ति व्यर्थं व्ययीभवति। आवश्यक एव ग्रन्थभागो रसनाग्रीकर्तुमुचित । व्याकरणस्य पाठनं विशिष्य परिवर्तनमर्हति । अत्र नवीनशैल्या पाणिनीयव्याकरण-सूत्राण्याश्रित्य पुस्तकानि रचितव्यानि येन लघुकक्षासु विद्यार्थिनां व्याकरणाध्ययन-सौकर्य स्यात्। अस्माभि· स्वप्रियानन्तेवसतोऽध्यापयद्भि· 'तेषां कस्य कियती मेधा ?' इति सम्यगवगत्यैवाध्यापनीयास्ते। पाण्डित्यप्रकाशनन्तु न तत्रापेक्ष्यते। स्वप्रमादगोपनमपि न न्याय्यः। बटवो व्याकरणे सुकरेणैव केनाप्युपायेन दक्षा विधेयाः। दर्शनशास्त्रेषु तेषां प्रवृत्ति· समेधनीया। काव्यशास्त्राणां माधुरी तै निपुणमास्वादनीया । वाक्पाटव तेषां समुन्नेयम्।

गीर्वाणवाण्यैव ते सह सनियमनिर्धारण सर्वोऽपि व्यवहारकलापो विधेय । तेषां मद्वृत्त रक्षणाय प्रयतनीयम् । वर्तमान-विज्ञानादि-विषयाणां ज्ञान स्वय समाश्रेयम । तेऽपि तेषां ज्ञाने निपुणा विधेया. ।

(५) नवीनं साहित्यम्—नवीनान् विषयानवलम्ब्य ग्रन्था रचनीयास्तेषां मौलिका केऽपि केचनानुवादरूपाः स्यु । एतेन संस्कृत साहित्यस्य समुपचितोऽपि कोष एधिष्यतेतराम् । छात्राणां पाठ्य-विषयेष्वेतादृशा ग्रन्था सन्निवेश्या । यवनकालेऽपि संस्कृते यवन-भाषाया अनूदिता ग्रन्था आरचन्त परमधुना विज्ञानादिविषयेषु पाश्चात्यभाषासु रचिता सख्यातीता ग्रन्था सन्ति, यथा हिन्दी भाषायां तेषामनुवाद. क्रियते तथा संस्कृतगिराऽपि तेऽनुवादार्हा । तथाविधाश्च ते ग्रन्था अध्यापनीया, छात्राणां परीक्षासु च निर्धार-णीया. । इद संस्कृत साहित्य समुन्नत्यै नितान्तमावश्यकम ।

(६) व्याकरण-परिष्कार:—इद तावन्निर्णीतमत यत्संस्कृत-वाङ्मये व्याकरणज्ञानं प्रधानपदमध्यास्ते । व्याकरणज्ञानेन विना न कस्यापि गतिरस्मिन् । व्याकरणस्याध्ययनमेव प्रायोऽत्र दुष्करमिवा-नुभूयते प्राय सर्वै. । अतस्तत्परिष्कारायापि समुपासनीय. कोऽप्युपाय. । अस्माकं मते तु प्रवेशिकाया आचार्यं यावदत्र विभागा कार्या अध्यापनसौकर्याय । प्रवेशिकायान्तु कलापकातन्त्रव्याकरणा-ध्यापनपरिपाट्यपि वर स्यात् । मध्यमपरीक्षायां सन्नन्तयङ्लुगन्त तद्धितकृदन्तस्वरवैदिकी प्रक्रियावर्जा पाणिनीयाष्टाध्यायी पाठनीया । तत्र सूत्राणां सोदाहरणानामेव केवलं पाठोऽभिप्रेत. स्यात् । सरल-संस्कृतभाषाया सूत्राणां व्याख्यानञ्च स्यात् । शास्त्रिपरीक्षायां

सन्नन्तयङलुगन्त - तद्धित - कृदन्त - स्वरवैदिकी - प्रक्रियात्मकस्यैव व्याकरणस्याध्यापनमभीष्टं स्यात्। आचार्यपरीक्षायां वृत्तिसहिताष्टाध्यायी महाभाष्यपरिभाषेन्दुशेखरादीनां व्याकरणग्रन्थानां सविवादं समालोचनञ्चाध्यापनं ज्यायो भवेत्। एतेन व्याकरणस्य गम्भीरपाण्डित्यं कामयमानानां कृते द्वारं नापावृतं स्यात्। संस्कृतभाषायामन्यविषयेषु प्रविविक्षूणामपि गतिरप्रतिरुद्धा स्यात्।

उपसंहार.

एष तावद् यथामति विचारोऽत्र कृत । भारते विद्वद्वराणां विशेषशेमुषीकाणां परिषद् आयोजनीया प्रतिप्रान्तम् । एतासु विषयोऽयं विवेचनीय पण्डितपुङ्गवै । यद्युपरिनिर्दिष्ट-प्रकारैरन्यैर्वा एवंविधैरुपायै संस्कृतस्य पठनं पाठनञ्च विधास्यते तदा संस्कृतविद्यार्थिनां महदुपकृतं स्याद्, अस्य चामरस्यामरभारतीसाहित्यस्य निधिरपि भृशमुपचयं यायात्।

**सङ्केतः**—"संस्कृतसाहित्यस्याभ्युन्नतेरुपायाः" इति विषयमवलम्ब्य प्रबन्धरचनायामयं प्रबन्धः साहाय्यमाचरिष्यति।

---

# संस्कृत भाषाया महत्त्वं[1]

## प्रान्तभाषाणां जननी—

भारतराष्ट्रस्य भाषा गीर्वाण्येवासीन् आऋषिकालात्। इष्टं चेन्, भवद्भि बहूनां भाषाणां अध्ययनं कर्त्तव्यम्। पर संस्कृतभाषा नैव विस्मर्तुं योग्या। सर्वासु भारतीयासु भाषासु प्रतिशतकं षष्टि शब्दा संस्कृतभाषाया एव सन्ति। अत कस्या अपि भारतप्रान्तभाषाया अध्ययने प्रतिशतक ६० पर्यन्त संस्कृतशब्दानामेव अध्ययनं जायते। एषा देवभाषा सर्वासां प्रान्तभाषाणां साक्षाज्जननी एवास्ति। संस्कृतस्यैव जीवनरस सर्वासु प्रान्तीयभाषासु सदा सञ्चरति। अत कस्यामपि प्रान्तभाषायां यदि भवद्भि काचित् प्रौढा वाङ्मयकृति निर्मातव्या भवेत संस्कृतभाषां विना सा निर्मातुम अशक्या एव।

## विशालः शब्दकोषः—

अस्या गीर्वाणभाषाया शब्दकोशो ऽतीव विस्तृतो वर्तते। एवं विशाल शब्दराशि कस्यामपि अन्यस्यां भाषायां नास्त्येव। पश्यत— अत्र पृथिव्या नामधेयानि २५, रात्रिनामानि २७, उषाया २०, मेघस्य ३५, वाच १५०, नद्या ३७, अपत्यस्य ३२, संग्रामस्य ५०, गृहस्य २५ नामानि सन्ति। यद्यपि आंग्ला भाषा महती समृद्धा वर्तते,

---

१ भारतीय विद्या भवनस्य भवनीय—अष्टम—उपाधिवितरणमहोत्सवप्रसंगे कृतात् पंडितप्रवराणा श्रीपाद दामोदर सातवलेकरमहाशयानां दीक्षान्तभाषणादुद्धृत :

तथापि तत्रापि एवंविधा शब्दानां संख्या नैवास्ति। तथा संस्कृत-भाषायाम् एषा प्रतिशब्दसंख्या वर्धयितुमपि शक्या। अतः कस्यामपि अन्यस्यां भाषायां एवंविधं बृहच्छब्दभाण्डागारं नैव दृश्यते।

## अधिका शास्त्रीया दृष्टिः—

यस्यां भाषायां एकैकस्य पदार्थस्य अनेके पर्यायशब्दाः सन्ति, तस्यां भाषायां तस्य पदार्थस्य विशेष एव विचारः कृत तद्भाषा-भाषिभिरिति निश्चितमेव भवति। अन्यथा एवंविधो विशाल शब्द-समूह एकस्यैव पदार्थस्य कृते किमर्थं भविष्यति? अधिको विचार, अधिक मनन, अधिका शास्त्रीया दृष्टि, अधिकं वैज्ञानिकं ज्ञानं, अधिकं संशोधन, अधिक उपयोग यदि तस्य नाभविष्यत्, तर्हि वाचकम् एतादृक् शब्दभाण्डार किमर्थं समुद्भूतम्? एतेन एतत् सिद्ध भवति, यद् यस्याः आर्यजाते. एषा संस्कृता भाषा अस्ति, सा आर्य-जाति संस्कारिता, सभ्यता, शास्त्रीयता, वैज्ञानिकता, आदिषु अत्यन्तम् उन्नता आसीत्। अद्य यो विशालः शब्दसमूह संस्कृत-भाषायां दृश्यते, स आर्यजात्या तस्य तस्य पदार्थस्य उपरि विशेष एव विचारः कृत. इति दर्शयति। संस्कृतभाषाया एव एतद्वैशिष्ट्यम् अस्ति।

## उदाहरणम्—

उदाहरणार्थम् 'आमलकी' पदं द्रष्टव्यम्। अस्या नामानि "तिष्य-फला, आमलकी, अमृता, वयस्था, कायस्था" आदीनि सन्ति। एतेषामेष आशय—'एषा आमलकी दीर्घमायु ददाति, मृत्युं दूरीकरोति शरीरस्य स्वास्थ्य संवर्धयति।' एवमेव 'हरीतकी'। अस्या

नामानि ३५ सन्ति। एषु नामसु कतिपयानि अत्र द्रष्टुं योग्यानि। तानि इमानि—'अभया, श्रेयसी, शिवा, सुधा, कायस्था, बल्या, पावनी, जीवन्तिका, जीवनी, प्राणदा।' एभ्यो नामभ्यो ज्ञातुं शक्यते, हरीतकी शरीरम् अभयरहितं करोति, रोगभयं दूरतः त्यजति, पाचनशक्तिं संवर्धयति, दीर्घमायुः करोति, प्राणस्य बलं च वर्धयति। कस्याम् अन्यस्यां भाषायाम् एवंविधं ज्ञानवर्धकशब्दानां भाण्डारं वर्तते? यथा संस्कृते नामभिरेव सर्वं ज्ञानं दातुं शक्यते, कस्यामन्यस्यां भाषायाम् एवं नामभिरेव ज्ञानं दातुं शक्यते? अतो वयं कथयामः संस्कृतभाषा एव शास्त्रीया वैज्ञानिकी भाषा वर्तते, अतश्च अस्यामेव भाषायाम् एतादृशः शास्त्रीयः शब्दसंग्रहो भवितुं शक्यः।

## मानवजातेरितिहासो विद्यतेऽत्र—

संस्कृतभाषायां मनुष्यनामानि ३० वर्तन्ते। एषा संख्या वर्धयितुमपि शक्या। एभ्यो नामभ्यः पञ्चषाण्येव नामानि मननार्थं गृहीत्वा पश्यामः, कियान् मानवजातेरितिहासोऽत्र दृश्यत इति। प्रथमं मनुष्यवाचको 'जन' शब्दो मानवस्य केवलां प्रजननशक्तिं दर्शयति। स्वसमानं द्विपादं प्राणिनं समुत्पादयितुमेष समर्थोऽस्ति। मानवस्य आत्यन्तिकी प्राथमिकी अवस्था एतेन पदेन प्रदर्श्यते।

अस्मात् जनाद् उच्चतरावस्थायां स्थितस्य मानवस्य प्रदर्शनं 'लोक' इति नाम करोति। लोकृदर्शने इत्यस्माद्धातोरयं शब्दो निष्पन्नः। यः लोकते पश्यति स लोकः। यः केवलं प्रजननमेव कर्तुं शक्नोति, तस्माद् एष उच्चतरः। केवलप्रजननाद् दर्शनं वरम्

लोकादपि उच्चतरा श्रेणी मनुष्येति पदेन प्रदर्श्यते । 'मननान्मनुष्य' । यो मननं कर्तुं समर्थः स मनुष्योऽस्ति । एष मननशक्तिसत्त्वान्'जनान् लोकाच्च' उच्चतरो वर्तते । अस्मान् अपि ऊर्ध्वस्थित 'पुरुष.' 'य' पुरि वसति,' य नगर्या निवसति स पुरुष । एष मानव. पुरुषावस्थानां नागरिकत्वस्य अधिकारी सजात । एभ्यो नागरिकेभ्योऽपि उच्चतर. 'नर' वर्तते । य' नरति, नयति, संचालयति वा पञ्चजनान् , यस्तेषां नेतृत्व करोति, अन्यान् अनुगमयति, तान् सन्मार्गेण नयति, आदर्शावस्थां प्रापयति च । एष नर इति कथ्यते, स तदर्थ प्रशस्यते च ।

## वैज्ञानिकत्वं, वर्गीकरणमपि

एवरूपेण एभिर्नामभि' मानवानाम् उन्नतिक्रमस्य इतिहासः प्रदर्शित । अयुतसंख्याकाणां सम्वत्सराणां मानवानाम् इतिहासोऽत्र संगृहीत इव दृश्यते । संस्कृतभाषाया. पदेषु यथा एवं मानवानाम् इतिहासो दृश्यते, तथा च शास्त्रीयता, वैज्ञानिकत्वं, वर्गीकरणं वा दृश्यते, तथा न कस्यामपि अन्यस्यां भाषायाम् अनुभूयते । एवंविधाः शास्त्रीयज्ञानपूर्णा विपुलाः प्रतिशब्दाः कस्यामन्यस्यां भाषायां वर्तन्ते? अत' या भाषा इदानी जगति वर्तन्ते, ताभ्यो भाषाभ्यः एषा संस्कृतभाषैव पूर्णा भाषा अस्तीति वक्तुमुचितम् । संस्कृतभाषाया नामसु शास्त्रीयत्वं, वैज्ञानिकत्वं, वर्गीकरण, गुणधर्माणां व्याख्याद्यनेकेषां शास्त्रीयतत्वानां संख्यावृद्धिरपि भवितुं शक्या ।

## अस्याः शब्देषु अपूर्वा रहस्यमयी शक्तिः

यद्येते स्नातका एवंरीत्या संस्कृतभाषायां विद्यमानां सुगूढा

भारतीयनां आस्तिनि, तर्हि तेषां पुरस्ताद् एकम् अतिमहत्कार्यक्षेत्रं तदोधनाय उपस्थास्यति । एतेन एव लाभोऽपि भवितु शक्य —

न कर्म लिप्यते नरे । वा य ४०।२

ये के चात्महनो 'जना' । वा य ४०।३

इत्यादिषु वेदिकोक्तिषु, तथा 'नर करणी करे तो नरका नारायण होजाय' इत्यादिषु लौकिकोक्तिषु च 'नर, जन' इति पदानि सन्ति, तेषां सत्यो गूढोऽर्थ अनेनैव मननेन ज्ञातु शक्यते । यदा एषा पदानाम् एष रहस्यमयो गूढो भाव सम्यक्तया ज्ञातो भवति, यदा अभूतपूर्व एव आनन्दो मनसि उत्पद्यते । मानवानां कस्मिन स्तरे वर्तमान नर कर्मलेपाद्विमुच्यते ? कश्चन मानव आत्महा जन. भवति, इति सर्वं सुगूढं ज्ञानम् अनेनैव मननेन ज्ञातुं शक्यते ।

'जन-लोक-मनुष्या नैव नारायणा भवितु नार्हन्ति, अपितु 'नर एव नारायणो भवितुमर्हति । वेदादीनां वचनेषु विद्यमानो रहस्य-मयोऽर्थ गांभीर्यगा चिन्तनिकया एव ज्ञातुं शक्य. । संस्कृतभाषाया शब्देषु एव एषा शक्ति विद्यते ।

## संस्कृत विद्याया उन्नतेः प्रसारस्य चोपायाः

परिष्कृता निर्दोषा च भाषा संस्कृतमुच्यते। "संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।" संस्कृते परिष्करणं नैर्दोष्यं च कथं जातम् ? इत्येष प्रश्नो रुचिकरस्तदर्थं निरुक्त-व्याकरणादीनामध्ययनं चानिवार्यम्। शब्दार्थयोः कः संबन्धो, ध्वनिभावयोश्च किं सामञ्जस्यं, शब्द-निर्माणे वस्तूनां बाह्याभ्यन्तर-गुणानां समावेशश्च कथं स्यात्—इति सर्वमेतत् संस्कृतस्य गहनाध्ययनेनैव ज्ञातुं शक्यते।

पुरा किल पाश्चात्यैः संस्कृतज्ञैः संस्कृतं सर्वेषां हिन्द-यूरोपीय-भाषाणां जननीति निर्धारितम्। कालानन्तरं भाषाणां तुलनात्मकाध्ययनेन भाषाविज्ञानिभिः 'न संस्कृतमासां भाषाणां जननी, अपितु ज्येष्ठा भगिनीति प्रस्तुतम्। संस्कृतस्य चान्य-हिन्द-यूरोपीय-भाषाणां च काचिद् अनवशिष्ट-चिह्ना जरठा जननी चिराल्लोपं गतेति' मतं च कल्पितम्। मतमिदं न केषांचिद् भारतविदुषामभिमतम्। तैस्तु मतस्यास्य निरसने भाषा-विज्ञान-गर्भैः प्रबलैः प्रमाणैः प्रयतितव्यम्।

संस्कृतं नामोत्तरापथ-भाषोपभाषाणां जननीति तु निर्विवादं सत्यं, परमनेन दक्षिणापथभाषासु, कासुचिद् विदेशीय-भाषास्वपि कृतः पर्याप्तः प्रसार इत्यत्रापि न संदेहः। तेलुगु-मलयालम-कन्नडी-प्रभृतीनां दाक्षिणात्यभाषाणां संस्कृतमेवाधारभूतम्। इण्डोनेशीय-भाषायां संस्कृतशब्दानां परिभाषाणां च चत्वारिंशत्-प्रतिशतः समावेशः। मलाया-स्याम-यव-बालि-प्रभृति-द्वीपोपद्वीपानां भाषास्वपि

संस्कृत-संस्कृतोद्भव-शब्दानां प्राचुर्यमिति विदुषां नागोचरम । पुरा प्रचलिता संस्कृत-लेखोपकरणी ब्राह्मी-लिपिर् लोके भूयिष्ठानामद्यतनीनां लिपीनां जन्मदात्री ।

संस्कृतं विश्वस्याऽखिल-भाषाणां प्राचीनतमम् । इदं भारतीय-धर्मस्य सस्कृतेश्च मवुस्यन्दि वचः । संस्कृत-वाङ्मयमपि सर्वेषां वाङ्मयानां प्राचीनतम भूयिष्ठं च । भारत-संस्कृति-साहित्यं च तीव विशाल सम्पन्नं च । वैविध्य-पूर्णं मौलिकं च । यथा हि—

१ साक्षात्कृत-धर्मभिर् वैदिकर्षिभिरेव ब्रह्माण्डे मर्त्येषु चानुवर्तमान 'ऋतस्य' पन्था. प्रथमं दृष्टः ।

२ सर्वत' प्रथममत्रत्यैर् ऋषिभिरेव सुखदु.ख-रागद्वेषादि-द्वन्द्वानां मौलिकमैक्यमनुभूतम् ।

३ अत्रत्यैर् योगिभिरेव 'योग-समाधिविद्या' शास्त्ररूपेणोप-निबद्धा, पिण्डब्रह्माण्डस्यैक्यं चानुभूतम् ।

४ निरुक्तं, व्याकरण, शिक्षाऽलंकार-शास्त्राद्या वाङ्मयस्या-धारभूता सर्वा विद्या संस्कृत एवोपलभ्यन्ते ।

५ वेदानामुद्गातृभिरेव सर्वत प्राक् सामगान स्वर-लिपि-रूपेणोपनिबद्धम् ।

६ गण-तन्त्र बीजभूतस्य राज-हीन धर्मराज्यस्य, सर्वस्व दक्षिणा-विश्वजिद्-यागस्य, अहिसा-व्रतादीनामनेकेषां मौलिक-भावानां च जननी संस्कृत-सस्कृतिरेव ।

७ भारतीयेषु जैन - दर्शनेष्वेवानीश्वरवादस्या-ध्यात्मिकवादस्य (अर्थात् नास्तिकास्तिक-वादयोः) सम्यक् सामञ्जस्यं प्रतिपादितम् ।

८ आख्यानाऽऽख्यायिका - पशुपक्षिकथा - कथान्तर्गतकथानां मूलस्रोतः संस्कृतमेव ।

९ संस्कृत-संस्कृतेरेवायं विशेषो यदनयाऽनु-प्राणिता भारतीया विदेशेषु सांस्कृतिकमेव विजयं चक्रुर्नतु रुधिर-स्राविभिर्घोर-युद्धैः पर-दमन-लुण्ठनात्मकं राजनीतिक विजयम् ।

१०. संस्कृत-वाङ्मयस्य वैचित्र्यं वैविध्यं च संसारस्य प्राचीन वाङ्मयान्तरेषु क्वापि नोपलभ्यते । धर्मशास्त्राणि, नीति-शास्त्राण्यर्थ शास्त्राणि, कामशास्त्राणि, स्मृतयो, दर्शनानि शिक्षाकल्प-निरुक्तादि षडंगम्, आयुर्वेदो, धनुर्वेदस्तन्त्राणि, संगीत-वास्तु-हस्त्यश्व-विद्याः, पाथ पाक - वणिक्-शास्त्राणि, चतुःषष्टि-कला —इत्यादीनां ज्ञान-विज्ञान-पराणां विद्यानां कोपः सस्कृत एवोपलभ्यते नान्यत्र ।

११. कर्मवाद-पुनर्जन्मवादादय आध्यात्मिकाः सिद्धान्ता अत्रत्यैर् ऋषिभिरेव प्रतिपादिताः ।

अहो ! महदस्मद्देशस्य दौर्भाग्यं यदीदृशी परिष्कृततमोन्नततमा भावाभिव्यक्तौ च प्रगल्भतमा भाषा स्व-गौरव-पदात् प्रच्यावितेदानीं तैरेव जनापसदैर् मृतभाषा-नाम्नाऽभिधीयते येषां श्वास-निश्वासा अद्यापि अस्या आमोदेन सुरभिणः सन्ति । अज्ञानोपहता वराकास्ते न जानन्ति यत् संस्कृत विना तेषां जन्म, नामकरण, पाणि-ग्रहणम् अन्त्येष्टि-कर्मादि किमपि कर्तुं न शक्यते । आजन्म मरण-पर्यन्त सर्वमेव संस्कारजात संस्कृत-मन्त्रैरेव सपन्न भवति । सन्ध्योपासना-ऽपि तेषां संस्कृत-भाषायामेवाऽस्ति । अबोध-विक्लवास्ते स्वयमेव मृत-प्राया, न तु संस्कृतं यद्यापि विद्युद्वाह इव प्रच्छन्नं तेषां

जीवन-स्रोतः सचालयन्ति। आततायिनामत्याचारा करालकालस्य निघृणा आघाता अप्येतद् हन्तुं नाऽलबभूवु । अद्याऽप्येतत संसारस्याऽखिलोत्कृष्टतमानां भाषाणां पुर आत्म-गौरवेण समुन्न-तशिरा स्थातु शक्नोति। केवलमस्माभिर् विदेशीयच्छद्मापोह्य स्वात्मबोध कर्तव्य । अस्माभी राजनीतिक-स्वतन्त्रता नाम लब्धा किन्तु भावना-चिन्तनादिषु वयमद्याऽपि पाश्चात्यानां दासा एव । पुनरुत्थानाय, पुरोगमनाय, शान्ति-पथे च ससारस्य नेतृत्वप्राप-णायाऽस्माभि स्वान्तरात्मा जिज्ञासयितव्य सम्यग्बोद्धव्यश्च ।

## कथमस्माकं शिक्षा-पद्धतिर्नाशं गता ?

पुरा किल विद्याऽध्ययन वर्णानां धर्मस्याङ्गमासीत् । श्री-'की'-महो-दयेन'एनशेंट् इण्डियन एजुकेशन्' नाम्नि स्व-ग्रन्थे लिख्यते, "ब्राह्मणा-नां शिक्षा-पद्धति [illegible] अविच्छिन्नाऽऽ-सीत् । वेदान्त [illegible] काल ; प्रागेवेयं पद्धतिर्न केवलं चिरन्तनीम् अपितु सुव्यवस्थितां दशा प्राप्ताऽभूत् । उपलभ्यमान-धर्मसूत्राणां समये त्रिय पूर्ण-वेगेन प्रवहमाणाऽऽसीत् । ब्राह्मण-क्षत्रिय वैश्य-ब्रह्मचा-रिण उपनयन-संस्कारानन्तरं द्वादश वर्षाणि गुरुकुल एवोषित्वा विद्याध्ययनम् अकुर्वन ।"

शिक्षा केवलं धर्मपरैव नासीत् । शास्त्राध्ययनेन समं वर्णानां व्यवसायोपयोगिनी व्यावहारिकी शिक्षाऽपि दीयते स्म । ब्राह्मण-विद्यार्थिन' प्राधान्येन वेद शास्त्राध्ययने दत्तावधाना बभूवु क्षत्रिय-वैश्यच्छात्रास्तु स्व स्वव्यवसायोपयोगिनी विशिष्टां शिक्षा लेभिरे ।

अतो धार्मिक-शिक्षया समं लोक-व्यवहार-पाठशाला अपि समुद्भवन् ।

इयं शिक्षा-पद्धतिः परम्परया युगाद् युगान्तरमवतरन्ती सर्वस्मिन देशे प्रसृताऽऽभूत् । पुस्तकालयानां दाहका विश्वविद्यालयानां विद्याकेन्द्राणां च विध्वंसका केचन मोहमदीया आततायिनो ऽप्येनां नाशयितुं नाऽलं बभूवुः । किन्त्वत्र आङ्ग्ल-शासन-प्रसारादूर्ध्वं य आघातो ऽनया सोढस्तेनास्या मूलं शिथिलप्रायं संजातम् । ननु ब्रिटिश-नीतिज्ञानां कूटनीतेरेव फलम् ।

श्री-'की'-महोदयेन पुनर्लिख्यते, "ब्राह्मणानां शिक्षा 'विद्या-पुनरुद्धार' (Revival of learning) युगात्प्राक्तन्या यूरोपीय-शिक्षाया केनापि प्रकारेण नाऽर्हीयत । ब्राह्मणान्यैर्न केवलमीदृशी शिक्षा-पद्धतिराविष्कृता या नाना राज्यविध्वंसान समाज-विप्लवां-श्चात्यजीवन् किन्तु तैर् वर्षसहस्राणि यावद् उच्चविद्याप्रदीपो ऽपि निर्वाणान्न निरन्तरं रक्षित, ईदृशो महामनीषिणश्चोत्पादिता येषां विचार-गाम्भीर्येण न केवलं स्वदेशीयं वाङ्मयं किन्तु विश्वस्य दर्शनमपि प्रभावितमभूत् ।"

ब्रिटिश-शासनात् पूर्वं भारते महान् विद्याप्रसार आसीत् । न केवलं द्वित्रेषु प्रान्तेषु अपितु सर्वस्मिन्नेव देशे ऽभून्न्यूनाधिकः शिक्षाविस्तारः । १८३५-तमे ख्रिस्ताब्दे बङ्गेष्वेव केवलं लक्ष-कल्पा आसन् पाठशालाश्चतुष्पाठ्यश्चेत्यासीच्छ्रीमद् आदम (Adam)-महोदयानामनुमानम् । अथ च सर टामसमुनरोमहोदयानामनु-सन्धानानुसार १८२२-तमे ख्रिस्ताब्दे मद्रास-संस्थाने १२४६८ पाठ-

-ाला आसन यासु १८८६५० छात्रा शिक्षा लभन्ते स्म ।

अनेन स्पष्टमेव ज्ञायते यदांगलानाम आगमनात्पूर्वं कियाना-सीद् विद्या-विस्तारः । तक्षशिला-नालन्दा-विद्यालययोर्विदेशेभ्यश्छात्रा विद्यालाभार्थं विद्वांसश्च ज्ञानावाप्त्यर्थं समागच्छन् । नालन्दा-विश्वविद्यालये तु दश-सहस्राण्यासन्न् अन्तेवासिनोऽध्येतारः ।

राजनीतिक-स्वार्थपरैर ब्रिटिश-शासकैः प्राचीना शिक्षा-पद्धतिस्तत्प्रवर्तिका पाठशालाश्च स्वकूटनीत्या विनाशिता इत्यत्राने-कानि प्रमाणानीतिहास-लेख्येपूपलभ्यन्ते । 'भारतस्य प्राचीन-शिक्षापद्धतिर् ब्रिटिश राज्य स्थैर्याय न हितकरी' इत्यासीत् सर-चार्लस-ट्रेविलियनस्य मतम् । तदनन्तरं 'लार्ड मेकाले'- इति-नाम्ना तस्यैव प्रथितयशसा बन्धुनोक्तं यद् "भारते शासक-शासितयोराशयम् अन्योन्यं प्रति विशदीकर्तुं द्वैभाषिकाणामस्त्यस्मभ्यम् आवश्यकता अस्माभिरेक ईदृशः पठित-वर्ग उत्पादयितव्यो यो रुधिरेण वर्णेन च भारतीयः सन्नपि आचार-व्यवहारे, मन्तव्याभिरुचौ, विचारविवेके च सर्वथाऽऽङ्गलः स्यात् ।" नास्त्यत्र लेशमात्रमपि संदेहो यद् भूत-पूर्वाणामांगलप्रभूणां कृपया तादृशो 'बाबू'-वर्ग समुदपद्यत, यः स्वतन्त्रतावाप्त्यनन्तरम् अद्याप्यधिकारारूढो विराजते । असावेव वर्गः साम्प्रत भारत-सभ्यतायाः संस्कृत-संस्कृतेश्च महान् द्वेपी तदभ्युदय-मार्गे च प्रत्यूहः । स आंगल-विद्या-लव-दुर्विदग्धो ऽन्यान् अनांग-लज्ञान् अपठितान् असभ्यांश्च मन्यते । तस्य स्वार्थ-कार्यमांगल-भाषया संपूर्णतया सपद्यते ऽतः किं तस्य राष्ट्रिय-शिक्षया संस्कृत्या वा ? के वा शिक्षाया कर्णधारा इति किमत्र तस्य प्रयोजनम् ?

## संस्कृतोद्धार-प्रसारोपायाः

१. राष्ट्रिय-शिक्षाया प्राथमिकमुद्देश्यमिदमेव भवितुमर्हति यदनया सर्वे देश-वासिनः स्वजीवन-यात्रां सुखेन यापयितुम्, अन्यांश्च प्राणिन. साहाय्य-दानेन सुखिनो विधातुं समर्था भवेयु। सुखेन जीवनं निर्वाहयितुं प्रथमत उदरपूर्णार्थमन्नम्, अथ च शरीराच्छादनार्थं वस्त्र, निवासाथ गृहं, रोग-निवारणार्थमौषध, विश्राम-विनोदार्थम् अवकाश कलात्मकाभिरुचितृप्त्यर्थ कानिचिन् साधनान्यपेक्ष्यन्ते। एतानि तावन्न्यूनतयाऽऽवश्यकानि। यस्मिन् राष्ट्रे प्रजा शरीर-वृत्तिमपि कर्तुं नाऽलं तत् तु जगति भारमात्रमेव।

अत' सस्कृत-शिक्षा प्रजाभ्य 'प्रथमतो ऽर्थकरीं' विधातु सुतरां प्रयतितव्यम्।

२. पुरा किलाऽऽचार्या विद्या-दान स्व-धर्म इति मत्वा विद्यार्थिनः पाठयामासुर्न तु धनलोभेन। शुल्क-ग्रहणं तु तेषां प्रतिषिद्धमासीत्। क्व तत् कृतयुगं क्व चाद्यतनं प्रवृद्धं कलियुगं यस्मिन् राष्ट्रस्य बहव उच्चाधिकारिणो ऽपि कलुषित-कर्म-प्रायाः। ईदृश्यां दुरवस्थायां केवलं निर्धना वराका सस्कृताचार्योपाध्याया एव त्यागिनः स्युरिति कथं सम्भाव्यते?

अत एवाल्प-वृत्तीनां संस्कृताचार्योपाध्यायानां वेतन-वृद्ध्याऽन्यैश्चोपायैर् जीवनोद्धारः कर्तव्यः।

३. राष्ट्रिय-शिक्षैव राष्ट्रस्य सर्वातिशायिन्यावश्यकता, तदर्थं प्रभूतं धनमपेक्ष्यते। अतो (क) राष्ट्रकोपाद्वा, (ख) नूतन करादानेन वा, (ग) अन्येभ्यो राज्यविभागेभ्यो ऽल्प-व्ययेन संचित्य वा, (घ)

निक-मनोवैज्ञानिकानुसन्धानं सामयिकीमावश्यकतां चोद्दिश्य यथोचितानि परिवर्तनानि कर्तव्यानि ।

८. बालोपदेशोपयोगीनि प्राथमिक-पाठ्य-पुस्तकानि, गद्य-पद्य-संग्रहा, अन्यच्च नवीनं नवीकृतं च प्राचीन साहित्यमुत्पाद्यम् । तत्तु सरलं, वाग्व्यवहारानुरूप, मनोहरैश्चित्रैश्चालंकृतं स्यात् ।

९ आकाश-वाणी-द्वारा प्रचारकैश्च संस्कृत-पठन-पाठन-क्रम प्रसारयितव्यः । पञ्चशतानि सस्कृत-विद्वांस संस्कृतप्रचारार्थं बद्ध-परिकरा भूत्वा सर्वमिम देशं विद्याऽमृतेनाप्लावयेयुर्, देशवासिन च प्रत्येक संस्कृतं पाठयेयु । संस्कृत-सप्ताहा, संस्कृत-पर्वाणि, संस्कृत-शिविराणि च काले-काले सर्वत्रायोजयितव्यानि । तेषु विंशति, पञ्चाशत्, शतं वा जना सम्भूय संस्कृत-भाषयैव सर्वं व्यापारं संपादयेयु । सर्व-साधारण-हितार्थ चल-पुस्तकालया अपि प्रवर्तयितव्याः ।

१० संस्कृत-परिषदोऽन्याश्च सस्कृतोद्धारसंस्था स्व-कार्यजातं संस्कृतेनैव संपादयेयु ।

११ दैनिक-समाचारपत्रेषु संस्कृत-समाचारा निबन्धा वा न्यूनतया स्तम्भैकमात्रम् अवश्यं निवेशयितव्या ।

१२ सस्कृत-नाटकाभिनय-चलचित्र-प्रदर्शनादिभिर्विनोदसाधनै सस्कृते जनरुचिरुत्पादनीया प्रवर्धनीया च । महाविद्यालयेषु छात्रा संस्कृतवाद-विवाद-शास्त्रार्थ-प्रतियोगिता-पारितोषिकादिभिः प्रोत्साहनीया ।

१२ राष्ट्रस्य, शिक्षागतया शिक्षाविभागस्य, मन्त्रिमहोदया संस्कृतज्ञाः स्युरथवा संस्कृतमजानन्तस्तत्पठेयुर्येन तेऽस्मिन् निहिताज् ज्ञानात् प्रेरणां लब्ध्वा संस्कृत-वाङ्मयस्याभिवृद्धये प्रसाराय चौत्सुक्येन प्रयत्नशीला भवेयु । ( साधुराम )

---

## संस्कृतस्य आधुनिक्यः समस्याः[1]

वस्तुत इदमतीव खेदस्य लज्जायाश्च स्थलं यदस्मिन्विषयेऽस्मदीये देशे ईदृश सन्देहस्य शङ्काया वा लेशोऽप्युत्पद्येत किं संस्कृतस्याध्ययनमावश्यकमपीति । यावता वैदेशिका विद्वांसः शासकाश्चापि सांस्कृतिक्या दृष्ट्या संस्कृताध्ययनस्य महत्त्वे कदाचिदपि कामपि विचिकित्सां न चक्रिरे । यथाद्यत्वेऽनेकदेशानां विद्यार्थिनः शिक्षणलाभाय योरुपममरीकां वा यान्ति, प्रायेण तथैव सहस्राब्दीर्यावद् देशान्तरेभ्यो विद्याजिज्ञासवः संस्कृत तदीयवाङ्मयं चाध्येतुमस्मद्देशमायान्ति स्म । एतेषु चीना यवना पारसीका आरब्या स्वर्णद्वीपमालानिवासिनश्चाभूवन् । तेषु युगेषु संस्कृतं सभ्यता-रहस्यानामधिगमस्य कुञ्चिकात्वेनाभिमतमासीत् । एतदर्थं च भारतीया विद्वांसो विदेशेष्वामन्त्र्यन्तेस्म इमे तत्तद्देशीयाँस्तत्तदीयभाषयैव संस्कृते सञ्चितस्य ज्ञानराशेरभिज्ञान कारयेयुरिति । यदास्माकीनो राज-

---

१ राष्ट्रपते श्रीराजेन्द्रप्रसादस्य भाषणम् संस्कृतविश्वपरिषदः द्वितीयेऽधिवेशने वाराणस्याम् ।

नीतिकपराभवोऽजायत यदा चास्माकं विद्यापीठानि बर्बरैराक्रमण-कारिभिर्व्यनाश्यन्त, अथवार्थिकसाधनाभावाद्विनष्टानि, तेषु हतदिव-सेष्वपि विदेशेषु संस्कृतमहत्त्वं तनुतां न गतम्। इदानीमपि योरुपे जापानेऽमरीकायाञ्च संस्कृतस्याध्ययनाय विशेषप्रबन्धो विद्यते तच्छिक्षणे च पर्याप्तधनव्यय क्रियते। एतत्सर्वं त्वेतदर्थमेव यत्संस्कृतस्याध्ययनेन मानवजातेरतीतस्याध्वनोऽतिधूमितपृष्ठानां यथा-वदवगमने गुरुसाहाय्यमासाद्यते, तदीयसाहित्यदर्शनाभ्यां च मानवो गम्भीरमानन्द सूक्ष्मविचारशक्तिं च लभते। परन्तु वैदेशिकापेक्ष-यात्यधिकमस्माभिरेतदावश्यकत्वमनुभाव्यम्। अस्माकं संस्कृति साहित्य प्रादेशिकभाषा कला मत-प्रभेदा इतिहासश्चेत्येवं संपूर्ण-जीवनं संस्कृतज्ञानेन विनास्मदर्थेऽबुद्धाज्ञातप्रहेलिकेव स्थास्यति। अनेनैतदुक्तं भवति यद् यावदस्मदीया विद्वांसो विचारकाश्चाथ जन-नायकाः शिक्षाशास्त्रिणश्च संस्कृतगिरा सर्वथाऽपरिचिता वर्तन्ते तावद्वयं स्वस्वरूपं प्रत्यभिज्ञातुमेव न शक्नुमस्तावच्च वय स्वराष्ट्रिय-स्याथवास्वजातीयस्य व्यक्तित्वस्य रहस्यानि ज्ञातुमेव न पारयामः।

भारतवर्षस्यातीतोऽध्वा मत्प्रीतिविषयोऽहञ्च तदीयैतिहासिक-ज्ञाननिधि तदीयजातीयानुभूतिञ्च मृल्लोष्टवद्वा गृहमलवद्वा न प्रतिक्षेप्तुमिच्छामीति केवलमेतद्भावप्रयुक्त एव न ममायं विचारः। नाप्येवमुक्ते क्षणमपि मन्मनस्येष विचारस्तिष्ठत्याधुनिकभारते सामाजिक्य आर्थिक्यो वातीतपरिस्थितय' पुनर्यथापूर्वमानीयन्तामिति। अतीतं प्रति ममावश्यमादरभावः किन्तु नैवाहं तेन निगडित। यद्येप ममाग्रहो यत्संस्कृताध्ययनं देशे विस्तीर्यतां जनप्रियं च भवे-

त्तर्हि सोऽनेनैव निमित्तेन यदहमिच्छामि वय जनताया हृदयमव-बुद्ध्य स्वकार्यक्रमं स्थिरीकुर्यामिति, जातीयचेतनानवबोधहेतोर्यन्-किञ्चिदागामिकार्यं साफल्येन सम्पादयितुमस्माभिर्जनताया हार्दिक सहकारित्व-समर्थनेन प्राप्येयातामितीदृशीमवस्थां जनितुं न दद्याम चेत्ति । ममैतन्मतम्—कोऽपि विचारशीलो जन एतन्निषेधं न करिष्यतीति विश्वसिमि यत्कापि ज्ञाति. किमपि राष्ट्रं वा न तावत्सफलतयाग्रे गन्तु पारयति यावत् स्वैतिहासिकचेतनां स्वचैत्तप्रवृत्तीं स्वशक्ति तदुपलब्धिसाधनानि च यथावन्न जानीयाद् यत ईदृश्या जातेर्व्यक्तिषु कमपि कार्यक्रममधिकृत्य तादृङ्मतैक्यमुत्साहश्च न सम्भवितुं शक्नोति यादृक् तदा भवति यदा जातीयचेतनाया मनोनुकूलं किमपि कार्यक्रमान्तरमादीयते । सर्वथा जातीयचेतनानभिज्ञो लोकनायको जनशक्ति प्रगत्यै प्रयोगमानेतुं तथैवासमर्थो भविता यथा जलशास्त्रेण सर्वथैवापरिचित कोऽपि जनो नदीप्रवाहमवारुध्य रचनात्मककार्यार्थं प्रयोक्तुमसमर्थो भवति । राष्ट्रपिता महात्मेदं तथ्यं नपुणमभिज्ञातवांस्तेन च भारतवर्षे राजनीतिक्याः सामाजिक्या आर्थिक्याश्च क्रान्त्या यः कार्यक्रमो विदधे सोऽस्माकमैतिहासिक्या जातीयचेतनाया यथावदभिज्ञान एवावलम्बितोऽभूदनेनैव च हेतुना स कार्यक्रमोऽनायासेनैवात्रत्यसाधारणजनताया उत्साहप्रद समर्थनं सहकारित्वं च लेभे । अतो ममायमाग्रहो भारतवर्षस्य भव्यभविष्याद्यार्थिकसांस्कृतिक प्रगतिभ्यां चेदं नितान्तमावश्यकं यदस्माभिः स्वजातीयचेतनामभिज्ञातुं यथोचितप्रबन्धो विधीयतामिति । अस्य प्रबन्धस्यैकं प्रधानमङ्गं संस्कृताध्ययनार्थप्रबन्धकरणं यतो बाहुल्येन

संस्कृतान्तर्गता त्वेव वर्तते सा सामग्री यामवलम्ब्य वयं स्वजातीयस्व-रूपं यथावदभिज्ञातुं बोद्धुं च शक्नुमः ।

एष मम खेदविषयो यदेतस्यां दिशि यादृश्या व्यवस्थया भाव्यं यावांश्च धन समय शक्त्युपयोगो विधेयस्तादृशी नैवास्ति व्यवस्था नापि च तावन्तं धन-समय-शक्तीनामुपयोगं कुर्महे । आसीत्सोऽपि समयो यदा राज्यं समाजश्चेत्युभाभ्यामेव संस्कृताध्ययनस्य पोषणमक्रियत । राजसभायां सस्कृतस्य विद्वांसः कवयश्च बहु-सम्मानभाजोऽभूवन्नेवञ्च राजानः सामन्ताश्च तेभ्य प्रोत्साहन-प्रदानाय पर्याप्त धेनु-धन-धान्य-वितरण चक्रु । समाजस्य कार्येण संस्कृतस्यैतावान्न दृढसम्बन्ध आसीद्यदसौ तत्साहाय्येन विना किमपि महत्त्वपूर्णपदमाधातुं नोत्सेहे ।

अतो दाननदी समाजस्रोतसो बहिर्भूय सर्वदैव सस्कृतपण्डितानामाचार्याणाञ्चार्थिक जीवनमुर्वरयति स्म । तस्मिन् युगे संस्कृतस्य विद्वांसः प्रत्येकं क्षेत्रेपूल्लेखनीयं कार्यं कृतवन्त । कला-विज्ञानसाहित्यानां समेषामेव भाण्डागारं ते स्वकीयेन परिश्रमेण स्वप्रज्ञया च भृतवन्तः । अननुचितमेवेदं कथन यदमी विद्वास एतादृशीं ज्ञानशीलसम्पदं भारतवर्षाय प्रत्तवन्त याऽद्यापि निखि-लानपि जागतिकान् जनानाश्चर्यचकितान करोति । कालक्रमेण युगपरिवर्तनमभूद् राज्यसमाश्रयश्च संस्कृतविपश्चितां विच्छिन्नो बभूव । समुपस्थितायामेतादृश्यामव्यवस्थायां संस्कृतस्याध्ययनम-प्रतिहतमासीत् संस्कृतस्य पण्डिताश्च भारतीयं कलादर्शनसाहित्य-कोषं परमसमृद्धमक्षुण्णञ्च स्थापितवन्त. – तत्रेदमेव प्रधानं कारणं

यत् समाजादुद्गता दाननिर्झरिणी तदापि नितरामायता गम्भीरा चासीत्। तस्या दाननीरेणामीषां पण्डितानां जीवनं सुषिक्तमासीत्।

हन्त ! प्रायेण शताब्दीद्वयपूर्वतोऽद्य यावत् समाजनिर्गतेयं दानसरिदपि अस्थानेव लक्ष्यते। आङ्ग्लानां शासनकाले विचित्ररूपा खलु शिक्षणव्यवस्था प्रचलिता, ययेयं भावनाऽस्माकं देशे पदं निहितवती यदस्माकं स्वकीया ऐतिहासिकपरम्परा. संस्कारा. सम्प्रदायाश्च सर्वेऽपि निरर्थका हानिकराश्च सन्ति अतस्ते हेया अस्माकं कल्याणकरी वैदेशिकी सभ्यता चोपादेया। अत. क्रमश संस्कृतस्य विदुषामाचार्याणाञ्चार्थिकसाधनानि स्वल्पीभूतानि तेन च दारिद्र्यह्रदे ते विद्वांसोऽपि निमग्ना। यदा तैः संरक्षितं प्रचारितञ्च ज्ञाननिधिं प्रत्येव लोकानां मनसि समुत्पन्नोपेक्षा तदा कथमिव संभाव्यमासीद् यज्जनानां चेतसि तन्निधिसंरक्षकान् विदुष आचार्यांश्च प्रति तिष्ठेदादरभावना अतो ये पण्डिता समाजस्य शिखामणित्वेन संमता भृश पूज्याश्चासन् त एवोपेक्षणीयतमाः परिहासभाजनानि च बभूवु.। समाजे तेषामाचार्याणां स्थानमांग्लभाषया आंग्लसंस्कृतेश्च पण्डितैर्गृहीतम्, आंग्लदेशश्च (इंगलैण्ड) भारतस्य कृते प्रकाशस्तम्भो ज्योतिर्निधिसूर्यश्च समजायत।

परिवर्तनस्यास्य देदीप्यमानं निदर्शनमिदमेव यदस्मिन् युगे भारतीयानां नेत्राणि वाराणसीं विहाय कलकत्तानगर्यां संलग्नानि किन्तूपेक्षोपहासयोरप्यस्मिन् युगे संस्कृतस्य जीवनमक्षुण्णमासीत् संस्कृतस्य पण्डिताश्च न व्यलीयन्त, संस्कृतं संस्कृतोपासकाश्च

कदापि लक्ष्मीविलासानां दास्यं न जग्मु' अतएवेदं दुष्करं कार्यं संभाव्यमभून् ।

आसहस्राब्दीभ्य. तेषां पण्डितानां गुरुवर्यैं प्रचारिताऽऽसीदियं गौरवमयी परम्परा यद् भगवत्याः सरस्वत्या उपासकेन धनधान्य-राजसम्मानादीनां मोह. कदापि न विधेय । अयमेवासीत्तेषाम-भनिवेश.—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मी समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथ प्रविचलन्ति पदं न धीरा । इति ।।

अतो विविधामुपेक्षामार्थिकविपत्तीश्च सहित्वाऽपि अस्माकं पूज्याः पण्डिततल्लजाः संस्कृतं सजीवं परिरक्ष्य तदीयभाण्डागारं भृतवन्त., किन्तु स्वधर्मनिर्वहणेन समं तेषां मनस्यासीदयं विश्वासोऽपि यद् युगपरिवर्तनमवश्यम्भावि पुनश्च भारतवर्षस्य लोकानां पण्डितानामाचार्याणाञ्च भागधेयानि जागरिष्यन्ति । स्वतन्त्रेऽस्मिन् भारते ते स्वकीयस्यास्य विश्वासस्य अस्य स्वप्नस्य आसामाशानाञ्च पूर्तिरश्मिमपि दृष्टवन्तो न वेति वक्तु ं न शक्यते । काले काले इदं भय मन्मानसमाविशति यत् स्वतन्त्रेऽस्माकं भारते संस्कृताध्ययनस्येयं प्राचीना प्रणाली कदाचिल्लुप्ता भवेदिति ।

अद्य संस्कृतस्य विदुषां या दशा वर्तते सा वस्तुत. शोचनीया । अद्य यावद् राज्येनापि संस्कृताध्ययनाय समाश्रयदानस्य भारो नाङ्गीकृतः । विद्यालयेषु सस्कृताध्ययनार्थमस्ति कश्चित् प्रबन्ध इति

मत्य किन्तु सोऽपि नगण्य एव। या उच्चावचा संस्कृतपाठशाला अद्यावशिष्टास्तदवस्थाऽपि सम्प्रति शोचनीयतां गच्छति अतस्तदीय-स्नातकानामस्माकमाधुनिकजीवने नगण्यकल्पं पदमस्ति। परिणा-मत' संस्कृतस्याचार्या वृत्तिस्वीकारायोद्यता अपि वृत्तिं न लभन्ते।

प्राचीनकाले पाटशालासु संस्कृतस्य शिक्षका आमान्नं सदाव्रतं-ञ्चाश्रिताः। पूर्णिमैकादशीप्रभृतिषु पर्वसु प्रत्येक गृहस्थैर्दत्तं द्विदल-तण्डुलपिष्टात्मकमामान्नमाचार्या लभन्ते स्म, इत्थमेव तेषां कृते नवीनवस्त्राणामपि व्यवस्थाऽऽसीत्। वाराणसीप्रभृतिषु स्थानेषु भोजन प्राप्नुवन् किन्तु नवीनचाकचिक्याभिभूतान् जनान् इदं सर्वं पापण्डविजृम्भणमिव प्रतिभाति।

एतदतिरिक्तं देशेऽन्नवस्त्रादेर्नियन्त्रणादिकं सौलभ्यमपि नावशिष्टं यत् पाठशालीया पण्डिताश्छात्राश्च गृहस्थेभ्य ईदृशं साहाय्यं लभन्तामिति। पुनश्च तन्मूल्यवृद्ध्या गृहस्थानामपि साम्प्रतं नेदृशी दशा वर्तते यत्तु ईदृशं दानं कर्तुं समर्था'। यानि महान्ति देशीयराज्यानि भूस्वत्त्वानि च कार्येऽस्मिन् सुबहु व्ययं कुर्वन्तिस्म, तान्यपि नावशिष्टान्यद्य येन तदपि साधनं समवसित, तत्स्थाने चाद्यावधि न कापि नवीना व्यवस्था सम्भाविता। फलत. संस्कृतस्य शिक्षकाणां छात्राणाञ्चोभयेषामपि दयनीया दशा सञ्जाता। अनेनैतदुक्तं भवति यत् समाजोद्गता दानसरित् शुष्कप्रायाऽस्ति। अत एतासु परिस्थितिषु संस्कृताध्ययनस्य परम्परा समवसिता चेत्तर्ह्येतत्- स्वतन्त्रभारतस्य लज्जावहमवश्यमेव स्याद्यदि पुन नाश्चर्यकरमपि। विदेशेषु संस्कृताध्ययन वर्धेताथ च भारते

एव समाप्तं भवेदितीदमकल्पनीयं यद्यपि तथापि वयं तन्निकटस्था एव भ्रमाम इति मां प्रतिभाति। यत् काशीसदृशविद्यापीठेऽपि कियन्त एवाचार्यवंशजा अद्य पितृपितामहप्राप्तां संस्कृतविद्यां परित्यज्याऽऽधुनिकीं शिक्षां गृहीत्वा बहुलवेतना भृतीं स्वीकुर्वन्तीत्यतः परं संस्कृतविद्यां तत्पठनपाठनप्रणालीञ्च प्रति अस्मदीयोदासीनतायां, तज्जनितास्वार्थिककठिनतासु, अद्यावधि कष्टसहस्राणि सोढ्वाऽपि अस्मदीयैः प्राचीनैरुदात्तादर्शैः प्रभावितेषु सत्सु संस्कृताध्ययनाध्यापनकर्मणि परम्परया निरतेष्वपि तत्प्रति सञ्जातायामश्रद्धायाञ्च किमधिकं प्रमाणं भवितुमर्हति। अतो यत्रैकतोऽस्माभिस्संस्कृतविद्या जीविकोपयोगिनी निष्पाद्या, तत्रैवान्यतः इदमपि न विस्मर्तव्यमस्माभिर्यदेनां त एव धन्यपुरुषा अद्यावधि जीवितरूपेण रक्षितवन्तो य एनामर्थोपार्जनमात्रस्य साधनं नामन्यत। समाजोऽपि स्वीयां स्थितिमीदृशीमापादयेद्यत्र मानप्रतिष्ठासम्मानादि सर्वमपि लक्ष्म्या एवानुगामि न भूत्वा सरस्वत्यर्थं सुरक्षितं स्यात् लक्ष्म्यर्थञ्च धनजनितं चाकचिक्यं लाभकार्यञ्चैवावशेषितं भवेत्।

अतो महता धैर्येण सर्वैरेवास्माभिर्विचारणीयमेतद्यत् कैरुपायैर्वयं देशे संस्कृताध्ययनस्य ह्रासस्थाने प्रसाराधिक्यं कर्तुं समर्था भवेमेति। सर्वप्रथमं तु अस्मत्समक्षमयं प्रश्न उपस्थितो यदागामिकाले संस्कृतपाठशालानां विद्यालयानाञ्च कृते केनोपायेन वित्तप्रबन्धो भवेदिति। एतत्कालपर्यन्तं तु एताः पाठशाला दानशीलेभ्यो भूस्वामिभ्यः श्रेष्ठिभ्यश्चावश्यकं वैत्तिकसाहाय्यं लभन्ते स्म। कति-

पयास्तु तदर्थदत्तभूमिप्राप्तधनेन चलन्ति स्म। किन्तु भूमिस्वामित्व-व्यवस्थोन्मूलनस्य निर्णय: कृतोऽस्माभिरिदानीम्। अत एतासां पाठ-शालानां तद्वैत्तिकस्रोतस्तु शीघ्रमेव शुष्कं भविष्यति। श्रेष्ठिभ्य आगच्छत्तस्साहाय्यस्यापि चिराय न काऽप्याशा। एक तावदद्य धनिक-वर्गीयेषु नवयुवकेषु दानशीलताया स्थाने मद्यशीलताया रुचि-र्वर्धमानास्ति, अपर पुनस्तेषां संख्यापि न्यूना जायमानाऽस्ति, धनस्य सङ्केन्द्रणञ्चापि कतिपयेषु नगरेषु भवदस्ति। मध्यमवर्गी-येभ्य कृषीवलेभ्य श्रमिकेभ्यश्च यत् सक्त्वाद्यन्नस्य साहाय्यं मिलति स्म, सा त्वद्य समाप्तप्रायैव ज्ञेया। अत प्रत्यक्षमिदं यदद्य-तनसमाजादियमप्यपेक्षा कर्तुं न शक्यते यदसौ वर्तमानानामपि पाठशालानां भारं ग्रहीतुं शक्नोति, का कथा नवीनानां पाठशा-लानामुद्घाटनस्य परिचालनस्य च? वस्तुस्थितिस्तावदियमेव यदद्य राज्येनेयत्यामधिकमात्रायां सामाजिकसूत्राणि गृहीतानि यद्यदि तेन संस्कृताध्ययनस्य वित्तभार स्वयं न गृहीतो भवेत्तर्हि स आयत्यां न निर्वोढुं शक्यते। राज्यसर्वकारा एतद्विषये सर्व-प्रथमं कार्यं कर्तुं शक्नुवन्तीत्यहमवगच्छामि। समयोऽसावा-गतोऽद्य यदा संस्कृताध्ययनस्य कृते आवश्यकस्य वित्तस्य व्यवस्थां कुर्यु। यदा ते समाजस्य सर्वाण्येव सम्पत्तिसाधनानि आत्मसात् कुर्वन्तस्सन्ति, तदा तेषां समाजस्योत्तरदायित्वभारस्यानिर्वहणे न किमपि कारणं दृश्यते। भारतीयसमाजस्य मूलस्वरूपं विशिष्टप्रका-रायां सहकारितायामवलम्बितमासीत्। विदुषो भासे गृहस्थे गृहस्थस्य च मार्गदर्शनभारो विदुष्यासीत्। भारतीयसमाजस्य प्रत्येकं क्षेत्रेषु

एतद्विधैव परम्परागता सहकारिताऽऽसीत्। यदा वयं तस्याः परम्परागतसहकारितायाः अपसृत्य जीवनस्य नियन्त्रणमधिकाधिकं राज्याधीनं कर्तुमुद्यताः स्म तदा सर्वकारस्य कर्तव्यमिदं यत् स एतान्युत्तरदायित्वान्यप्यङ्गीकरोतु। विचारोऽयम्मदीयो यद्भारतस्य राज्यसर्वकाराणां कर्तव्यमिदं यत्ते स्वकोषेभ्यः संस्कृताध्ययनाय पर्याप्तं साहाय्यं दातुमारभन्तामिति।

अपि च, अत्रत्या उद्योगपतयोऽपीदं स्वकर्तव्यं मन्येरन् यत्ते स्वदेयदानस्य कियच्चिदंश विश्वविद्यालयेषु संस्कृताध्ययनार्थं विशिष्टपीठिकास्थापनाय ददतु। आङ्गलदेशेऽमरीकायाञ्च स्वभाषासम्बद्ध-प्रसिद्ध-कलाधर-साहित्यकार-कृतिजीवनाध्ययनार्थं धनिभिर्विश्वविद्यालयेषु विशिष्टपीठस्थापनाय पर्याप्तदानमदायि। अस्मद्देशीयधनिकवर्गेणाप्येवमेव करणीयमिति मे मतम्।

अन्यच्च—संस्कृतविदेऽस्माभिरार्थिकक्षेत्रेऽपि स्थाननिर्माणप्रबन्धः करणीयः। मन्येऽद्यत्वे संस्कृताध्ययनस्य प्रचलितपरम्परायाः वर्तमानव्यवस्थायाश्च हेत्वोरपि संस्कृताध्येतारः आर्थिकक्षेत्रे किमपि स्थानं न लभन्त इति। संस्कृतविद्यालयेषु संस्कृताभ्यासेन सहैवार्थिकदृष्ट्योपयोगिनामाधुनिकजगत्परिचयापादकानां विषयाणामप्यध्ययनमनिवार्यं विधीयेतेत्यावश्यकम्। कस्यापि हेतोरिदानीं संस्कृताध्ययनसम्बन्धः केवलं हिन्दुमतेन सहावशिष्यते। नाहं मन्येऽतीतकाले संस्कृतं केवलं मतविशेषस्य दास्ये बद्धमासीदिति। अवश्यमेव धार्मिकसंस्कारभाषापदारूढमपि तद् विज्ञान-कला-साहित्यादिभाषारूपेणापि व्यवाह्रियत। किन्त्वद्य संस्कृतं न त्वेव राजकार्यस्य नापि

च कलाया विज्ञानस्य च न वा वाणिज्यस्योद्योगस्य च भाषाभूत-मुपलभ्यते । साम्प्रतं त्वेनत्स्थानमाङ्गलवाचाधिष्ठितम् । किन्त्वाङ्ग-लीयवाचोऽपसरणेऽन्येषु क्षेत्रेषु तदासने संस्कृतं न सम्भवत आसीन भविष्यति । अतो भविष्ये संस्कृतभाषाया प्रात्यहिकार्थिक-राजनीतिकवाणिजिकजीवनेन नाममात्र एव सम्बन्धः स्थास्यति । किन्तु ममास्य कथनस्य नेदं तात्पर्यं यत्संस्कृताध्ययनं व्यर्थम् । तन्मूल्यं त्वस्त्येव सर्वदा च स्थास्यति । सभ्यतासंरक्षणाय, किमन्यद्, मानवजातेरस्तित्वार्थमिदमावश्यकं यदध्यात्मशीले शिक्षापद्धतौ समन्विते स्याताम् । एतत्समन्वयस्य संस्कृताध्ययनसमं प्रभावि साधनान्तरं न सम्भवतीति तावन्मम मतम् ।

इदमहमेतदर्थं ब्रवीमि यन्मम विचारणायामासहस्राब्दीभ्य संस्कृतस्याधारतल पृष्ठभूमिश्चासावध्यात्मवादोऽस्ति यो भारतस्य मानवतायै प्रसादीकृत उपहारः । सहस्राब्द्यो व्यतीता यदा भारते प्रथमतोऽय विश्वास उदपादि जगतोऽस्य सर्व-विध-विपत्ति-बाधा-न्यूनता-काठिन्येभ्यो मानवस्तावन्मुक्तिं लब्धुं न प्रभवति यावदस्य जीवनं सत्यस्योपासनं सेवाया अचलव्रत न्यायस्याविचलनिष्ठा च न सञ्जायत इति । अस्मत्पूर्वजा अस्यादर्शस्य 'कृष्णार्पणम्' इति नाम विदधिरे । अस्यायमर्थो व्यक्तिर्यत्किञ्चिदपि कुर्यात्तदनया श्रद्धयानयेच्छया च कुर्याद्यदहमिदं समस्तविश्वस्य ततोऽपि परतो विश्वात्मनः प्रसन्नतायै करोमि न तु स्वेन्द्रियसन्तोषायेति । अस्यै-षोऽर्थः कदापि नासीद् यद् व्यक्तिः स्वसांसारिककर्तव्यानि परित्यज्य किमपि वनं गत्वा तदेवाश्रयेत् । अस्य केवलमयमेवार्थ आसीद्यदसौ

किमपि सांसारिकं स्वकृत्यं स्वार्थबुद्ध्या न कुर्यात् प्रत्युतेदमेव विश्वात्मे-च्छानुकूलमिति मत्वा कुर्यात् प्रत्युतेदमेव विश्वात्मेच्छानुकूलमिति मत्वा कुर्यात्। तथैव च कृत्वासौ स्वीयाहङ्कारबन्धनान्मुक्तिं प्राप्य स्वकीयं वास्तविकं विश्वस्वरूपमभिज्ञातुं पारयति। इममेवादर्शमस्मदीय-कवयः स्वकाव्येषु वयन्तिष्ठस्मास्मदीयसाहित्यकाराश्च स्वकृतिषु प्रदर्शितवन्त। पुराणान्यस्यैव गुणान् गायन्ति दर्शनानि चानेनैव भावेन प्रभावितानि। वस्तुतो नेयमनुचितोक्तिर्भविता यदयमा-दर्शोऽस्मज्जातीयानुभूतेस्तन्तुपूतप्रोतोऽस्ति। सम्पूर्णसंस्कृतवाङमयस्य प्राणः प्रेरणा चास्मिन्नेवादर्शे निधीयेते। संस्कृतनाटकाख्यानकथा-महाकाव्यशास्त्रविज्ञानेषु सर्वत्रैवास्य साम्राज्यम्। अतः स्पष्टमेतत् संस्कृतवाङ्मयविद्यार्थी एतदादर्शाप्रभावितो न स्थातुं शक्नोति।

ममेयं विचारणा यदद्य जगते यं महाप्रसादं दातुं प्रभवामः सोऽयमेवादर्शः। एतञ्च वयं तदैव दातुं शक्ष्यामो यदा न केवल-मस्मदीया भूमिरस्मदौद्योगिकयन्त्राणि च विशालधनधान्यसरित एव स्रोतांसि सम्पत्स्यन्ते यावता तत्र कार्यं कुर्वाणा श्रमजीविनः कृषीवलाश्चाप्यनेनैवादर्शेन प्रेरिता भविष्यन्ति। तस्य स्वर्णमय-युगस्य स्थापनायामस्माभिरश्रान्तपरिश्रमः कार्योऽनेकविधान्यायोज-नानि च विधेयानि। किन्त्वेषां सर्वेषां प्रयासानामायोजनानाञ्च मूलेऽयमेव नियमस्वीकारो यच्छैल्पिकाध्यात्मिकशिक्षयोर्मध्यवर्ती गर्तः प्रपूर्येत। संस्कृतमेव स सेतुर्य एतद्गर्तं पूरयति। अनयैव च दृष्ट्या भवद्भिराधुनिके जगति तच्छिक्षादीक्षयोः प्रबन्धः करणीयः।

# संस्कृत वाङ्मयस्य विशेषताः[1]

अहं मन्ये संस्कृतस्याध्ययनं न केवलं भारतीयानाम् विश्वासामपि समस्यानां समाधाने सहायकं भवितुमर्हति । अतएवाहमनुरुणध्मि यत् शिक्षालयेषु संस्कृताध्ययनस्य पर्याप्त प्रोत्साहनमावश्यकम् । अधुना यदस्माकं जीवनं तस्य मूलभित्तिः संस्कृतग्रन्थेषु वर्तते ।

संस्कृतवाङ्मय न खलु भारतस्यैव अपितु मानवमात्रस्य अमूल्यो निधिः । अस्य प्राचीनता व्यापकता विशदता सौन्दर्यं मधुरता सर्वमेव ईदृशं वर्तते येन न केवलं मानवसंस्कृतेः सम्पूर्ण इतिहास प्रकाशे आयाति किन्तु मानवहृदयं आनन्दमग्नं भवति तथा एकस्य प्रकाशलोकस्य प्रत्यक्षं भवति यत्र गतस्य जीवनं सार्थकं भवति । स संसाराद् विमुच्यते ।

मानवस्य सांस्कृतिकविकासस्य चित्रं तु संस्कृतवाङ्मयस्य सहायतामनपेक्ष्य निर्मातुं शक्यत एव नहि । संसारे नास्ति अन्या एकापि जातिर्या स्वकीयं प्राचीनमितिहासं सुरक्षितं दर्शयेद् यथा वयं भारतीयाः प्रभवामः । ऋषीणामेव शब्दाः सुरक्षिताः सन्ति । तत्र निर्माणकालिकं चित्रं वयमवलोकयितुं प्रभवामः । तच्चित्रं वर्तमान-समये प्राचीनेतिहासनिर्माणे सहायकं सत् अग्रेऽपि सहायकं भविष्यति । अद्य विश्वस्मिन् एकोऽपि नास्ति एतादृशः विद्वान् यः

---

१ मिथिलासंस्कृतविद्यापीठ ( संस्कृतरिसर्च इन्स्टीट्यूट ) नाम्न्याः संस्थायाः शिलान्यासावसरे श्रीमतां राष्ट्रपति श्रीराजेन्द्रप्रसादमहोदयानां भाषणसारांशः ]

"संस्कृतवाङ्मयेन मानवस्य प्राचीनेतिहासस्य निर्माणे साहाय्यं प्राप्यते" इति न स्वीकुर्यात्।

मानवसंस्कृतिपरिज्ञानाय, तत्र स्वजातीयस्थानज्ञानाय, तथा तथ्यपरिज्ञानायैव नहि किन्तु कलाया उत्कृष्टे रूपे आनन्दे मज्जनायापि न केवलमस्माकं किन्तु विश्वेषाम् संस्कृतज्ञानमावश्यकम्। जीवनस्य एकोऽप्यंशः, मानवत्वाभिव्यक्तेः कापि रीतिः, कलायाः किमपि रूपं नास्ति यत्तत्र न स्यात्। एवं हि पूर्णतासंस्कृतवाङ्मयस्य। समाजव्यक्त्योः राजरङ्कयोः नागरिकग्रामीणयोः मानवपशुपक्षिणाम् सभ्यासभ्ययोः चेतनाचेतनयोः आत्मपरमात्मनोः सर्वेषामेव विवेचनं सहृदयग्राहिण्या रीत्या कृतमेवात्र वाङ्मये। मानवहृदयस्य प्रकोष्ठः नास्तीदृशः यः तस्य दृष्टिगोचरो न स्यात्, अथवा यस्य सूक्ष्म तत्त्व न कौशलेन व्यक्तीकृतं भवेत्। प्रकृतेः स्वरूपं तादृशं नास्ति यत् नात्र स्पष्टं चित्रितम्। समाजस्य न तादृशः कल्पः यस्य व्याख्या तत्र चित्रितानामादर्शानाम्, अभिव्यञ्जनानां व्यसनानां च चित्राणि न स्फुटतया प्रतीयेरन्। एवं मानवस्य भविष्यता भाग्येन सुखेन कल्याणेन चासम्बद्धः एकोऽपि प्रश्नो नास्ति यस्य विचारपूर्णमुचितञ्च समाधानं तत्र नास्ति। पशूनां पक्षिणां च जीवनस्य तादृश सूक्ष्म सत्यं च वर्णनम्, मानवजीवने तेषां महत्त्वव्याख्या तेषामुपरि तादृशी सद्भावना संसारेऽन्य जातीनां साहित्ये नास्ति।

अत्र विदुषां जनसाधारणानां वयस्कानां बालकानां च कृते प्रचुरा सामग्री विकीर्णा वर्तते। गन्धर्वयक्षासुरनिशाचरप्रभृतीनाम् अद्भुतसृष्टेः चमत्कारिशक्तीनां कृत्यानां च इयद् वर्णनमस्ति येन

बालकाः पर्याप्तं प्रसन्ना भवितुं शक्नुवन्ति। स्मृतिषु एतादृशं ज्ञानं विद्यते यासाम् एकैव उक्तिः मनसि निहिता साधारणजनानपि ज्ञानिनो विदधाति। तथा एतादृश कथाः सन्ति येषां श्रवणेनैव अपठिता अपि विचारवन्तो भवन्ति।

तत्र कलादृष्ट्यापि चमत्कार तादृक् विद्यते यः सम्भवत नान्यत्र लभ्यते। "घटे समुद्र." इयं सूक्ति सत्यं संगच्छते। शब्दार्थयोः साम्यम्, अलङ्कारस्य शोभा, व्यञ्जनायाः उत्कृष्टश्चमत्कारः संस्कृते एव दृश्यते। संक्षेपतो वक्तुं शक्यते यत्, "शब्दानामुत्तमा व्यञ्जना संस्कृते एव। यद्यपि पाश्चात्या विद्वांसः सूत्रादीन् साहित्यदृष्ट्या निन्दन्ति, तथापि इदं कदापि न विस्मर्तव्यम् यत् साहित्यस्य मान्यतायां वैमत्यमस्ति आवयोः। संसारचक्रे वंभ्रम्यमाणान् तान् अलकारादयो नानन्दयन्ति। किन्तु निष्पक्षया दृशा दर्शनेन इदमनुमितं भवति यत् शब्दस्य कियानस्ति प्रभावः ? स च संस्कृतेनैव ज्ञातो भवति।

न केवलमभिव्यञ्जनाशक्त्या इदम् अतुल्यम् अपितु अभिव्यक्तेः तद्रूपं नास्ति यस्मिन्नस्य सफलता न स्यात्। गद्ये पद्ये नाटके गीते काव्ये च संस्कृतलेखकाः निपुणा आसन्। विन्टरनिट्ज महोदयैः लिखितं यत् साहित्यस्य व्यापकेऽर्थे यत् अभिमतं तत् सर्वं संस्कृत-साहित्ये वर्तते, अर्थात् ऐहिकामुष्मिकपद्यात्मककाव्यं महाकाव्यं गीतं नाटक नीतिकाव्यं तथा वर्णनात्मकं वैज्ञानिकं च पद्यम्।

यद्यपि अनेके पाश्चात्याः यूनान-साहित्यात् संस्कृतसाहित्यं न बहुमन्यन्ते, किन्तु तेऽपि स्वीकुर्वन्ति प्राचीनं गौरवमस्य।

निष्पक्षया धिया विचारे तु निर्विवादमेतद् यत्, रामायण-महाभारतसदृशं काव्यं संसारे नान्यत्र विद्यते ।

संस्कृतवाङ्मयस्य विकास· तादृशे वातावरणेऽभवत् यत्र भौगोलिक-दृष्ट्या जातिदृष्ट्या च अनेकविधाः आसन् किन्तु अस्य संवर्धने भौगोलिकापेक्षया जातिगत जीवनाधारभूतादर्शानामधिक· भाग आसीत् । बहो· कालात् एष निश्चय अत्र आसीत् यत् जीवनं न निरर्थकं किन्तु आत्मदर्शनस्यैकं साधनम् अतएव साहित्यं क्षणिकानुभवं न बहुमन्यते किन्तु जगत· चिरकल्याणस्य साधनम् । कलाया अपि न मनोरञ्जनमात्रमुद्देश्यम् किन्तु पुरुषार्थसाधनमपि । काव्यानां पाठेन मुक्ति· इति तु पारम्परीणो विश्वासः । साहित्यविचारकैरपि एतत् प्रतिपादितमेव । यत्र तत्र अयं ध्वनि संस्कृत-साहित्ये स्फुट एव, अत एवात्र सत्यधर्मयोरेव जय सर्वत्र प्रतिपादितो दृश्यते । इयमपि अपरा विशेषता—मानव पशुत्वं विहाय देवत्वं यथा प्राप्नुयात् सैव साधना कवे । यत तत्रैव लोकस्य कल्याणम् ।

सस्कृतवाङ्मस्य इयमपरा विशेषता यत् तत्र व्यक्तस्य जगत एकत्व-चित्रणम् । तदिद मन्यते यत् स्थावर-जगमानामन्त· एका एव शक्तिः विराजते । अतएव नायकस्य सुख-दु·खे सर्वत्र प्रतिबिम्बत· । कारणमिदमेव यत् सस्कृते पशूनामपि सुन्दरं सहानुभूतिपूर्णं च वर्णनम् यथाऽस्ति न क्वाप्यन्यत्र । शेक्सपीयरस्य जन्मत पूर्वमेव तत्र पाषाणात् गीत-श्रुतिः आसीत् किन्तु भारतीयाः कवयस्तु मेघेभ्यः शुकेभ्यस्तदा सन्देश हारयन्तः आसन् । अत्र नायकनायिकानां

जीवनधारा निर्माणे परमेश्वरोऽपि सहायक. आसीत्। इदं विश्व-सिमि विश्वात्मना मानवजीवनस्य तादात्म्यस्थापने केवलं संस्कृत-साहित्यमेव सर्वात्मना प्रथम कृतम्। अतएव ऐतिहासिके परिवर्त-नेऽपि मस्तकमुन्नमय्याधुनापि प्राथम्यं वहति एष देशः।

अतः मैक्समूलरस्य एकमुद्धरणमुदाहरणरूपेण दीयते। तेन यत् ह्वट् इण्डिया कैन टीच अस, पुस्तके अलेखि तदवलोक्यताम्। यद्यहं लोकेऽस्मिन एकस्य देशस्य ज्ञानं प्राप्नुयां यत्र प्रकृतिः धनं शक्तिं रमणीयतां यावत्सस्य दत्तवती, यथा य पृथिव्यां स्वर्गरूपोऽस्ति स भारतमेव। यदि कोऽपि मां पृच्छेत्, यत् बुद्धि कुत्र योग्यतया विकसिता यया जीवन-सम्बन्धिन्याः समस्यायाः समाधानं कृत तदा कथयिष्यामि ननु भारते। इति॥

एतेनेद सिद्धं यत् संस्कृतस्याध्ययनम् अनुशीलनं कियत् आवश्यकम्। अतो न केवल शिक्षालयेषु स्थानमेव किन्तु प्रोत्सा-नमपि देयमेव।

ये केवलं संस्कृतमेव अभ्यस्यन्ति तैरपि आधुनिकज्ञाना-नामर्जनं कर्तव्यमेव। ससारस्य स्थितिमवलोक्य जीवनोपरि प्रभावं स्थापयतो विज्ञानस्य उपेक्षा न शुभाय। अतः विदुषां कर्तव्य-मिदमस्ति यत् ते किमपि एतत्सम्बन्धि ज्ञानार्जनं कुर्युरेव। इदं च हिन्दीग्रन्थै साधितुं सुकरम्। इदं प्रमोदस्थानम् यत् विज्ञान-सम्बन्धिग्रन्थानां सस्कृतानुवाद प्रचलितः। एवमेव श्रीरामावतार-शर्म महोदयाना परमार्थदर्शन मयाश्रुतं तदतीव प्राच्यपाश्चात्यदर्शन-सम्बन्धिपुस्तकम्। एवमेव श्रीगान्धिमहोदयैरपि उदलेखि इदं

शुभलक्षणम्। मन्ये अद्यापि सन्ति संस्कृतज्ञा विद्वांसः ये आधुनिक-विषयान् देववाणीद्वारा विद्वद्भ्यो दातुं शक्नुवन्ति। आशास्महे यत् प्राचीन वाङ्मयेन सह एष प्रयत्नः अपि चलिष्यति येन रुद्धा वाङ्मयस्य प्रगतिः पुनः अविच्छिन्ना प्रचलिष्यति। येन इतिहासकारः अग्रेऽपि लिखतु यत् संस्कृत-साहित्यम् आधुनिक-विद्याप्रचारे अन्यभाषाभ्यः न्यूनं नासीत्।

---

## संस्कृत-संरक्षणस्यावश्यकता

भारतीया संस्कृतभाषैवैका विद्यते यया वैदिक-कालादिदानीं यावत् निखिलमपि भारतमिदमेकता-सूत्रे सुनिबद्धं वर्तते। यदीयं भाषा नाभविष्यत्तदा भारतवर्षस्य विभिन्न-प्रान्तीया स्त्रियः पुरुषाश्च परस्परं स्वीयानभिप्रायान् प्रकटयितुमसमर्था एवाभविष्यन्। आंग्लानामागमनात्पूर्वं समग्रस्य भारतस्यान्तर्देशीया केवलं संस्कृत-भाषैवासीत्।

भारतं हि बृहत्तरो देशः। एतादृशे विशाले देशे भाषाभेद-स्त्वनिवार्य एवास्ति। तथापि सर्वासां मूलभूता संस्कृतभाषैवेत्यत्र नास्ति सन्देहावसरः। यदि संस्कृत भाषाया अध्ययनाध्यापनं विनश्येत, तदा प्राचीनतमं भारतीयमैक्यसूत्रं निश्चितमेव छिन्नं भिन्नं च भविष्यति कथयिष्यन्ति च जना यद् भारतीया विभिन्ना ज्ञातयो बलादेकीकृताः सन्ति। समस्तमेव राष्ट्रं यामेकां भाषां साकल्येन गृह्णाति, तस्यां विद्यमानायामपि यदि प्रान्तानां भाषा-

भेद-जनितः कल्पितः कलहो भवति, तदा तस्यां तिरोहितायां न जाने किं भविष्यति अतो भारतराष्ट्रस्यैक्य-सम्पादनाय तद्रक्षायै च संस्कृतभाषा-संरक्षणं नितान्तमावश्यकम्। राज्य-प्रशासकानामिदमावश्यकं पवित्रञ्च कर्त्तव्यमस्ति यत्ते संस्कृताध्ययनाध्यापनस्य देशकालोपयोगिनीं समुचितां व्यवस्थां विदधत्विति।

संस्कृतभाषायाः संरक्षणेन न केवलं राष्ट्रस्यैकतैव सुरक्षिता भविष्यति; प्रत्युत भारतीय संस्कृतेरपि संरक्षणं सुतरां भविष्यति।

एतदपि विचारणीयं यत् संस्कृतभाषा-प्रसारे केचन प्रत्यूहा अपि विद्यन्ते। तेषु सर्वप्रथमं संस्कृतसेवकानां दारिद्र्यमस्ति, येन द्रव्यसाधन-प्रधानेऽस्मिन् युगे वयं किमपि कर्तुं न पारयामः। अस्या विपदः प्रतीकाराय केचन त्यागवन्तो विद्वांसः समग्रे भारते पर्यटनमुपदेशादिना धनार्जनप्रयत्नञ्च कुर्युः।

द्वितीयं कारणं संस्कृतज्ञानामालस्यं प्रमादश्च। अस्मात् कारणादेव वयं निरुत्साहिनो दरिद्राश्च सम्पन्नाः। अस्याः विपदः प्रतीकाराय संस्कृतज्ञेषु साहसोत्पादनमत्यावश्यकम्। यावत् संस्कृतज्ञाः स्वात्मनिर्भराः सुदृढाश्च न भविष्यन्ति, तावदन्ये तेषां साहाय्यं न विधास्यन्ति।

जनतायां प्रचाराभावो हि नाम तृतीयं विघ्नं वर्तते। वयं यत् किमपि कुर्महे, तत् केवलं संस्कृतज्ञेष्वेव सीमितं भवति। इत्येदर्थं विभिन्न-भाषापत्रेषु संस्कृत-समाचाराणां प्रकाशन-व्यवस्था नितरामुपयुक्ता भवेदिति।

—महाराजः श्री विभूतिनारायणसिंहदेवः ( काशी नरेश्वरः )

# तृतीयः प्रदीपः

## वर्णनात्मकाः प्रबन्धाः

अवतरणिका —

वर्णनात्मकेषु प्रबन्धेषु वर्णनं भूयान् विचारश्चाल्पीयान् विषयो भवति । न चात्र [illegible] वर्तते । विषया ह्येते प्राय प्रकृति-वस्त्वादिव्यापारादिपदार्थानालम्बन्ते । एते च ग्रन्थस्था क्वापि विस्तृता इह संक्षिप्य निविश्यन्ते । तेऽपि दृष्टा श्रुता वा स्वशेमुषी-बलेन काव्यशैल्योपवर्ण्यन्ते । केचन पर्वतादि-यात्राश्रिता स्वीया परकीया उदन्ता वाऽत्र प्रबध्यन्ते । अत्रापि वृथाविस्तरो न शोभते । यावानेवोदन्तो विषयेण सह सङ्गच्छेत क्षीरे नीर इव भजेदैकरूप्यं तावानेवोपादेय । यथा भित्तिनिर्माणाय प्रवृत्त स्थपति पक्वेष्टिकाभिरामेष्टिका मृल्लेपै रन्यानपि लोष्टादिशकलान संयोजयति नयति चैकरूपतां तथैव प्रबन्धानां वर्णनात्मकानां सयोगोऽपि सारासार-विषयोपचयैरेकरूप एव लक्ष्येत ।

युद्धादिवर्णनासु तिथ्याद्युल्लेखन सत्यं स्यात् । दृष्टान्तस्तु नेहावश्यक । उपसंहारोऽपि प्रसङ्गसंगत एवेह भवति । क्रमस्त्वपेक्ष्यते । क्वापि स्वतन्त्रा विचारा अपि प्रकटिता प्रबन्धयितु कौशलं द्योतयन्ति ।

# उत्तरध्रुवप्रदेशस्य यात्रा

**विमर्श-सारः**—१ उत्तर ध्रुवदेश दुर्गमता। २ हिमार्णवा। ३. पाण्मासिकमह षाण्मासिकी शर्वरी च। ४ स्कीमो जाति।

विचित्रा प्रकृतिलीला। विचित्रञ्च जगत्। अस्मिन् धरातले कुत्र किमस्ति ? कियन्तो द्वीपा महाद्वीपा सिन्धवो महादेशाः प्रदेशाश्चेत्याधुनिके विज्ञानप्रधाने युगे भूगोल-पण्डितैः सम्यक् परिज्ञातम्। किञ्च तथापि सन्ति तादृशा प्रदेशा अपि यत्र न मानवाना सुखेन गतिः। अतस्तेषां विषयेऽद्यापि न किमपि विशिष्य वर्णयितुं शक्यम्। एतादृश एव ध्रुवप्रदेशोऽस्ति। अत्र पाश्चात्यानां साहस-पूर्णानां यात्रिणां केपाञ्चित् यात्रावृत्तान्तमाश्रित्यैव किञ्चन् प्रपञ्चयाम। श्रूयताम्—

उत्तरध्रुवदेश

अस्य भूगोलस्योत्तरीयकोणे स्थितो भाग एव 'उत्तरध्रुव'प्रदेश' इत्यभिधया व्यवह्रियते। मनुष्यनिवास-सनाथानां देशानां 'ग्रीन-लैण्ड' इति देश एवोत्तरध्रुवप्रदेशस्य नेदिष्ठ'। अस्मिन् 'ध्रुवदेशे' भूमेरभाव इव वर्तते। न तत्र शैला न नीरम्। केवलं हिममेव सर्वतस्ततम्। ग्रीनलैण्डात् उत्तरध्रुवमभियियासुभि साहसिकैः पञ्चशतक्रोशमितो हिममयो भागो लभ्यते। अयमेव 'हिमार्णव' इत्युच्यते। न चात्र वनस्पतयो गुल्मा जन्तवो वा भवन्ति। हिम-

१. उत्तरध्रुवप्रदेश—उत्तरकुरु-नाम्ना पुराणेषु प्रसिद्ध। अस्यैवोपान्ते सुमेरु।

भागोऽपि न समस्तादन्न नितान्तमुन्नुद्धात[1]। सहस्रदण्ड[2]मितं हिमभागमधोऽपि न भूमिर्दृश्यते। अत्र शैत्य तीव्रतम भवति। ऋतुताप[3]मापकस्य पारदबिन्दु सान्द्रीभवन[4]बिन्दोरपि दशाशान् पञ्चपञ्चाशदशं यावदवतरति। कृत्तिल मदिरापि शैत्येन सान्द्रीभवत। निश्वासवायुरपि दशनच्छदयो[5] रुपरि स्त्यायते[6]। नात्र जलधरस्य धारा न गर्जन न वा विद्युत एव। अत्र ग्रीष्मर्तौ द्विपञ्चाशदंशमितैव तापस्य परमा सीमा। सा चास्माक देशे पौषमाघयो र्महति शैत्ये भवति।

अथ वैचित्र्यमिदमस्य देशस्य—अत्र सकलेऽपि सवत्सरे षण्मासव्यापिनी निशा षण्मासव्यापी च दिवसो भवति। एकमेवाहोरात्रमेकस्मिन वर्ष इति तात्पर्यम। अत्रा-वार्षिकमहोरात्रम् श्वयुजो मासस्य अष्टमे दिवसे[7] सविताऽस्तमयते चैत्र मासस्य च अष्टमे दिवसे[8] पुनरुदेति। एवं भाद्रपदस्य समस्ते मासि प्रदोषस्य फाल्गुण मासि च सकल उषसो वेला भवति। सार्धमासत्रयं तु निबिडं तम सर्वत्र व्याप्तं क्षणदाया यामत्रयी द्योतयतीव। प्रतिमासं केवल दशवारं द्वादशवारमेव वा चन्द्रो दृश्यते। एतेषु दिवसेष्वस्येषत्कलानां ह्रासो वृद्धिश्च दृश्यते। कदाचन चन्द्रमसमभित परिधयो जातुचन शुक्रचापा अपि समवलोक्यन्ते। कदा-

---

१. उच्चावच.। २ गज। ३ बैरोमीटर। ४ Freezing point। ५. ओष्ठयो। ६ सान्द्रीभवति 'स्त्यै ष्ट्यै शब्दसघातयो-रित्यस्य रूपम्। ७. २३ सितम्बर। ८ २१ मार्च।

चित्तु सप्राष्टौ वा शशिनो दरीदृश्यन्ते युगपदेव। चन्द्रमरीचीनां हिमानीषु वक्रतया प्रक्षेपेणामीषामलीकचन्द्राणामुत्पत्तिः। एव चात्र वर्षे शिशिरनिदाघौ द्वावेव ऋतू भवत । अश्वयुजश्चैत्रं यावत् अन्ध-तमसावृत शिशिरस्ततो निदाघ. प्रकाशमय । अत्र दिशामपि ज्ञान न भवति । क्रोशानभिक्रान्तानां हिमानीनां प्रस्तरादपि कठिना. सानव इव भागा । अत्र हिमस्य साम्राज्ये हिमगर्भानां भीषणा उत्पाता भवन्ति ।

उत्तरध्रुवप्रदेशाभिप्रयाण नातीवकठिनमुताऽसम्भवप्रायमपि । परं पाश्चात्याः केचन साहसिका उत्तरध्रुवदेश प्रापु । तेषु कतिपये ततो न प्रत्याजग्मुः । ते तु सपरिकरास्तत्रैव क्वापि हिमसम्पाते पञ्चत्वं याता । ये केचन ततो विनिवृत्य सद्म प्राप्तास्तेषां तु अमेरिकाया. 'पीरी' नामैको महान् साहसिकोऽस्ति । स एवोत्तर-ध्रुवप्रदेशे स्वदेशस्य ध्वजां निचखान । अस्य यात्रोदन्तमाश्रित्या-धुना कतिपयेऽन्ये साहसिका ध्रुवप्रदेशं जिगमिषवस्तत्र प्रागनु-वन्ति ।

अभियानम्

उत्तरध्रुवप्रदेशे प्रकाशमये निदाघकाले क्वचन हिमभागा द्रुता सागरायन्ते सलिलपूर्णाः । अतस्तस्मिन् काले तत्र प्रयाणं न वरम् । शीतकाल एव यात्रा विधीयते । उत्तरध्रुवमभियियासवः पोतेन ग्रीनलैण्डं समागच्छन्ति । तत' कियन्तमपि वर्त्मानि पुनरपि पोतेनैवातिक्रामन्ते । ततोऽतिक्रम्य 'स्कीमो' इत्याख्यायास्तदुपकण्ठ-वासिन्या जातेर्जनानां साहाय्यमपेक्ष्यते । ते हि मार्गज्ञास्तस्मिन्

प्रदेशे प्राणानन्धारणोपायान् वेद्मि । यात्रिणो लोमाभिः पशुकृत्तिभिः[1] सर्वमेव शरीरं प्राय इव समावृत्य हरितकाचमयमुपनेत्रमाधायो-ष्णाचरणो प्रचलन्ति । बलवत्तमोऽपि यात्री पञ्चगव्यूत्यधिकं न चलितुं पारयति प्रत्यहम् । अत्र हि घटीयन्त्रेणैव अह्नो निशायाश्च समयान् कलयन्तो यात्रिणः सायमवसरे (स्वदेशवर्तिनि) विश्राम्यन्ति । विश्रामावासाश्च हिमखण्डोत्कीर्यन्ते । क्वचन बृहद्बिलानुरूपा क्वापि गुहाकारा । एतेष्वेवावासेषु मृत्तैलं सुरां[2] वा प्रज्वाल्य पाचनानलं क्वाथ्यते देहश्चोष्णीक्रियते । भोज्यद्रव्याणि चात्र स्त्यानीकृतं दुग्धं, भर्जितमामिषं, कन्दुकापूपा[3] चायपानकञ्चेत्येतान्येवोपयुज्यन्ते । कादम्बरी[4] चात्र न हितकरी ।

भोज्यादिसम्भारसम्भृतस्य भारस्य वहनं न नरैः सुशकम् । भारस्त्वत्र हिमप्रचारैः शकटैर्नीयते । इमे च हिमशकटाः सारमेयैर्वाह्यन्ते । सारमेया एते 'राण्डीयर' नाम्ना ख्याता नैते साधारणाः श्वान इव । हिमस्थलीषु द्रुतगतयो भवन्ति । शुनां भक्षणायाऽपि पल-लमेव तत्र नीयते ।

उत्तरध्रुवदेशाभियानं न सुक्षेमकरम् । अस्य प्रदेशस्य वर्णन-यैव भीषणत्वं प्रतीयते । कदाचन हिमार्णवा यात्राया भयङ्करता द्रवन्ति क्वापि येन यात्रिणोऽग्रे पश्चाद्वा चलितुमपारयन्तस्तत्रैव तिष्ठन्ति । हिमका-ठिन्यं प्रतीक्षमाणानां तेषां भोज्यानि पेयानि वा द्रव्याणि क्षीयन्ते, येन तत्रैवोपरमन्ते ते । कदाचन क्वापि तलोर्ध्वभागे नातिकठिनं

---

१. चर्मभिः । २. स्पिरिट (Spirit) । ३. बिस्कुट । ४ मदिरा ।

हिममधस्तादगाधोर्णव । तस्मिन् ईषत्मान्द्रे हिमे पद न्यस्यन्तो गम्भीरजले ब्रुडन्ति । कदाचन च हिमखण्डाभिर्यात्रिणोऽभिहन्यन्ते । नीलोपनेत्रं यदि त्रुट्येत् न स्यादन्यत्तदापि तद्विना तत्र नयनयो रान्ध्य जायते न च पदमपि प्रचलेन्मानव । केऽपि प्रकाम्यन्त प्रबलेन शीतेनाभिभूता मरुता जवेनाहन्यमानास्त्वरिततर चलन्ति । तदानीं तेषा नासापुटेभ्योऽसृक् स्रवति कदाचित् । कदाचिच्च द्रुत-गत्येपदी एव नुभवन्न श्रान्ततमास्ते सुषुप्सामनुभवन्ति । यदि ते तत्र स्वपेरन् तदा हृद्गतिनिरोधेन म्रियन्ते । ताराणां मन्दद्युतिमय. प्रकाशोऽपि भीम एव तत्र । ताराप्रभाभि शशिनो ज्योत्स्नया च सहचरिता यात्रिणोऽञ्जसैव समुत्थितेन निविडनीहारेण समावृताः पथभ्रष्टा अपि भवन्ति । एव मिथो विदूरीभूतास्तेऽभ्रविलायमिव लीयन्ते तत्रैव । एवमीदृशी भीमताऽस्य मार्गस्य । पर धन्यतमास्ते पतान्या मान्याश्च मानवपुङ्गवा साहसिकवरिष्ठा ये खल्वीदृशं भीष्म भीमतम च प्रदेशं प्रतियान्ति तृणाय स्वासून् गणयन्तः । विशिष्य च ते वीरवरा ये ततो जीवन्त एव यात्रां समाप्य प्रत्या-गच्छन्ति । धन्यं तेषां बलम् । धन्य साहस ।

उत्तरध्रुवदेशयात्रिणां सखी 'स्कीमो' नाम मानवानां जातिः । इयं हि ग्रीनलैण्डादनतिदूरवर्तिनि परमुत्तर-ध्रुवप्रदेशान्नाति दविष्ठे हिममये लोके निवसति । स्कीमो जाते मानवस्त्वाकृत्या

स्कीमो जाति

न सुन्दरो वर्णेन च नातिगौरो मगोलजाति-मानवतुल्य । असभ्य-

तमेयं जाति । क्रव्यमेव[1] खादन्ते, कृत्तिमेव वस्ते[2] । शिशिरे मृद्-शर्मा-नर्मवनानि निर्माय तेष्वेवोषन्ते । निदाघे च सीलमत्स्यकमीनानां चर्मणा निर्मितेषु पटभवनेषु निवसन्ति । ग्रीनलैण्डे कस्तूरीवृषाख्यो[3] भवत्येको जन्तु । स्कीमो नरोऽस्य श्वेतऋक्षस्य शशिनो हरिणस्य चाखेट करोत्येतेषां सिन्धुचारिणा वालरसह्वेलजन्तूनामपि पललेन जीवति । स्वसारमेयेभ्योऽप्यमीषामेव पलल भक्षणाय ददाति । नास्या जाते कोऽपि धर्म । परं भूतप्रेतपिशाचेष्वेतेषा मानवानां महत्यास्था । बिभ्यति चैतेभ्यो बलोरप्युपाहरन्ति भियैव । परिधानान्तरं धारयन्त पुराणपरिधान शतश खण्डैर्विभज्य प्रक्षिपन्ति भूतादीनाञ्च वासो मा भूदिति भिया । अनयै भियाभिभूतास्ते गृहान्निर्गत्य तस्य कुटीरस्य द्वार सकपाट त्रोटयन्ति । कुटीरे कक्षां[4] परिस्तीर्य तिष्ठन्ति । सीलमीनचर्मैव कक्षोपस्तृतं तेषा शय्या । मृदुप्रस्तरेणैकेन दीपकं रचयन्ति । वसां मेदश्च तैलस्थाने प्रकाशाय दीपेषु प्रयुञ्जते । एष मेद स्नेहप्रज्वलितो दीपस्तेषां शैत्यमपि किञ्चिद्वारयति । स्कीमोनरश्चिरं नैकस्मिन् स्थाने निवसति । अटाट्याशीलो हि स । नार्यस्तु वृतं पतिमुज्झित्वा पत्यन्तरमपि यान्ति । नरा अपि तथा । नात्र कोऽपि बन्धो नियमो वा । चेदेकस्यामेव नार्यां द्वयो प्रीतिः स्यात्तदा मल्लयुद्धेनैव तयो प्रियालाभ । द्वादशहायनदेशीयानां प्रायो दारिकाणां विवाहो भवति । अमी हि मृतान् भूगर्ते निखनन्ति । मृतानां वसनादीनि कदाचिच्च तेषा प्रियतमान् सारमेयादीनपि जीवत एव खण्डयित्वा मृतैः सह

---

१ मांसम् २. आच्छादयति ३ Muskoxen ४ शुष्कघासम् ।

त्यजन्ति। क्वापि पञ्चत्वमाप्ताभिर्वनिताभिः सहैव तासां स्तनधयानपि प्रियाणि चान्यानि वसनादिद्रव्याण्यपि भूगर्ते स्थापयन्ति। एषां भाषाऽपि विचित्रा। सभ्यलोकभाषाया विभिद्यतेतमामेषा। एवमेष स्कीमो मानवस्योदन्त।

---

## कैलास-मानसयात्रा

विमर्शसारः—१ उपक्रमः। २ दुर्गममार्ग। ३ प्रकृतिरमणीयता। ४ सिद्धभूमय। ५ यात्रासाधनानि।

नगाधिराजस्य तुहिनाचलस्य कुक्षौ सिद्धकिन्नरजुष्टा योगिगणैः परिसेविता बहवो भागा समुल्लसन्ति यत्र मानवानां न सुगमः सक्रम। एतेषु बहवो निगमागमवर्णिता प्रसिद्धा एव। किञ्च ज्ञातनामानोऽपि ते 'कुत्र स्थिता कीदृशाश्चेति' सविशेषं न सर्वैर्ज्ञायन्ते। मानसः कैलासश्चैतादृशावेव भागौ भूतले। अत्र एतयोरेव वर्णनां यात्राञ्चाधिकृत्य किञ्चिद्वर्णयामः।

उपक्रम

मानसः कैलासश्चार्यग्रन्थेषु पवित्रौ तीर्थभूतौ च प्रदेशौ गण्येते। धनदस्य दिशायां मानदण्डवद्विस्तृतस्य हिमवत पार्श्वे स्थितावेतौ भारतत्रिविष्टपयो[1] सन्धिभागे। अत एव भारतीयाः त्रिविष्टपदेशीयाः चैतौ स्वदेशान्तर्गतावेवाकलयन्ति। भौगोलिकास्तु हिम-

भूगोले स्थिति

---

१ तिब्बत।

दन एवैकं परिविस्मृत भाग कैलासं वदन्ति। किञ्चार्य-ग्रन्थेष्वस्य इत्थमेवोल्लेख।

कम्-जलम्[१], इला-भूमि, एतयोरास -उपवेशनस्थानम्= कैलास'। एवमिय व्युत्पत्ति कैलासपदस्य। धवलगिरि सितगिरि इत्याद्यभिधानमस्यैव तावत्। समुद्रतलादयं

कैलास

शैलः प्रायो विंशतिसहस्रफुटमितोच्चे भुवो भागे स्थित। अस्य कियत्युच्चता सागर-तलादिति न विदितम्। परं भूगोलवेत्तारस्तु हिमाचलस्य गौरीशि-खरश्रृङ्गादेनं[२] नात्युच्चतर मन्यन्ते। कैलासस्यानल्पा शृगा। एते हि सर्वदा हिमसंवृता रजतजटिता इव भवन्ति। अत एवास्य सित-गिरि-रित्यभिधा। दूरत परिवीक्षणेनासौ गिरि शिवलिंगाकारो दृश्यते। इदञ्चोच्यते— भगवान शिवस्तुषारगिरितनया-सनाथो नन्दीप्रमुखै प्रमथै परिवारित सदैव शैलममुमधितिष्ठति। सिद्धकिन्नरादिवृन्दा-रकाणां वृन्दास्तत्रैव समर्चन्ति। अत एवार्येष्वस्मिन् महती श्रद्धा तीर्थबुद्धिश्च। संस्कृतकाव्येषु महाकविमंखविरचित-श्रीकण्ठचरिते कैलासस्य वर्णना सविस्तरं लभ्यते—तथाहि तत्र—

'शशिशुभ्रा किरन् भासो हासो धनपतेर्दिश'।
गिरिरस्तीह कैलासो निवासो वृषलक्ष्मण.॥"

इति प्रथमं पद्यम्। महाकविना कालिदासेनाऽपि मेघदूते—

'गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासित प्रस्थसन्धे'
कैलासस्य त्रिदशवनिता-दर्पणस्यातिथि स्या।

---

१. श्रीकण्ठचरितस्य जोनराजकृतटीकायाम्। २. माउण्टऐवरेस्ट। गिरिराजशिखराभिधाऽधुना।

शृंगोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥'

इति कैलासो वर्णितः ।

मानसं सरोऽपि कैलासोपकण्ठे परिविस्तृतं, बृहत्तमं सरः भारते । अस्य परिधिभागस्तु त्रिंशत्क्रोशमितः, केचित्केचिच्च चत्वारिंशत्क्रोशमितं इति कथयन्ति । सागरतलादयं महाकासारोऽष्टनवत्यधिकपञ्चदश सहस्रफुट-

मानसरम्

मितोच्चे भूभागे स्थितः । अस्य गम्भीरताऽष्टपष्ट्युत्तर शतद्वयफुटदघ्ना । शिशिरेऽस्योपरि सार्धद्वयवितस्ति[1] मितं स्थूलं घनीभूतं हिमं विततं वर्तते । अस्यैव सरसो नातिदूरे दक्षिणतः 'रावणहृद' इत्येको लघुकासारः । मानसस्य दर्पण-निर्मलं नीलनीलं पयो नितान्तं शीतम् । अस्मिन् हंसा अपि कदाचन सन्तरन्त उड्डीयमानाश्च दृश्यन्ते । आर्यग्रन्थेषु मानसस्य वर्णनामधिकृत्योक्तम्—

'कैलासपर्वते राम मनसा निर्मितं परम् ।
ब्रह्मणा नरशार्दूल ! तेनेदं मानसं सरः ॥'
(वाल्मीकीये रामायणे बा. का २४ स.)

'कैलासाद्दक्षिणे पार्श्वे क्रूरसत्त्वौषधं गिरिम् ।
वृत्रकायात् किलोत्पन्नमञ्जनं त्रिककुत् प्रति ॥
सर्वधातुमयस्तत्र सुमहान् वैद्युतो गिरिः ।
तस्य पादे सरः पुण्यं मानसं सिद्धसेवितम् ॥'
( वायुपुराणे ४७ अ०, मत्स्यपुराणे १२१ अ० )

---

१. वितस्तिर्द्वादशांगुलम् ।

मानसे स्वर्णकमलानि कल्हारकुसुमान्यपि समुत्पद्यन्ते' इति शिष्टा आमनन्ति । अत एव—

'हेमाम्भोजप्रसवि सलिलं निर्मलं मानसस्य' इति

महाकवि कालिदासोऽपि जगौ । अस्मादेव सरसो ब्रह्मपुत्र-नदस्य शतद्रु सिन्धुसरितो प्रभव इति भौगोलिका । जाह्नव्या अपीदमेव मूलप्रभवस्थानमित्यपि केचित् । त्रैविष्टपास्तु मानस 'सोमा वाग' इति समामनन्ति । ते चास्य तीर्थभावनया प्रदक्षिण-मपि कुर्वन्ति ।

कुबेरनगरी

अलकानाम कुबेरपुरी । आर्यग्रन्थेषु तस्या कैलासमानसोपकण्ठ एव स्थितिर्वर्णिता । तथाहि महाभारते पश्यामो यद् यदा बदरिकाश्रमे कृतस्थितय सदारा पाण्डवा बभूवुस्तदैकदा वायुनानीतं स्वर्णवर्णं सौगन्धिकमेक कमल दृष्ट्वा द्रौपदी तादृशमेव द्वितीय-मपि चकमे । तदभिलपित पिपूरयिषु भीमश्च सौगन्धिकमानेतु प्रतस्थे । स च कैलासमानसाध्वनैवालकां प्राप । तथाहि—

'कैलासभवनाभ्यासे ददर्श शुभकाननाम् ।
कुबेरभवनाभ्यासे जातां पर्वतनिर्झरे ॥' इति
तत्रामृतरस शीतं लघु कुन्तीसुत पिबन् ।
ददर्श विमल तोय पिबंश्च बहु पाण्डव ॥'

( वनपर्वणि १५३ अ० )

मेघदूतेऽपि मेघाय मार्गं शसन् यक्ष कैलासमानसयोरत्यन्ताभ्यास एवालकां वर्णयति ।

पर क्वेयमधुनाऽलकानाम पुरीति नात्र कोऽपि वक्तुं क्षम: किमपि। न च लौकिकेषु मानवेषु तत्र कोऽपि प्राप्त: । दिव्या हि सा पुरी। दिव्याश्च तदुपकण्ठगता भूमय: । न तत्र मानवानां सञ्चार.। अत एव महाभारते—

'अस्यातिक्रम्य शिखरं कैलासस्य युधिष्ठिर।

गति: परमसिद्धानां देवर्षीणां प्रकाशते ॥' (वनपर्वणि १५६)

इति तत्र सिद्धमहर्षिदेवानामेव गतिरुक्ता।

महाबाहुर्भीमपराक्रमो युधिष्ठिरोऽपि ससोदरदारस्तत्र यियासुर्न्यवार्यतालक्ष्येण केनापि—

'न चाप्यत: परं शक्यं गन्तुं भरतसत्तम।

विहारो ह्यत्र देवानाममानुषगतिरनु स्मा ॥' इति वदता।

त्रिविष्टपे धर्मगुरवो 'लामा' इत्युच्यन्ते। कैलासस्य कतिचित् कन्दरासु बहवो वर्षीयांसो लामाजना निवसन्ति। सोमौषधिप्रभावेण तप:प्रभावेण चैतेषां बहव: पञ्चशतवर्षवयस्का अपि लभ्यन्ते। मानसमभितोऽमीषां धर्मगुरूणां गुहासु निर्मिता आश्रमा मठाश्च। एतेषु प्रस्तरकाष्ठरीति[1] निर्मिता सौगतप्रतिमा भवन्ति। एता ह्येते प्रतिदिनमर्चन्ति। क्वापि प्राचीनानि दुर्लभानि पुस्तकान्यपि भवन्ति। तत्रैतेषां मठेषु 'यांगू, टोगू, गोसल, चिऊ, इति नामानो मठा प्रसिद्धा:। केचन लामागुरवो यात्रिण: सम्भावयन्तस्तेभ्यो दक्षिणा याचन्ते नैवेद्यमपि प्रयच्छन्ति। त्रैविष्टपा: 'भोट' इति

लामालोक.

---

१. पित्तलम्।

प्रसिद्धं मानसं कैलासञ्चातिपूतं तीर्थं मन्वाना भारतीया आर्या इवैतयोः श्रद्धालवो भवन्ति। तेषामपि धर्मभावना न विसवदत्यार्य-धर्मेण।

परं त्रैविष्टपा एते मद्यपायिनोऽशिक्षिता मलिनाश्च भवन्तीत्येष महानेतेषु दोषः।

यूरोपाभिजन एवेनहेडनो नामैको महाभाग कैलासमानसयोः सविधे बहुमासानवात्सीत्। मानससर

यूरोपीयो यात्री सौन्दर्येणाभिकृष्ट स उज्जगार—

"अह कौतूहलेन विस्मयेन च पूर्णानि दिव्यस्यास्य मानसस्य महासरसो दृश्यानि निरीक्षमाण सदा निरुद्वेगमत्रैव वसितुं समर्थोऽत्र मे मृत्युरपि ज्यायान्।"

असौ रसिक एवामूनविगणयन् दृढपटनिर्मितां तरणिमारुह्य मानसजले मासं विजहार शतद्रुसिन्धुब्रह्मपुत्राणां प्रभवं दिव्याश्चौष-धी सुगूढाश्च गुहा जिज्ञासुः। दिव्यस्य मानसस्य रमणीयतया चकित स एवं निजगाद—

"हं हो! विस्मयकारिन्! दिव्यकासार! नीहाराणां करकाणां रङ्गपरिणतीनां च लीलाक्षेत्र! पवित्रतम! तडागवर! जम्बूद्वीपस्य[१] केन्द्र! त्वं पर्वतश्रेणीभिः परिवारितोऽसि, शतद्रुसिन्धुब्रह्मपुत्राणां प्रभवोऽसि!" इति।

मानसकैलासयोर्वर्णनामाश्रित्य पर्याप्तं प्रपञ्चितमधुना ताव-द्यात्रामार्गं वर्णयाम। भारतीयास्तु 'अल्मोडामार्गेण कैलासं यान्ति।

१ एशिया।

यात्रा मार्ग

अल्मोडानगरात् कैलासं यावत् सार्धशत-क्रोशमितोऽध्वाऽस्ति। मासद्वयमितेन समयेन यात्रा समाप्यते। सन्ति गिरय एव प्राय, क्वचन सरलदेवदार्वादितरुभिरावृता क्वापि नग्ना। उच्चतरा-शिखरिणस्तुषारावृता। समस्थलानामभाव एव मार्गे। प्रवहन्ति झरझरस्वना स्वादुतोया उत्सा[1]। कालीनाम्नैका गिरिनिर्झरिणी नितान्तमगाधा समुच्छलन्ती भीषणस्वना चण्डीव प्रवहति घोरवेगा। अस्याः तटेनैव प्रचुरोऽध्वा वर्तते कैलासगामी। अल्मोडानगरात् कैलास यावत् मार्गे मुख्यस्थानानि सन्तीमानि—

(१) धारचूला (२) तपोवनम् (३) गर्बियांग (४) तकलाकोट (५) मानससर।

सन्ति धारचूलातस्तकलाकोट यावदध्वनि बहवो ग्रामा ग्रामटिका श्चावल्याः। अत्र पथिकानां विश्रामाय तपोवन एवैको धर्मावसथ। यात्रिणस्तु क्वचन गृहिणामेव कुटीरे क्वापि पटभवनेषु निशा-मूषन्ति। हट्टा अपि सन्त्येवमार्गे येषु तण्डुलमसूरपलाण्डु-आलुक सितोपलाप्रधानान्येव द्रव्याणि लभ्यन्ते। घृततैलेऽपि मिलतः। दुग्धं विरलतयैव लभ्यते। क्वचन पत्रव्यवस्थालया[2] अपि प्रतिष्ठापिता।

तकलाकोटादूर्ध्वं न मानुषसंपातः प्रायः। न ग्रामटिकाः। न वा परस्य[3]। यात्रिणोऽनावृतेषु स्थलेषु क्वचन पटभवनेषु च वासं वासं मार्गं प्रक्रामन्ते। नात्र जन्तवो न वीरुधस्तरुगुल्मा एव वा। त्रिविष्टपं गच्छन्तस्ततो निवर्तमाना वा केऽपि वणिजो ऽवीनामजाना

---

१. निर्झरा। २ डाकखाना। ३ लघुगृहाः।

च यूथं वाहयन्तो लभ्यन्ते कदाचन।

अस्मिन् दुर्गमे कैलासपथे प्रकृतिकामिनी स्मयमानेव सुषमया, नीलनिचूले समवेतेव हरिताभिः स्थलीभिः, रत्नजटितेव तुहिनसानुभिः प्रतिपदं यात्रिणां मनो बलवदाकर्षति। गम्भीरनीरा सरयूरपि दशरथनन्दन-निवासपवित्राम् अयोध्यापुरीं द्रष्टुं सोत्सुकेव क्वापि गह्वरेभ्य उच्छलन्ती, क्वचन सर्जसालसरलतरून् पातयन्ती, क्वापि निर्झरनिर्झरिणीं चिरप्रोषिता स्वसेव समालिगन्ती प्रवहति। इत्थमेव भीमदर्शना काली कूलंकषाऽपि[1] प्रवहति।

परं बहुषु स्थानेषु यात्रिणो पानीयार्थमपि कष्टानि भजन्ते। सन्ति तावत्प्रतरणानि सर्वत्र। किञ्च कदाचन जलवेगेन तान्यपनीयन्ते तदा रज्जुप्रतरणेन यात्रिण सन्तरन्ति सरितो मार्गान्तरेण वा यान्ति।

कैलासयात्राया भारोऽश्वैरश्वतरीभिः पर्वतीयनरैर्वा वाह्यते। कोमलकाया निर्बला वा वनितादयो वाजिभिर्नीयन्ते। क्वचन लघुशिविकाभि[2] नरैरेव वाह्यन्ते। परं तकलाकोटादनन्तरं यावन्मानसं नार्वद्भिरश्वतरीभिर्वा सुगमः पन्थाः। तत्र चमर्य एवैतदर्थं शरणम्। नरा अपि मन्दक्रमास्ता एवाध्यारुह्य व्रजन्ति।

ज्येष्ठाषाढयोः कैलासयात्रा सुगमा भवति। अतो यात्रिण एतयोरेव मासयोस्तत्र यान्ति।

यद्यप्युत्तरीयध्रुवदेशा यात्रा न दुर्गमा जीवनसंशयकारिणी वा, तथापि 'सहिष्णुता, दृढकाय', मनःस्थैर्यं, प्रचुरं धनम्' इत्येते

---

१. नदी। २. पालकी।

नितान्तमपेक्ष्यन्ते । "इत. पञ्चविंशतिहायनाभ्यन्तरे वाष्पशकटेन[1] वाष्पयानैर्वा[2] यात्रिण कैलासमभिव्रजेरन् ।" इति कथनमपि नातिशयोक्तिपूर्णं स्यात् ।

---

## वाचालं चल-चित्रम्

**विमर्शसार:**—१. उपक्रम. । २ मूकचित्राणि । ३. मनोविनोद: । ४ शिक्षासाधन बलवत् । ५ भारतीयचित्रपटा ।

आधुनिके विज्ञानयुगे विमानध्वनिवाहकयन्त्रादीनां विस्मयकराणां पदार्थानामाविष्कारैर्वसुधा सर्वेषां प्रांगणभूतेव लक्ष्यते ।

उपक्रमः

पारेऽर्णवस्थानां देशानामुदन्ता स्वसद्मसु समासीना एव शृणुम । अनेकसहस्रक्रोशादूरस्थान् देशान् द्वित्रिभिरेवाहोभिर्विमानैर्याम: । युद्धोपयोगिनो ध्वंसकरा आविष्कारा अपि नाश्चर्यरहिता । विज्ञानस्याविष्काराणा वाचालं चलचित्रमप्येकं प्रधानं पदमध्यास्ते । अत्र वय चलचित्रस्याविष्कार-यन्त्रादीतिहासमस्पृशन्तोऽस्य गुणदोषमयीं वर्णनामधिकृत्यैव किञ्चिद्भणामः ।

विक्रमवत्सरे षट्चत्वारिंशदुत्तरैकोनविंशतिशत तमे (१९४६) ऽब्देऽमेरिकायां श्रीमान् एडिसन-महोदय: चित्रकलासु निपुणं निरी-

---

१ रेल । २. मोटर ।

प्रागुदन्त.

ज्ञनाणो मूकं सचेष्टं च चित्रमाविश्चकार । तत्र-
त्यास्तु कौतुकिनो निःशब्दान्यपि इमानि चित्रा-
णि भृशं प्रशशंसुः । अथ किञ्चित्काला-
भ्यन्तर एव आश्चर्यकराणि सचेष्टमूकचित्राणि प्रासरन् । भारते
च नन्दरसग्रहशशिमिते (१९६९) वैक्रमवत्सरे प्रथमो मूकचित्रपटो
निरमीयत । अथामेरिकायां प्रथमरामण्यमहाहवानन्तरमेव वैज्ञानिकै-
र्जनिमहचरितानि वाचाल-चलचित्राण्याविष्कृतानि । ततोऽत्रापि
भारते खवसुनन्दैकमिते (१९८०) विक्रमहायने प्रथमं वाचालं चल-
चित्रं विनिर्मितम् । अथ शनैः शनैः प्रायः प्रतिमहापत्तनं प्रतिनगरञ्च
चलचित्राणां सगीतानि समश्रूयन्त । वृद्धा युवानो बालकाः सर्व एव
सकौतुकं वाचाल-चलचित्राणि द्रष्टुं प्रारेभिरे ।

विनोदभूमि

चलचित्रं हि मानवानां महती विनोदभूमिः । इतः पूर्वं नाट-
कानां प्राधान्यमवर्तत । परमेतदर्थं नटानां नटीनां समाजस्य संयो-
जनं, नाट्यभवनानां निर्माणं, नटनट्योर-
भिनयशिक्षणम् , महता जनसम्मर्देन सार्धं
प्रतिपुरं भ्रमणमित्यादयः सम्भारा अपेक्षिता
अभूवन् । तथापि न चलचित्रवत्तत्राग्निदाह-विमानवाष्पशकट
प्रयाणादीनां दृश्यानां सम्भवोऽभूत् । रंगप्रेक्षणाय महतीभाटी[1]
निर्धारिताऽसीत् । न च सर्वे जनास्तत्प्रदानाय क्षमा आसन् । अत
एतैर्हेतुभिश्चलचित्रं श्रमिणां चिन्तातुराणां कौतुकिनाञ्च कृते
सञ्जीवनौषधमिव प्रादुरभूत् । बृहत्सु यन्त्रभवनेषु[2] महत्सूद्योगा-
गारेषु[3] दिनं परिश्राम्यन्तः कामयन्त एव कमपि मनोविनोदम् । न

१. प्रेक्षणामूल्यम् । २ मिल । ३. फैक्टरी ।

च मनुष्टयै कल्पन्ते। एवं शिक्षां विनोदमित्युभयमपि प्रयच्छदिदं वाचालं चलचित्रं 'आम्राश्च सिक्ताः पितरश्च प्रीणिताः' इति न्यायेन परममुपयोगि।

**भारतीयाश्चित्रपटाः**

इह तावदस्माकं देशे धर्मेतिहास-कृषिसमाजस्वास्थ्यशिक्षा-पराणां चित्रपटानां नितरामभाव एव। अत्र तु स्तोका एव चित्रपटनिर्मातारो ये स्वजाति-देशयो र्हितमनुरुध्य चित्रपटान् रचयन्ति। भारतीयेषु 'निर्मितचित्रपटेषु' रामराज्य, भरतमिलाप, कादम्बरी, सन्त तुलसीदास, दुनिया न माने, इत्यादयोऽङ्गुलिगणनीया एव चित्रपटाः कलां शिक्षां चावलम्ब्य प्रशस्ता इति वक्तुं शक्यन्ते। अत्रत्येषु चित्र-पटेषु शृंगारपूर्णानाम् अप्रशस्तानामशिष्टानाञ्च भावानां बाहुल्यं वर्तते येन साधारणो जनः स्वं चरित्रमपि रक्षितुं न पारयति। इह न तावत्कमपि चित्रपटनिर्मातारमधिक्षिपामो यतो न कोऽप्येतेष्ववदातं पदमधिकर्तुमर्हति साकल्येन तथाप्येतावत् कथयामो यद् धनोपा-र्जनमेव चरममेकञ्च ध्येयं मत्वा सन्ति बहवश्चित्रपटरचयितारो ये खलु नितान्तमशिष्टगर्भान् अश्लीलश्लिष्टान् चित्रपटान् रचयन्तोऽ-न्धतमस्येव पातयन्ति स्वदेशम्।

# भारतस्य राजधानी

**विमर्शसारः**—१ प्राचीनवैभवम्। २ विशालता। ३. राज्यकार्यालयानामाधिक्यम्। ४. दर्शनीय स्थानानि। ५ कौतुकानि।

भारतवर्षस्य राजधानी सर्वस्मिन्नेव वसुधातले 'दिल्लीति' नाम्ना 'देहली' नाम्ना च विश्रुता। नगरीय क्षिति-

संज्ञा

मण्डलस्य विशालासु नगरीषु गण्यते। भारते चैषा मुम्बापुरीकलिकातानगर्योरनन्तरं बृहत्तमा पुरी। किञ्च सकलाया भारतवसुन्धराया राजधानी गौरवमादधानेयं प्रशस्ततम पदमाटीकते। प्राचीनभारते नगरीयमिन्द्रप्रस्थेति नाम्ना हस्तिनापुरमिति नाम्ना च ख्याताऽऽसीत्। देहलीति नाम यवनकालसम्भवमिति प्रतीयते। यतो ह्येषा नगरी भारतस्य मध्ये स्थिताऽतो गृहावगृहिणीव समस्तस्योत्तरीयभारतस्य चकास्ति। अत एव देहलीत्वेन देहली दिल्ली च ख्याति जगाम। किञ्चेन्द्रप्रस्थमित्यभिधानमप्यस्या एव नगर्या अभवत्। पाण्डवानां काले हस्तिनापुरमिति यदभवन्नगरम्, तद्वर्तमान देहली नगर्या दूर एव क्वाप्यवर्तत। कालगत्या च ततोऽनतिदूर एव भारतस्य राजधानी प्रसारं लेभे, नामान्तरेणाऽपि समकीर्त्यत।

भूमण्डलस्याखिलेष्वपि प्रदेशेषु स्युर्नाम विरलविरला एव ता नगर्यो या अतिपुराणकालादेव राजधानी-

पुराणनगरी

पद लेभिरे। इय हि देहली नगरी प्राचीना। भरतवंश्यानां महीपालानामासीदेषा राजधानी। ततो यवनकाल यावद्बहूनां राजवंश्यानामसौ नगरी राजधानी

अभूत्। मुगलवंशीयानामपि केषाञ्चिदसावेव राजधानी। आंगलाना शासनकालेऽपि समरते देहल्येव भारतस्य राजधानी सौभाग्यं भेजे। अथाधुना स्वतन्त्रस्य भारतीय-गणराज्यस्यापीयमेव नगरी राजधानीपदमलङ्करोति। अतोऽस्ति तावदस्या नगर्या किमपि प्राधान्यमिति। इहाभिनवगौरवोपेतं पुराणनवीनतामिश्रितं यन्त्रनां विशिनष्टि भारतस्यान्याभ्यो नगरीभ्य।

भारतस्य राजधानी देहली यमुनाकूले परिविस्तृता सप्तकोशमितभूभागमाक्रम्यावतिष्ठते। अत्र कालिन्दी

नगरी वर्णना

पुलिने रचितं लौहं प्रतरणद्वयम्। एक रेलयानोपयोगीतरच्च वाष्पशकटादि प्रचलनाय। प्रतरणद्वयीयं प्रवेशद्वारायमाणा नगर्या। नगरीयं पुराणनवोपभागाभ्यां द्वेधा विभक्ता। नवदेहलीं त्वांगलशासनकाले पुराणदेहल्युपकण्ठमेवांगलशासनं निर्ममे। तत्र तावत्पुराण देहलीं वर्णयाम.—अस्यां हि सुदूरं विस्तृता महार्घपण्यपूरितै हट्टै परिवारिता निपद्या[1] प्रतोल्यः सरण्यश्च। अत्र सर्वतः ट्रामयानानां घरट्टानामिव प्रतिपलं जनान् वाहयतां सञ्चरणस्वाना समुत्पादयन्ति कमपि कौतुकं नवागन्तृणां मनसि। अत्र मध्येनगरं नगर्याः नाटङ्कमिव[2] चकास्ति चान्दनीचौकस्थानम्। इदञ्च महर्घवसनादि-पण्यालङ्कृतैरापणवरै खचुम्बिभि र्भवनैश्च संशोभितम्।

अतो नेदीयस्येव विस्तृतक्षेत्रे लोहिताश्ममय वर्तुलपटलसवलितं रक्तप्रस्तरप्राकारपरिवीत लोहितदुर्गम्[3]। इदञ्च मुगल-

---

१. पण्यवीथिका २ कर्णाभरणम् ३ लाल किला

साम्राज्यवैजयन्तीवैभवस्य साक्षिभूतमिवाद्यापि नगर्या पुष्कला-मभिख्यां पुष्णाति । अस्यैव प्रतिवेशितामायातं जामामस्जिदाख्य मौसलदेवगृहम् । इदञ्च सोपाननतिभि र्वलित रक्तेष्टिकाप्रस्तरसचितं भवनम् । नगरस्यास्यापरस्मिन् भागे कार्पासवसनवयनकर्माणौ द्वौ बृहत्परिणाहौ यन्त्रालयौ[1] । अत्र नक्तन्दिनं सहस्रश कर्मकरा नाना कर्मसु व्यापृतास्तिष्ठन्ति । प्रोषितानां पुरुषार्थिनां पश्चिमपञ्चनदा-गतानां हट्टै भंवनैरुटजैश्च व्याप्तासौ नगरी साम्प्रतं ससम्मर्दा । अत्र सरणीरुभयत श्रमजीविनां संकीर्णा उटजा सर्वत्रैव दृष्टिपथ-मवतरन्ति ।

मानरज्जुमिव सुदूरवितत क्रीडानगमुभयतो विस्तृता नवदेहली आजन्मुक्तामणिगुम्फिता हारयष्टिरिव पुराणदेहली समाश्लिष्य

नवदेहली

तिष्ठति । अत्र च वज्रकनिर्मिता बृहत्परि-णाहा मार्गाः । नात्युच्चानि सुरम्याणि भवनानि । सत्यपि निर्मितिभेदे समरूपा एव विभान्ति सर्वेऽत्र प्रासादा । अत्र चतुष्पथानां बाहुल्यम् । प्रतिचतुष्पथं सुमहन्मूल्यवद्भिर्द्रव्यैर्भरिता आपणा । एतेषु कनाट-सरकसनाम्नाख्याता विपणि. प्रसिद्धा । अत्र महर्घ-वसनधारिण्यो विलासिन्योऽनेकवेश शोभिनो भद्रपुरुषाश्च ससरन्ति । केचन द्विचक्रेषु, परे बाष्पशकटेषु, केऽपि पदातिन एव । राज्यकर्मचारिणा विविधा' कार्यालयाः केन्द्रनियन्त्रिता वसतयश्च । अत्रैव सुरम्य राज्यप्रासादः[2] । अत्रैव निवसति भारतसर्वस्वः श्रीमान् प्रधानमन्त्री ।

---

१ मिल । २ गवर्नमेण्ट हाउस ।

भारतगणराज्यस्य सभापतिरप्यत्रैव वसन् नगरीमिमामलङ्करोति । नवदेहल्यामेव जगत्प्रसिद्धं विरलाभवनम्, यत्र राष्ट्रपितेति व्यपदिश्यमानः श्रीमान् महात्मागान्धी महाभागश्चरमं निरश्वसन् । एतच्च स्थानं तीर्थभूतमिव सर्वैः सादरं प्रणम्यते । अथ सत्स्वप्यन्येषु कौतूहलास्पदेषु नवदेहल्यां 'विरलामन्दिरं' विशिष्य द्रष्टव्यम् । एतच्च देवभवनं लक्ष्मीनारायणयोरर्चागृहं भारतस्य श्रेष्ठिवरेण दानशौण्डेन श्रीविरलामहोदयेन प्रतिष्ठापितम् । अत्र स्फटिकमयीषु दृषन्मयीषु च भित्तिषु समुत्कीर्णानि भारतीयानां सम्राजां महापुरुषाणां वीराणाञ्च चित्राणि निगमागमानामुपदेशप्रवणानि पद्यानि च स्मारयन्ति भारतस्यातीत गौरवं प्रबोधयन्तीव च विस्मृतिशय्यासुप्तानामपि यूरोपीयसभ्यतारञ्जितानां जनाना मनांसि । अत्र प्रत्यहं भक्त्या कौतुकेन सपर्यया च गच्छतां नराणां नारीणां भवति महानेव सम्मर्दः । विविधदेशाना राजदूता अप्यत्रैव नवदेहलीनगरे निवसन्ति । अत्र सरणिषु संसरन्तो विविधवेशधारिणो विविधाभिर्भाषाभिर्जल्पन्तो मानवा केषां न हृत्सु समुत्पादयन्ति कौतुकं चेतोवताम् ।

पुण्यतोया कलिन्दनन्दिन्यपि नगरीमिमां शोभयतितराम् । अस्या एव सरिद्वरेण्यायाः पावने कूले राजघाटेति ख्याता श्मशानभूमिः । अस्यामेव श्रीगान्धीमहात्मनां दाहसंस्कारसाक्षी समाधिः । अत्र प्रायः समस्ता एव दूरदेशागता प्रशस्तपदभाजः प्रथमागमनावसरे तीर्थवन्महता श्रद्धाभावेन समागत्य

यमुनाकूले

समाधिस्थण्डिल पुष्पाञ्जलिभिरर्चन्ति । नगरादीषद्दूर एव वर्तते गगनमिव मातुमुत्तुङ्गताङ्गतो वर्तुलाकृति प्रासाद कुतुबमीनारेति-ख्यात । अत्रत्य तावदार्याणामेव देवालयानुत्पाट्य तत्सम्भार-पुञ्जेनारचि केनापि यवननृपेणेति बहूनामितिहासविदां मतम् । नगर्या अस्या अनति-दूर एव वर्तन्ते खण्डित-प्रस्तरेष्टिकाग्राममया ध्वस्ता प्रासादा । अत्रैव पुरोषु सकलमहीशासनसूत्रधारा श्रीमन्त पाण्डु-नन्दना इति किवदन्ती ।

उपसहार· एवञ्चासौ देहलीनगरी जलनिधिरिव वसति विविधानां मणीनां भारतस्य शोभां वर्धयन्त्यमरावतीव स्वर्लोकस्य, सकल-विलाससनाथोल्लासकारिणी कल्पलतेवे-दानी श्रमिणा पण्यजीविना विद्यापजीविनां राजकर्मचारिणाञ्च सर्वार्थपूरणपेशला प्रधानतमं पदमधिश्रयन्ती भारतस्यातीतं गौरवं रक्षन्ती वर्तमानञ्च पोपयन्ती राजधानीलक्षणैरलङ्कृता सर्वेषां मोदाय कल्पतेतराम् ।

---

## हरिद्वारतीर्थम्

**विमर्शसारः**—१ भारतप्रसिद्धं तीर्थम् । २. गगा-प्रवाह । ३ धर्मावसथा । ४ यात्रिणा सम्मर्द. । ५. कुम्भपर्व । ६ अस्थि-क्षेपणम् ।

स्यादत्र भारते कोपि विरलतम एवाधन्यो वैदिकधर्मानुयायी देवानां प्रियो यस्य हरिद्वारेति चतुरक्षरमयी सज्ञा न जातु श्रुति-

शुष्कलीम् अस्पार्क्षीत् । आ काश्मीरात्कुमारीं

**ख्याति**

यावत्, आ सिन्धोः कामरूपं यावद् समस्त एव भारतखण्डे विश्रुततमं पूततमञ्चेदं तीर्थम् । अत्र समस्तेभ्य प्रान्तेभ्यो लक्षातीता यात्रिणः प्रत्यब्दं प्रयान्ति । अस्तु, आगम्यतामद्य अमुमेव तीर्थवरमधिकृत्येह किञ्चित् प्रपञ्चयाम.—

इदन्तावदनुश्रूयते—सगरो नामैक्ष्वाको भूपतिरासीत् । स ह्यश्वमेधेनेजे । तस्यौरसानां तनयानां शत बभूव । ते पितृनियुक्ता आश्वमेधं हयमनुवव्रजु । तञ्च वाजिन

**पौराणिकी गाथा**

शतमन्युरपजहार, मायया निचिक्षेप च तपोलीनस्य मुने कपिलस्याश्रमे । अश्वन्तं मार्गयन्त सगरसुता कपिलाश्रमे हय ददृशुः । विवेकभ्रष्टास्ते तत्र मुनिमेवाश्वापहर्तार मन्वानास्त पराबभूवु. । ततस्ते सर्वे तत्रैव कपिलकोपानलेन शलभनाशं नेशु. । अथ स्वपितॄनुद्धर्तु भगीरथो नरपति स्वर्लोकाद्देवधुनीमवतारयितुकाम पशुपतिमाराधयामास । भगवतो भूतपते प्रसादेन गंगां भूलोकमानीय भस्मीभूताना निजपितॄणां पथा प्रवाहयन् समं भस्मना तेषां कलुपमलीमस मपयशोऽपि क्षालयामास । भगीरथस्य पितॄणां शापदग्धानां स्थानं यदासीत्तस्यैव हरिद्वारेति ख्यातिरधुना । इदञ्च मोक्षप्रदमिति सर्वत्र प्रगीतम् । अत एवाद्यापि परः सहस्रा हिन्दुलोकाः स्वेपाम् उपरताना-मौरसानां दग्धकीकसान् समादाय दूरतरेभ्य प्रदेशेभ्य समेत्यात्र प्रक्षिपन्ति ।

इदञ्च तीर्थं पुण्यसलिलाया सुरनिर्झरिण्या पावने पुलिने विस्तृतम्। एतद् उभयतो विलसन्ति हिमवतोऽनुच्चाः शिखरिणः।

तीर्थवर्णना

अत्र गहनगिरिगह्वरास्फालनादुद्विग्नेव विहर्तुकामेव च भगवती जाह्नवी भारतस्य समक्षेत्रां भूमिं प्रविशति। एवञ्चेदं भारतक्षेत्र-प्रवेशद्वारं गंगायाः। अतोऽपि हरिद्वारमिति संज्ञा। अत्रैकं कुण्डं हरिसोपान[1] मिति प्रसिद्धम्। अत्रैव मृतास्थीनि प्रक्षिप्यन्ते। श्रद्धालवोऽप्यत्रैव स्नान्ति। पितॄणां श्राद्धमप्यत्र कुर्वन्ति केचन। एतद् उभयतो देवालयानां ततयो विलसन्ति। मध्येकुण्डमप्यस्त्येको देवालयः। एतदेव तत्स्थानं यत्र सगर-सूनवो भस्मतां ययुरिति वदन्ति लोकाः। हरिसोपाने सुविस्तृतमेकं स्थण्डिलम्। अत्र नूतन एव प्रतिष्ठापितोऽस्त्येको घटी यन्त्रालयः।

हरिद्वारे सन्त्यनेके धर्मावसथाः श्रेष्ठिभिः सामन्तैर्भूपैश्च निर्मापिताः। प्रायः सर्व एव यात्रिण एतेष्वेव तिष्ठन्ति। अत्र द्वादशवत्सरानन्तरं कुम्भपर्वणि भारतस्याशेषकोणेभ्योऽनेकलक्ष लोकाः गगायां सिस्नासव समागच्छन्ति। तदानीमत्र तिलांशोऽपि भूभागस्तादृशो न लभ्यते यत्र जन-सम्मर्दो न स्यात्। सत्यपि महति राज्य-लोकसंघादिविहिते प्रबन्धे बहवो म्रियन्ते, पर्यन्ते विसूचिकादिभिः मरकैः[2] पीड्यन्ते।

अत्र तावद्भिक्षाचराणां सम्मर्दोऽपि नाल्पीयान्। अत्रापि भारतस्य इतरतीर्थवदन्ध-पंगु-मूकबधिराणां भिक्षाचारिणां सशक्ती-

---

१ हर की पौढी। २ महामारी ( Epidemics )

नामपि धृतभिक्षावृत्तीना देहि देहीति नाद सञ्चरति। किञ्चात्र धर्मैकप्राणास्तपोनिष्ठा श्रद्धाप्रवणा जना अपि मूढमेक्षिकाविचक्षणानां दृक्पथमवतरन्ति।

हरिद्वारात्सविध एवास्ति गुरुकुलम् गुरुकुल-कांगड़ीतिख्यातम। अत्राश्रमपरिपाटीमनुसृत्य छात्रा विविधान् निगमागमानधीयते।

द्रष्टव्यस्थानानि

अस्य विस्तृतानि क्षेत्राणि सुरम्याणि भवनानि सौम्यवेशिनो विद्यार्थिनो दर्श दर्शं समुत्पद्यते किमपि कौतूहलं भारतीयसंस्कृतिस्मरणजनितमार्यगौरवगर्भाणां सुमनसां मनसि। अस्यैव च कनीयान् सहोदर इव सविधे कृतस्थिति श्रीऋषिकुलाश्रम.। अत्रापि प्राचीनसंस्कृति-गौरवमिव दन्ध्वनयन्त श्रुतिशास्त्राभ्यास-पटवो बटवो दृष्टिपथमायान्ति। ऋषिकुलस्योपांगभूत आयुर्वेद-महाविद्यालयोपि द्रष्टुमर्हं। इतोऽनतिदूरमस्ति ज्वालापुरम्। अत्र तीर्थपुरोहिताना वसतय एव प्राय। अतो नातिदूर एव वर्तते कनखलम। इदमपि पवित्रं तीर्थं गण्यते। अत्रैव दक्ष. पिनाकिनमवमत्य स्वसुतां सती तिरस्कृत्य क्रतुनेयाज पशुपतिश्च सतीदाहप्रकुपितस्तम् अध्वर ध्वंसयन् दक्षस्य शिरश्चकर्त। महाकवे कालिदासस्य

'तस्माद्गच्छेरनुकनखलम् ' इत्यादि मेघदूतस्थ-पद्येनापि प्रतीयते यदिदं तदानीमपि परमं प्रसिद्धं तीर्थमगण्यत।

हरिद्वारादुत्तरस्यां दिशि भीमगोडाभिध स्थानम्। अत्र वर्तते कुण्डमेकम्। तीर्थमाहात्म्यश्रद्धयात्रापि यात्रिणोऽवगाहन्ते सलिलम्। अत किञ्चिद्दूरेऽस्ति हृषीकेशाभिध स्थानम्। अत्र विशालशिला-

राकलेभ्य समुच्छ्लन्त्या भगवत्या भागीरथ्या तरगभगी भृश चेत आवर्जयति। सन्तीहापि देवमन्दिराणि पान्थावसथा धर्माव-सथाश्च। किञ्चेह कुष्ठिनां सघट्ट दुनोति मानसम। अतोऽनति-दूरेऽस्ति तपोवनम्। अत्र नियमिनो यमिनश्च कुटीषु निवसन्ति सुरसरित्स्नेहासक्ता। ततोऽप्युत्तरस्याम् आशायां शैलमालासंवलित 'लक्ष्मणझूला' नामधेय स्थानम्। अत्र गंगायां शृंखलाबद्धं वर्तते दोलेव विततं प्रतरणम्। अत्र समुच्छ्लन्त्या कलकलकारिण्या भागीरथ्या नीलनीला सुनिर्मला धारा, निविड-तरुराजि-संवृताया हरितहरिताया शैलमनुगताया अटव्या शोभेति द्वयमेव जनयति निरतिशयमानन्दं प्रेक्षकाणां हृदि। अत्र प्रतरणमुल्लघ्य नग-परिसृतो मार्ग श्रीबदरिकाश्रमं प्रयाति। एतस्मात्स्थानात् पर्वतशिखरे सन्निविष्टस्य नरेन्द्रनगरस्य सुधालिप्ता प्रासाद-पङ्क्तयोऽपि प्रसभ दृष्टिमपहरन्ति दर्शकानाम्। क्षणदायां विद्युद्दीपानां मालाभिर्विभ्रा-जितेयं पुरी विशिष्टामिव सुषमां पुष्णाति।

अथ प्रकृतं संहरन्तो वय भूयोऽपि किञ्चित्समामनाम—इह हरिद्वार-तीर्थे यादृशी प्रकृतिसुषमा भगवत्या गगाया, यादृक्च सुनि-र्मल सलिलमस्या न तथाऽन्यत्र नगरेषु।

उपसहार — नगाधिराजस्य हिमाचलस्य शिखराणि, काननाना सान्द्रा-सार्द्रा च छटा जाह्नव्या प्रसन्नसलिला धारा, इत्येता समुदिता सत्यमावर्जयन्तीव सर्वेषा मनांसि किमुत श्रद्धैकधिया यात्रिणाम? हरिद्वारमिद तीर्थं यथा पापराशिविनाशे पेशलं तथा प्रकृतिस्नेहवतां मनांस्याह्लादयितुमपि समर्थम।

# वैष्णवी देवी-यात्रा

विमर्शसारः—१ उत्तुङ्गपर्वतमाला। २. निम्नोन्नता भूभागाः। ३ प्रकृतिकमनीयता। ४ विचित्रा कन्दरा। ५ भक्तिगरिमा। ६ यात्रिणां सम्मर्द।

उपक्रम

इह तावदस्ति प्रसिद्धमेकमाभाणकम 'आम्रश्च सिक्ता पितरश्च प्रीणिताः' इति। एकदाहमस्याभाणकस्यास्य याथार्थ्य-गोचरतामगमम्। एकादशोत्तरद्विसहस्रमिते (२०११) वैक्रमे वत्सरे 'लुध्याना' राजकीय महाविद्यालये कृतस्थिते मम चिराय श्रीवैष्णवीदेवी दिदृक्षा मनस्यासीत। अथ तत्र तिग्मतेजसस्तिग्मतरैः करैः सन्तापितोऽहं सभार्यः श्रीवैष्णवदेवी दर्शनाय प्रस्थितः।

यात्रा

शारदस्य नवरात्रस्य सप्तमे दिवसे स्वपाणिग्रहीत्र्या सार्धं लुध्यानास्टेशनात्प्रातर्दशावदनवेलायां रेलयानेन प्राचलम्। श्रीताराचन्द्रगुप्ताख्यो मदीय सुहृदेकोऽपि स्वमात्रा सह तीर्थ-बुद्ध्या पर्वतदिदृक्षयाऽऽवामन्वगच्छत्। एवं चत्वारो वयं यात्रायै प्रस्थिताः। रात्रेः सप्तवादनवेलायां यावदेव लारीयानं पठानकोटादुत्तरां काष्ठामभिचलितुं प्रारेभे तावदेव विद्युद्दीपानां मालाभिर्विभ्राजिता पर्वतसन्निविष्टा जम्मूपुरी कैलाससानुसंगता कौबेरी नगरीव विभासमानाऽस्माकं नयनपथमवातरन्। अथ नगपतिसंगमसोत्सुकमिव लारीयानं नाना रम्यान् मार्गान् उल्लंघ्य झटिति जम्मू-स्टेशन प्राप। अत्रासन् वहवो वैष्णवदेवीगन्तारः। केऽपि भद्र

न्ना. काश्मीरगमनाभिलाषिणोऽत्रैव यानादवारुहन । वय च स्व-वस्तुचयं[1] रथ[2] एकस्मिन् समास्थाप्य रथेनैव जम्मूनगर्या रघुनाथ-मन्दिरस्थाने समागत्य तत्रैव निशामत्यवाहयाम । रघुनाथमदिरमिदं तत्र प्रधानं देवतायतनम् । अत्र वर्तत एक' संस्कृतमहाविद्यालयोऽपि । जम्मूनगरी तव्वीनदीकूले नगमूर्धनि स्थिताऽत्यन्तं कमनीया । अत्रानेके देवगृहा. कनकजटितै कलशैरलंकृता दिवंगतस्य काश्मीर-नरेशस्य श्रीरणवीरस्य यशोदीधितीर्दिक्षु विकिरन्त इव भ्राजन्ते । अत्रत्या मार्गा अपि स्वच्छा वज्रक-रचिता निम्नोन्नता' ।

नगरीमिमां निर्वर्णयतो मम मनस्येवमभूत्काव्यभावना—

अस्ति स्वस्तिमतां विलासवसति. कन्दर्पदर्पापहा
काश्मीरस्य सहोदरेव जगतां लावण्यलीलानिधे ।
तव्वीसत्तटिनी तटेऽति वितता रम्या रमा प्रोज्ज्वला
जम्बूलोचन[3]-कीर्तिडिण्डिमभरा जम्बूपुरी श्रीकरी ॥

अपरेद्युर्वयं लारीयानेन जम्मूत प्रचलिताः सार्धदशवादन-वेलायां प्रात' । अनुद्धातेन लांगूलवर्त्मना पर्वतानां ततीरति-क्राम्यन्तो वय सपादैकवादने कटरापत्तनं समागच्छाम । अत्रा-सीन्महीयान् यात्रिणां संघट्ट' । कटरापत्तनमुपत्यकायां सन्निविष्टम् । अस्योत्तरतस्तुषारावृता गिरिराजस्य तुङ्गतरा शिखरिश्रृङ्खला । अत्रत्येपु हट्टेष्वपि प्रायः पार्वतं द्रव्यजातं बाहुल्येन लघुमूल्येन च

१. सामान २ टागा ३. जम्बूलोचनो नाम राजा पुरा जम्बूपुरी निर्ममे ।

मिलति । तेषां चाखोटा[1], छत्राकाणां[2] विविधा जातय, वातादा[3] अक्षोटत्वच ऊर्णामया काश्मीरप्रावारा[4], दाडिमबीजानि, इति विशिष्य परिसंख्यानमर्हन्ति । अत्र गृहमेधिनां गृहाण्येव पान्थावसथा । वयमेकस्मिन् विप्रवेश्मनि स्ववस्तुचयं संस्थाप्य पाथेयमेव महादरेण निम्लोचति गभस्तिमालिनि श्रीवैष्णवीं ध्यायन्तस्ततः प्रचलिताः । कटरातोऽनतिदूर एवैका गिरिनिर्झरिणी प्रवहति । इयं च सरित् तुङ्गशैलमेकं परिक्रम्येव प्रवहन्ती स्वघर्घररवेण सर्वा आशा मुखरयति । सुस्वादु खल्वेतस्या नीरम् । महाकायासु दृषत्सु समुच्छलन्ती गिरिगह्वरानास्फालयन्तीयं कूलङ्कषा डिण्डीर[5] पिण्डानुद्गिरन्ती चण्डवेगा चपला वडवेव वारुणीमाश्रितस्य कमलिनीकुलविकासकारिणोऽरुणतररश्मिजालमपि पानीयप्रतिफलितं पर्यवाकिरत् । इतश्च श्यामश्यामा शैलकटकास्तृता तरुराजिरपि तदानीं भास्करस्यारुणबिम्बेन समन्तादारक्ता लोहितांशुकमिव परिदधानाऽलक्ष्यत । इतस्त्वपरो यात्रिणां वैष्णवदेवीयियासूनां केषाञ्चिद्परेषां च स्रग्विणां प्रत्यागच्छतां मनुष्याणां च 'सन्त ! जय मात ! सन्त ! जय मात' इति ध्वनिरपि भृशममोदयन्नो मनांसि, पर्वतगहनारोहणत्रासं निवार्यापूरयच्च कमप्युल्लासमयमुत्साहमस्माकं चेतसि । वयं च यष्टिकामवष्टम्भ्य प्रतरणकमुल्लङ्घ्य 'जय मात' इति भणन्त पर्वतमारोहितुं प्रारभामहि ।

अस्मिन् हि पर्वते यावद्गुहास्थानं विरचिता प्रस्तरमय्य

---

१ अखरोट २ गुच्छियां, खुम्भ, ३ बादाम ४ लोइयां ५. फेनम् ।

सोपानततयो यात्रिणां शैलारोहणायासं नितान्तमल्पयन्ति । आरोह-देशाद्गुहां यावदसौ शैल सार्धत्रिक्रोशमित । वय जन-सम्मर्देन सायं प्रचलन्त सायं नववादनवेलायां 'आदिकुमारी' इति नाम्ना ख्याते स्थाने प्राप्ता । अत्रापि विश्रामाय यात्रिणोऽनेकेऽतिष्ठन् । अत्रापूपिका मिष्टान्नविक्रेतार आपणिका अप्यवर्तन्त । अग्निदला-भिधजम्मूलोकपधस्य प्रबन्धेनात्र दातव्यौपधभवनमपि वर्तते स्म । अस्माभिरत्रैव सा निशाऽत्यवाह्यत । निशायाञ्चात्रत्यं शैत्यं लायल-पुरस्य च सन्तापप्रदमौष्ण्यं मशकोपद्रवं च तुलयन्नहं प्रकृते लीलाविलास समाकलयन् कदाऽस्वाप्समिति नावेदम् ।

अथ यात्रिणा यष्टिध्वनिभि र्भक्त्युद्गारैश्च प्रबोधिता वयमपि यामिन्यास्तृतीय एव यामे तत' प्रचलिता । दुर्लङ्घ्योऽभवदद्यतनो-योऽध्वा । शिखरिधारामुभयतो महागर्ता, स्थूलतराश्चोपला दानवदेहा इव सर्वत्र पतिता., तुषारशीकरमिश्र प्रबलवेगः प्राभातिको मरुत्, मन्दमन्दस्तिमिरपटलसंवीत एवौपस प्रकाश', इति किं किं नाभूत्तदा भीतिकृत् । किञ्च तत्र भक्तिमना नराणां, स्तनंधयान् बालान् स्वोत्संगेषु संवाहयन्तीनां वनितानां, यष्टिमवलम्ब्यावलम्ब्य प्रक्रमतां वर्षीयसां पृथुकानामपि पद्भ्यामेव व्रजतामुत्साहं दृष्ट्वा-ऽऽयासोऽनुत्साहो वा स्वयमेव व्यपगच्छति स्फूर्तिश्च जाजायत इत्यहमन्वभवम् । अथ गगनांगनमध्यंप्राप्ते सवितरि वयं पर्वत-मास्योच्चतमे शृ गे प्राप्ता., तत्राधित्यकाकल्पे समे प्रदेशेऽभवन् केचिदापूपिका । वयमपि प्रपायामेकस्यां वारि पीत्वा प्रातराशमत्र निर्वर्त्य विश्रम्य प्रस्थिता । अस्मात्स्थानादवरोहमय एव मार्ग ।

आरोहायासितोऽवरोह तृपार्तो वारीव बहु सुखप्रद विन्दते। अथ वयमपि ततो नवीनां स्फूर्तिमिव प्राप्य प्रचलन्तो होराद्वयेनैव पर्वत-मधो विस्तृते सरलदेवदारुवंशादिसमाकीर्णेऽरण्ये प्राप्नुम। अतो देवीवसतिर्नेदिष्ठैवेति प्रत्यागच्छतां यात्रिणां मुखाच्छ्रुत्वा पुनरपि केनाप्युत्साहेन भरिता इव वयमग्रे चलिता। काननमेदिनी विहाया ऽनधिकेनैव कालेन लांगूलाध्वना भगवत्या वैष्णवव्या पावनं स्थान समाजग्मु।

निशायामत्रैव स्वय पाचितेनौदनेन सव्यञ्जनेन सायमाशा निर्वर्तिता। चायपानममपि पीतम्। श्रमो व्यपगतः। निवासायात्र

गुहा

काश्मीरराज्यविरचिता सुदूरविस्तृता कोष्ठ-गर्भगृहविहीना सन्ति पान्थावासा। अथ प्रत्यूपस्येव स्नात्वा वयं माङ्गल्यसूत्रं नारि-केल सिन्दूरञ्चादाय गुहायां प्रविष्टा। इयं च भगवत्या दुर्गाया वैष्णवीरूपाया निवाससनाथिता गुहा विचित्रा। अस्या द्वारे तिर्य-गवस्थित एकः स्थूल उपलः। द्वारञ्चातीवसंकुचितमत. सर्वैरुत्तानी-भूयान्तः प्रविश्यते। गुहागर्भे प्रचुरजलराशिवान् निर्झर. सघर्घर-स्वनं प्रवहति। अस्य घर्घररवः शून्यान्तराले तिमिरावृते गुहागर्भे भीतिमिव जनयति। हिमशिशिरस्पर्शमस्य जलम्। किञ्च गुहागर्भो विस्तृत एव किञ्चित्। जानुदघ्नं गुहायां जलम्। स्वभावस्थित्यैव जलाप्लुतेन मार्गेण दीपिकानां प्रकाशेन शतद्वयदण्डमितं गुहामार्ग-मुल्लंघ्य भगवत्याः स्फटिकरचित सोपानपरिष्कृतं सुन्दरं मन्दिरं साक्षादकरवाम। तत्र महाकालीमहासरस्वतीमहालक्ष्मीणां क्रमेण

प्रस्तररीतिरजतमय्यस्तिस्रो मूर्तयो विलसन्ति। इमा एव भगवत्या वैष्णव्या प्रतिरूपभूता.। अत्र वायुसञ्चारहीने प्रच्छिन्नगर्भे गुहान्तराले निराबाधमेव दीपानां प्रज्वलन विलोक्य महान मे मनसि विस्मयोऽभूत्। कज्जलधूमाच्छन्नेऽत्र जनानां विश्वासवायुरपि नाल्पीयान्, तथापि नात्र किमपि निश्वासप्रश्वासयो कष्टमनुभूयते। मन्येऽस्माकं तीर्थानामिदं माहात्म्यम्। अथ भगवत्या दर्शनेन स्वात्मान कृतार्थमिव ज्ञात्वा निर्गत्य प्रातराशं विधाय ताराचन्द्रमहाभाग प्रचलितुं त्वरयाञ्चकार। परं मामकीनं मनस्तत. प्रचलने न जाने कथ पीडामिवान्वभूत्। चण्डीसप्तशत्यां वर्णितं खलु महिषासुरशुम्भनिशुम्भादिमर्दनमत्रैव क्वापि पर्वतेऽभूत्। तत प्रभृत्येवात्र भगवत्या महामायाया वैष्णवीशक्तिर्भक्तानां रक्षणाय दुष्टानां दलनाय व्यराजतेति मे मनसि समायाति। अत्रत्या जनास्तु नातिप्राचीनां कथामेकामेवास्या गुहाया प्रसिद्धे कारणं भणन्ति। भवतु यत् किमपि स्यात्। भावनैव बलवती नराणाम्।

शङ्खचक्रगदाशार्ङ्ग गृहीतपरमायुधे।
प्रसीद वैष्णवि देवि नारायणि नमोस्तु ते॥

इत्यादि किमपि स्वानन्ददं जपन्नहमनिच्छन्नपि तत प्रचलित.।

प्रत्यावृत्ति

यात्रिणस्तु प्राय एकेनैव गिरिमार्गेण गच्छन्ति प्रत्यागच्छन्ति च। तत्र दृष्टं केऽप्यन्येनैव पथा गच्छन्ति स्म। दूरोऽयमध्वा किञ्चावरोहमय एवेति ज्ञात्वा दृश्यान्तरदर्शनकौतुकेन वयमपरेणैव

पथाऽचलाम। नीचैरयतरन्तो वयं कमनीयतरे निविडे कानने प्राप्ता। नासीदस्मिन्नध्वनि यात्रिणां संघट्ट। दिवसस्य प्राह्ण काल, मन्द मन्दं समीर संसरति स्म। नीरवता नितान्तमवर्तत, क्वापि दीर्घपुच्छानां नरकपीणां[1] तरोस्तरु कूर्दन नेपाङ्च-उल्मुकवर्णान्[2] कायान् दर्श दर्श मनस्येव सविस्मय इमन्नह बहुश्रे समागत। पत्न्यपि प्राप्ता। ताराचन्द्रोऽपि प्राप्त, परं 'तस्य जननी क्व' इति सोऽपि नाज्ञासीत्। ततस्तेन सहाह प्रत्यावृत्यानतिदूर एव तामेकां शिलामध्यास्य विश्रम्यमाणामवालोकयम। सा च वराकी पालिकनी श्रान्ता कथं त्वरितै पदै प्रचलेत्। अथावा ना महाराय प्रचलितौ। पत्नी तु 'जय मात' इत्युच्चै र्वदन्ती दूरमध्वानमुल्लङ्घ्य ग्रामटिकाया एकस्या सविधे समागतासीत्। अत्रापणिकेभ्योऽपूपान् पाचितचणकान् श्लेष्मातक-बहुवारा[3] मलकी शुक्तानि[4] नवनीत सन्तानिकाञ्च[5] लघुनैव मूल्येन क्रीत्वाऽस्माभिरेकस्या गिरिप्रस्रविण्या रोधसि स्थित्वा सानन्दं प्रातराशो भुक्त।

अथ मन्द मन्द परिचलन्तो ग्रामान् ग्रामटिका स्नुही समावृताश्च वाटिकाश्चातिक्रामन्तो वयमस्तमन-वेलाया कटरापत्तनं समागच्छाम। तत्रैव रात्रावुषित्वा प्रातरुदिते भास्वति लारीयानेन पठानकोटं समाजग्मिम। 'क्व तद्गिरिराजस्य परमं वैभवम्? क्व ते कर्णमधुरा धुनीनां रवा'? क्व सा नयनाभिरामा कानन-सुषमा? क्व चेदं रेलवाष्पादियानानां ध्मायनं, नगराणां जनगणोत्थो कलकल:, प्रखरातपस्य तपनस्य तीव्रता' इति चिन्तं चिन्त मनस्येव

---

१. लंगूर २. कोलकवर्णान् ३. लिसोडा ४. आचार ५ मलाई।

किञ्चिद्दूना किञ्चिद् वृद्धा व्ययनपरं गुर्ध्यानानगरे स्वावास प्राप्नुम।

---

## नासिके कांग्रेसाधिवेशनम्

**विमर्शसार:**—१ नासिक-गौरवम्, गान्धीनगरम, जण्डप-रचनाः, कांग्रेससभापति-समादरः, जनसम्मर्द। २ सभापति भाषणम्, अन्यनायकानां भाषणानि। ३ सभापतेर्भाषणसार।

भारतीयेषु तीर्थेषु नासिकस्य तीर्थस्यापि नाम प्रशस्तं मन्यते। पुण्योदका गोदावरी यत्र प्रवहति, तस्या पावने पुलिने पञ्चवटी भगवतो दशरथकुलतिलकस्य जानकीवल्लभस्य विहारस्थली। अत्र दण्डकेषु भगवान् रामो लक्ष्मणानुगतो भगवत्या जनकतनयया सह गोदावरीतीरे पर सहस्राणि राक्षसकुलानि जघान। अत्रैव जनस्थानम्। यत्र खरदूषणत्रिशिरसां वलवतीश्चमूर्भगवान् स्वधनुष्टकारेणैव व्यद्रावयत्। पञ्चवट्यामेव पुलस्त्यकुल धूमकेतुर्दशग्रीवः श्रीरामस्य प्राणप्रियां मैथिली छद्मनाऽपजहार। अत्रैव रामस्यानुगोदावरी-तीरं सीतामन्वेष्यतस्तानि तानि विलपनानि दृषदोऽपि किलारोदयन्। रावणस्वसुः शूर्पणखाया अत्रैव सौमित्रिर्नासिका वव्रश्च। अत्रैव कनकहरिणच्छद्मना जानकीं विमोहयितुमागतो मारीची रामसायकेन हतः स्वर्गमगान्।

नासिक

रामायणपुरुषाणां पावनाभिः कथाभिर्नैदिष्टः सम्बन्धो नासिक

नगरस्य । इदानीमपि धर्मप्राणाः श्रद्धावन्तो जना नासिकं तीर्थबुद्ध्या सेवन्ते । इदञ्चास्ति साम्प्रतं नगरम् । अत्र रेलस्टेशनोऽपि विद्यते । अत्र भारतीयकांग्रेसस्य षट्पञ्चाशत्तममधिवेशनमभूत्, येनास्यै तिहासप्रसिद्धं तत् पावनं प्रधानञ्च स्थानमाहात्म्यं पुनरपि वृद्धिं नीतम् । अस्याधिवेशनस्य वर्णनमिह प्रकृतम् । तदत्र समस्य वर्णयाम' ।

कांग्रेसाधिवेशनं ग्रामेष्वेव भवतीति हि कांग्रेसनायकानां सरणि । नासिकनगरात्सार्धक्रोश एव ग्रामटिकाया एकस्याः सविध एव कांग्रेसस्याधिवेशनं रचयितुं षण्मासेभ्य पूर्वमेव समारम्भोऽभूत् । तत्रारण्यस्य तरु-गुल्मादीनुत्पाट्य समक्षेत्र रचितम् । मार्गा

गान्धीनगरम्

वज्रकरचिता निर्मिता । पटभवनानि निबद्धानि । टीनपट्टकैः कुट्यो निरमीयन्त । प्रतोल्यो द्वाराणि च व्यतन्यन्त । आपणा अपि दूरदूर विस्तृता आसन । एव तदा सा निर्जनस्थली रमणीया नगर्यकारि । अस्या नाम 'गान्धीनगर' कृतम् ।

सभामण्डपस्तु सविशेष परिष्कृतोऽभूत् । अत्र पञ्चदशसहस्र जनानामुपवेशनायावकाशः आसीत् । मञ्चानामपि पञ्चसहस्र मिता संख्याऽभवत् । एतान् केन्द्राधिकृता राज्यपालान्तर्गता उपरा-ज्याधिकारिणो बहवो वित्ततरा शासकगणा अध्यतिष्ठन् । कांग्रेस कार्यकारिण्याः समितेः सदस्या अपि प्रधानमञ्चानेवाध्यशिश्रयन् ।

पञ्चशतसन्देशवाहका उभयतोऽत्रोपातिष्ठन्त । मुद्रणालयानां

चैत्रिकास्तु[1] बहवो दोलादोलिता इवोदनिमुन्नत्र ।

सप्तोत्तरद्विसहस्रवैक्रमस्य वत्सरस्य भाद्रपदशुक्लाष्टम्यां मंगले ऽधिवेशन दिनस्य तृतीये यामे प्रारभत । अस्य षट्पञ्चाशत्तमस्याधिवेशनस्य सभापतिपदं विश्रुतकीर्ति श्रीमान् टण्डनोपाह्व· पुरुषोत्तमदासमहोदयो ऽलञ्चकार । स्टेशनादसौ सुसज्जिते स्यन्दने ऽन्यैर्नेतृवरैः सार्धमुपवेश्यासख्येन जनसम्मर्देनानुगत सभामण्डपं प्रापित· । तदानी 'जयतु गान्धी, जयतु जयतु टण्डनमहोदय, विजयतां श्री नेहरूमहाभागः' इति पौन पुन्येन सोत्साह सहर्षञ्च निगदतां जनानां निनादैर्दिशो मुखरिता अभूवन् । नासिकक्षेत्राद् दूरवर्तिभ्यो ग्रामेभ्यो ग्रामटिकाभ्यो घोषेभ्यश्च[2] पर सहस्रा वर्षीयसां शिशूनां यूनाञ्च समूहाः कांग्रेसाधिवेशन-कौतुकेनात्र समाजग्मु । आसीदेष महान् मंगलमय· समयो नासिकवासिनाम् ।

सभापतेरभिनन्दनम्

सप्तोत्तरद्विसहस्रवैक्रमस्य भाद्रशुक्लाष्टम्यां भौमेऽपराह्णे ऽधिवेशनमारभत । अत्र भारतस्य प्रधानमन्त्री पण्डित जवाहरलालमहोदय, उपप्रधानमन्त्री श्रीवल्लभभाई पटेल महोदयोऽन्येऽपि प्रसिद्धा नायकाः शासनाधिकारिणो राज्यपालादयोऽभूवन् । मंगलगीत्यनन्तरं श्रीटण्डनमहोदयोऽध्यक्षमञ्चमलञ्चकार । तदानीं करतलध्वनिभिर्जयघोषैश्च सर्व एव सभामण्डपो निनादित इवाभूत् ।

अधिवेशनारम्भ·

---

१ चित्रजीविनः ( फोटोग्राफर ) । २ आभीरपल्लीभ्य ।

श्री टण्डन महोदय पूर्व स्वर्यातानां देशस्य प्रसिद्धजनानां देश-सेवकानां निधने शोकं प्राचीकरन्। तेषु श्रीपत्या नायडूपाह्वाया सरोजिन्या श्रीगोपीनाथ वारदोलई महोदयस्य श्रीशरच्चन्द्रबोसस्य नामानि विशिष्य कीर्तनीयानि दिवङ्गतेषु। अथ सभापतिमहाभाग कामरूपदेशस्य भुवः कम्पेन विपन्नाना विषये निज खेद सहानुभूतिञ्च प्रकटयाञ्चकार। तत स भारतीयसंविधानमधिकृत्य किञ्चिदभाषत।

श्रीपुरुषोत्तमदास टण्डन महोदयोऽतिविस्तृतं हिन्दीभाषायाम-सभापतिभाषणम् अभाषत। तस्य भाषणस्य निष्कर्षमिह तावदुद्धराम —

'अस्माकं देशस्य संविधानं शासनं च न कमपि विशेषधर्म न च कमपि धर्मग्रन्थमुपजीवति। अत्र जातिधर्मयोर्भेदं विहाय सर्वे समानाधिकारिण उद्घोषिता' इत्यहं स्वदेशस्य गौरवं दूरदर्शिता-नैपुण्यञ्च गणयामि।

'पाकिस्तानस्य व्यवहारं निभाल्यात्रत्यानां हिन्दुजनानां हृद्यपि भावनेयं स्वभावतयैवोद्भवेत्, यदिहापि हिन्दुशासनं स्यात्। जन-मतावसरेष्विय धारणा भवेत्। किञ्चात्राहं वच्मि यदस्य चिन्तन-मपि वर्धयेदस्माकं द्वेषं कलहञ्च, शासनञ्च निर्बलीकुर्यात्। कमपि धर्मग्रन्थमालम्ब्य नास्माकं शासनं वर्तितुं शक्नोति। न चात्रास्माकं पाकिस्तानो निदर्शनतां व्रजेत्।'

'पञ्चदशवत्सरेभ्यो निर्धारितावधिभूतेभ्य पूर्वमेव हिन्दीभाषा राज्यभाषापदं प्रापणीया। इदञ्चास्माकं देशवासिभिः कर्तव्यम्। ते

पूर्वमेव परभाषाभ्यसनमुपेक्ष्य स्वहिन्दीभाषाभ्यासेनैव सर्वत्र व्यवहरन्तु । लब्ध्वा चावसरं संविधानेऽप्येतस्मिन् विषये यथोचितं परिवर्तनं विधाय हिन्दीभाषां सकलस्य राष्ट्रस्य भाषां विधातुं प्रयतेयुः ।'

श्रीनेहरूमहोदयस्य सान्धिविग्रहनीतिं समर्थयन् सभापतिरवोचत्, 'अस्यां नीतौ लाभदोषावुभावेव स्तः । लाभस्तु तावत्—'वयं सर्वराष्ट्राणां पुरो न्यायस्योचितं स्वरूपं प्रदर्शयाम । प्रेरयामश्च सर्वानितरेभ्यस्तन्मार्गमनुसर्तुम् । अस्मदीयैषा नीतिर्विश्वशान्ति-रक्षणाय साहाय्यमाचरिष्यति । अतो बहवो महानुभावा अस्मान् प्रशंसन्ति । दोषस्त्वत्रायम्—उभययोरेव बलवत्पक्षयोर्न कोऽप्यस्मान् स्वसुहृदो वेत्ति । अस्यैवाय परिणामो यत् काश्मीरसमस्याऽधुनापि यथास्वरूपैव । पाकिस्तानोऽस्माकं देशे काश्मीरानाचक्राम, एतत्प्रबलैः प्रमाणैरपि साधितमभूत् । परं तथापि राष्ट्रसंघस्तमाक्रान्तारं नाघोषयत् । कोरियायुद्धे यया नीत्या व्यवाहरत् तयैव काश्मीरे कथं न व्यवहृतवान् राष्ट्रसंघः ।'

'गणराज्यशासनपद्धत्या शासितमपि भारतं राष्ट्रमण्डलान्तर्गत-मेव तिष्ठतु' इति श्रीनेहरूमहोदयस्य पक्षं श्रीटण्डनमहाभागोऽपि समर्थयामास ।

गतवर्षत्रय्यां भारतीयशासका अर्थकाठिन्येन पीडिता अपि शरणार्थिनां त्राणाय श्रमिकाणां सुस्थित्यै कृषकाणाञ्च सुखाय यानुपायानवालम्बन्त यच्चाकुर्वन् तन्नूनं प्रशंसनीयम् ।'

'ग्रामाणां दशाऽपि समुन्नेया, ग्रामोद्योगः प्रोत्साहनीयः, खद्दर-

प्रयोगे मन्दादरो नापेक्ष्यते राज्यस्य । ग्रामोद्योगानामुन्नतिरेतेनोपेक्षणेन न स्यात् ।'

भारतस्य शासनपरिणामं पर्यालोचयन् श्रीटण्डनमहोदयोऽवदत्—'भारतीय समाजे शीघ्रमेव तादृशा अर्थपतयो भविष्यन्ति येऽर्थं स्वभोगसाधनं न मंस्यन्ते, सेवा साधन ज्ञास्यन्ति । न हि कोऽपि भिक्षायै चरिष्यति । पङ्ग्वन्धबधिररुग्णादीनामर्जितुमसमर्थानां कृते भविष्यन्त्याश्रमा । पुरुषा महिलाः सत्करिष्यन्ति, धनमूल्येन ता स्वशरीरं न विक्रेष्यन्ते । नारीगौरवस्य रक्षा समाजस्य परमाविभूति र्भविष्यति । इदमेवास्माक शासनस्य लक्ष्यम । एतादृश शासनमेव पुण्यश्लोक. श्रीगान्धी महात्मा रामराज्यमित्यचकथत् । यदीदृशमेव शासनमत्र प्रचरिष्यति तदैव कांग्रेसस्य सर्वे प्रयत्ना साफल्य लप्स्यन्ते ।

सस्कृतिर्धर्म इति भिन्नावेव पदार्थौ । राष्ट्रस्य समृद्ध्यै दृढतायै च सघशक्ति र्बलवती साहाय्यकारिणी । ग्रामोद्योगानामुन्नत्यै खद्दरस्योत्पादने प्रयोगे च शासकानां मान्थर्य न शोभते । अस्माभि सर्वात्मना श्रीमहात्मन' सिद्धान्तसरणिरनुसरणीया ।"

विषयसमितेरन्तरंगोपस्थितौ श्रीनेहरूमहोदय प्रोवाच—

असाम्प्रदायिकी नीतिरस्माभिरनुपालनीया ।

**विषयसमितिः** गान्धिमहात्मना प्रदर्शितां सरणि विहाय न जातु कांग्रेस प्रचलितुं शक्नोति । यदि यूयमिच्छथाहं कांग्रेसस्य मार्गप्रदर्शको भवेयं तदा 'पाकिस्तानभारतयोरेधमानः कलह प्रशमनीयो विनैव युद्धम्, सौहार्दञ्च

वर्धनीयम्’ इति यन्मया घोषितं तत्सर्वे भवन्तोऽनुमोदयन्तान् ।’ श्रीनेहरूमहोदयस्यादो वचः सर्वे सहर्षं स्वीचक्रु । मतग्रहणावसरे केवलं चत्वार एव जना हस्तानुत्तोल्य विरोधपक्षमशिश्रियन ।

आचार्यस्य कृपलानी महोदयस्य शिविरे रात्रौ गुप्तैका मन्त्रणाऽभवत् । तत्रेदं निर्धारितं यत्—सर्वेषु राज्येषु

**आचार्यकृपलानी महोदयस्य निवासे गुप्तमन्त्रणा**

भारतीयेषु टण्डनमहोदयस्य विपक्षमघः स्थापनीय । चेच्छ्रीकिदवईमहोदय. कार्यकारिण्या' समिते सदस्यपदं नाधितिष्ठेत् तदा तेऽपि तत्र सदस्यपद न स्वीकरिष्यन्ति । अस्य विचारस्य पक्षस्थिता' केऽपि श्रीनेहरूमहोदयमुपेत्येदं न्यवेदयन् । पर नास्या गुप्तमन्त्रणाया कोऽपि परिणामोऽभवत ।

एवं कांग्रेसस्य नासिकनगरे रचितमिदमधिवेशनं षट्पञ्चाशत्तमं चतुर्भिरहोभि' समाप्तिमगात । पूर्वतनेषु कांग्रेसाधिवेशनेष्वभूद् महीयान् व्यय । किञ्चामुष्मिन हायनेऽल्पेनैव व्ययेन साधारणया रीत्याऽधिवेशनमभूत् । चिकित्सालयानां सुप्रबन्धः, रक्षापुरुषाणां सुनियोगः, स्वयंसेवकवर्गस्य कार्यकुशलता, यानानां सौकर्यम्, तारशब्दवाहकयन्त्राणां विद्युतश्च सौकर्यम्, इति सर्वमेवावदातमासीन् । पुरुषोत्तमदासमहोदयो यदा जनगणनया कांग्रेससभापतिपद प्रापितोऽभूत्तदा बहुभिरेवं शङ्क्यते स्म यदसौ श्रीनेहरू महोदयस्य नीति नूनमधिक्षेप्स्यति । किञ्च यदा यदा श्रीटण्डन सारगर्भित गम्भीरञ्च भाषणमश्रूयत तदा सा सन्देहबुद्धिर्दूरङ्गता । सर्वे च सभापतिमहोदयस्य दूरदर्शित्व नीतिगाम्भीर्यं च भृशं प्रशंसयामासु. ।

## परमाणु-बमः

नववह्निनन्दशशिहायनस्य (सन् १९३९) जन्वरीमासि वैज्ञानिकानामेका परिषदभूदमेरिकायाम्। तत्र श्रीबोरेण श्रीफर्मीमहोदयेन चैको विस्मयावह प्रयोग प्रदर्शित । एप च नवीन एव प्रयोगोऽभूत्। अस्याविष्कर्तारौ श्रीडाक्टर ओटोहान श्रीडाक्टरस्ट्रासमैनश्चास्ताम्। एतौ यूरेणियमाख्ये धातौ न्यूट्रोनतत्त्वस्यातिसूक्ष्मकणान् अवर्षयताम्। एतेन यूरेणियमधातुर्ध्वस्त । ध्वस्तावशिष्टञ्च परीक्ष्य तावपश्यताम यद् यूरेणियमधातो परमाणु द्वैधा विभाजित । तत्स्थाने केवलं बेरियमधातु क्रिप्टनवायुरेवावशिष्टौ। असौ प्रयोग परमाणुबमस्य बीजप्रदो बभूव।

आविष्कार

पञ्चवेदनन्दैकवत्सरे (सन् १९४५) जुलाईमासस्य पञ्चदशतमे दिने प्रथममय प्रयोग परीक्षित.। अमेरिकाया 'अलमोगोर्डो' नगरे लौहचैत्यस्यैकस्य महापरिणाहस्योपरि परमाणुबम स्थापित । पञ्चमीलदूरे स्थितेन वाजिना विद्युद्यन्त्रं द्वारीकृत्यासितो बम । तत्रैवमदृश्यत तदा—सूर्यादपि तीव्रतर प्रकाशोऽभूत्। ततो घोरं गर्जनमभवत्। लौहचैत्यं वाष्पतामगात्, तत्स्थाने महदेकं निम्नतरं गर्तं सञ्जातम्। सार्धशतद्वयमीलदूरे स्थितानां भवनाना वातायनान्यपि चकम्पु.। अत पूर्वं न कोऽपि बलवानीदृशो विस्फोटोऽभूत्। एवंविधमासीत् परीक्षा परमाणुबमस्य।

परीक्षा

अस्मिन्नेव वर्षे यदा जापानेन सहामेरिकाया. सम्रामोऽचलत्तदा

प्रथमः प्रक्षेपः

जापानस्य हीरोशिमानगरे अमेरिकाया सेनाधिकारिभिः परमाणुबमः प्रक्षिप्तः। अनेन महाविस्तृतं तन्नगरं क्षणेनैवानेकलक्ष-जनसहितं ध्वस्तं महागर्तरूपमधारयत्। ततोऽन्यस्मिन् जापान-नगरेऽपि तथैव प्रक्षिप्तस्तत्राप्येवमेव दशाभवत्। जापानश्च परा-जितोऽभूत्। एवं तदानीं सर्वत्र जगति परमाणुबमस्य नाम सर्वैर-श्रूयत। सैन्यबलमेव सर्वस्वं मन्यमानानां राष्ट्राणां परमाणुबमस्य रचनायै च प्रारभ्यन्तानुसन्धानानि तत्रत्यैर्वैज्ञानिकैः।

परमाणुस्वरूपम्

सर्वस्य जगतो रचना परमाणुमयी वर्तते। परमाणुस्वरूपं वर्णयतां दार्शनिकानामुक्तिः—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।
तस्य षष्ठितमो भागः परमाणुः स उच्यते॥ इति।

किन्त्वेदं स्थूलं वचनम्। परमाणुरतीन्द्रियः। अणुवीक्षणेनापि साधारणेन द्रष्टुं न शक्यते। अस्याणुत्वं तावदनेनैवाज्ञेयं यदेक-तोलकमितस्य स्वर्णस्यैकखर्वुदतमखण्डे सार्धत्रिखर्वुदमिताः पर-माणवो भवन्ति। यन्त्राणां साहाय्येन परमाणुस्वरूपमपि ज्ञातमस्ति वैज्ञानिकैः। परमाणौ केन्द्रांशः[1] एको भवति। तमभितः एको द्वौ वा विद्युत्कणौ सरहसा परिक्रमेते। केन्द्रांशस्याकर्षणेन विद्युत्कणानां परिक्रमणं प्रवर्तते। यथेयमवनिः सवितारमभितः परिक्रमते किलाकर्षणबलेन तथैव विद्युत्कणा अपि केन्द्रांशं परि-क्रमन्ते परितः। केन्द्रांशोऽपि परमाणो द्वाभ्यां कणाभ्यां रचितः—

१. न्यूक्लियस

न्यू ट्रोण., प्रोट्रोणश्चेति। प्रोट्रोणे विद्युच्छक्तिरस्ति। न्यू ट्रोणे नास्ति। भारस्तु द्वयोरेव सम'। प्रोट्रोणस्य कणानां संख्यया पदार्थे गुणा आपाद्यन्ते स्वीया। यथा लोहस्य परमाणौ षडविंशतिसंख्या प्रोट्रोणा भवन्ति स्वर्णस्यैकोणाशीतिसंख्यास्ते भवन्ति। एष एवैतयो र्भेद। यूरेनियमस्तु धातु भारवत्तमोऽस्ति सर्वेषु। तस्यैकस्मिन पर-माणौ द्विनवतिमिता प्रोट्रोणानां संख्या। एतेनेदं वक्तु शक्येत—यदि केनाप्युपायेनायस्रि प्रोट्रोणानां संख्या नवसप्ततिमिता कर्तु शक्येत तदा तत्स्वर्णरूपेण परिणमेत्।

रथरफोर्डनामा वैज्ञानिकाचार्य परमाणूनां स्वरूपपरिवर्तनानु-सन्धानसलग्नो बभूव। स प्रोट्रोणानां कणसंख्यानां विपरिवर्तनाय भृशमचेष्टत। तेन नाइट्रोजनात् प्राणवायु[1] परमाणुरूप परिवर्तनम् रुत्पादित। किञ्च स कणपरिवर्त नाधिक्येन कर्तु मशकत्। यतः केन्द्रांशस्थामी कणा प्रब-लयाकर्षणशक्त्या निगृहीता। किञ्च यथा यथा परमाणोराकारो वर्धते तथा तथा कणानामाकर्षणमपि शैथिल्यं प्राप्नोति। यूरेनियम-धातो' परमाणव मावकाशत्वाद्बृहदाकारा भवन्ति। अतस्तत्र कणाकर्षणं न प्रबलम्। यदा तत्र न्यूट्रोणकणानां प्रक्षेपो भवति तदा ते विभज्यन्ते बेरियमक्रिप्टनपदार्थरूप च धारयन्ति। अत सर्व-धातुषु तत्त्वेषु च यूरेनियमधातुरेव सावकाशं सुविभाज्यं शक्ति-समुत्पादकञ्चेति निष्कर्ष'।

१ ऑक्सीजन' ( अम्बरपीयूष इत्यपर प्राचीनं नामास्य। )

वैज्ञानिका पुरा पदार्थं शक्तिञ्चेति पृथगेव तत्त्वद्वयममन्यन्त।

परमाणुभंगेन शक्त्युत्पत्ति

विज्ञानाचार्य आइन्स्टीनमहोदय मप्रमाणमिदमदर्शयन् यत् पदार्थ एव शक्त्या परिणमते। विज्ञानसाधनानां साहाय्येन पदार्था शक्तिरूपेण परिणमयितुं शक्यन्ते। येनाल्पीयसा पदार्थेन भूयसी शक्तिरुत्पद्यते। लघुना पदाथन कियती महीयसी शक्तिरुत्पद्यत इति तावदनुमातुमपि न शक्यते। इहैकेन निदर्शनेनैतत्सुविज्ञात स्यात्—एकप्रस्थमितेन कर्गलपत्रेण तावती शक्तिरुत्पद्यते यावती पञ्चविशतिकोटिप्रस्थकोलकानां दहनेनौष्ण्यशक्तिरुत्पाद्यते।

परमाणुभगेऽप्येवमेव महती शक्ति र्जायते। परमाणुबमस्य महाशक्तेरिदमेव रहस्यम्। यूरेणियमधातो परमाणो. कणा सौकर्येण भक्तु शक्याः। तेषां भंगेन च भूयसी शक्तिरुद्भवति। एकप्रस्थ यूरेणियम धातो र्भङ्गेन द्विकोटिमिताग्नेय[1] सामग्रीसम बल जन्यते। अतएव यूरेणियमधातुरत्युपयोगी परमाणुबमनिर्माणाय।

परमाणुबमस्य रचना

परमाणुबमस्य रचनायां यूरेणियमधातुरुपयुज्यते। अत्र न्यूट्रोणकणानामुत्पादनाय प्रक्षेपरूपेण रेडियमनामको धातुरप्युपयुज्यते। रेडियमधातुना न्यूट्रोण-कणा समुत्पाद्यन्ते। ते च केन्द्रांश भञ्जयन्ति, ततस्तेऽपरान् कणान्, तेऽप्यपरान। एव परमाणुबृहत्स्तोमानां भंगेन प्रलयङ्कारिणी शक्ति र्जायते। रेडियमधातुना कणभंगो मा भूदपेक्षितात्समयात्पूर्वमिति कृत्वा स तत्र सिलिकनधातुना

---

१. बारूद

दृढेन संश्लिष्यते । भग्नानां कणानां द्रुतगतिरन्येषां कणानां भञ्जने शैथिल्यं जनयति । अतस्तेषां तां शक्तिं रक्षितुं मन्दप्रचारस्तेषामपेक्ष्यते तत्र । अयञ्च मन्दप्रचार उत्तरकालेऽधिकां शक्तिं सञ्चय्यान्यकणानां भङ्गे साहाय्यमाचरति । अत परमाणुबमे द्रवसिकथकस्यावरणं[1] भवति । द्रवसिकथके प्रचरतां न्यूट्रोणकणानां वेगः किञ्चिन्निरुध्यते, येन न तेषां शक्तिः शीघ्रं व्ययीभवति । सञ्चितशक्तिकास्ते कणा केन्द्रकणानुत्तरोत्तरं नियतगत्या भञ्जयन्तो ध्वंसस्वरूपां दारुणां शक्तिं जनयन्ति । एवमेषा परमाणुशक्तिः । रहस्यमेतत् । अनुसन्धानकर्तारा अपि विशेषशेमुषीका अत्र दुर्लभा । इह समस्यास्य स्थूलं रूपं दर्शितम् । परं येन प्रचुरमात्रया यूरेणियमस्य कणभङ्गः क्रियते स पदार्थोऽवश्यं वैज्ञानिकैराविष्कृतः स्यात् । कः स पदार्थः ? इति तु रहस्यम् । परमाणुबमानुसन्धानकर्तारो विरलविरला एव वैज्ञानिका जानन्ति ।

परमाणुबमो जनसंहारकारीति दोषयुक्तः सर्वैर्मन्यते दारुणश्च ।

**गुणा**

परं नात्रैकान्तेन दोषा एव । एष हि प्रयोगो यो दोषभाक् । अस्य प्रयोगेण तु साध्यान्यपि कार्याणि साधयितुं शक्यन्ते । मरुस्थलेष्वपि पानीयपूरिता कासारा जनयितुं शक्याः । दुर्लङ्घ्योऽपि पर्वताच्छिन्नो मार्गः सुगम्यो भवेत् । एवं सन्त्यन्येऽपि सूपयोगा यैः परमाणुबमो मानवानां हितायाऽपि कल्पेत ।

---

१ मोम ( पैराफीन )

**परमाणुबमस्य विभीषिका**

अद्यत्वेऽमेरिकारूसादयो महाप्रदेशाः परमाणुबमानां निर्माणाय बृहत्तममर्थभागं व्ययीकुर्वन्ति। वर्तन्ते तावत्तेषु राष्ट्रेषु गुप्ताः प्रयोगशालाः, यासु परमाणुबमनिर्माणायान्यासां शक्तीनां विज्ञानाय वैज्ञानिकाः अहोरात्रं प्रयोगान् कुर्वन्ति। अधुना राष्ट्राणां परमाणुरस्त्रम् एव महद्बलम्। परमाणुबमस्याविष्कारेण सर्वेषु देशेषु विभीषिका प्रसृता। अधुना परमाणुबमप्रयोगनिरोधाय सन्ति प्रतिष्ठापिता जनसङ्घास्तेषु तेषु राष्ट्रेषु। नवीनतमोऽयमाविष्कारो वैज्ञानिकानाम्। यदि विश्वशान्तिं कामयमानानां भारतादीनां प्रयत्नाः साफल्यमायुस्तदा नूनं दारुणतमोऽप्येष परमाणुबमो लोकानां हिताय प्रयोजयिष्यते।



# चतुर्थः प्रदीपः

## आख्यानात्मकाः प्रबन्धाः

**अवतरणिका—**

आख्यानात्मकेषु प्रबन्धेषु विश्रुतकीर्तीनां धर्म-समाजराष्ट्रनायकानां महापुरुषाणां जीवनाख्यानानि समाश्रित्य प्रबन्धा भवन्ति। अत्रेदं तावदनुचिन्त्यम्—न हि तात्रत्सकलमेव जीवनोदन्तं वर्णयितुं विस्तृत्यावसरो भवति। यावानेवांशो जीवने ख्यातिजनको गुणै-रन्यैराकर्षको भवेच्छिक्षाप्रदस्तावानेवोपादेय प्रबन्ध-रचनायै। उपक्रमोपसंहारयोरुपयोगि किमपि तत्तज्जीवनसंगतं कस्यापि कवेरन्यस्य वा ग्रन्थकारस्य पद्यं कमप्याभाणकं वा समुपन्यस्यत। अर्वाचीनाना चरितवर्णने जन्मनिधनयोरुरुल्लेखं मा विस्मरत। जीवतां जीवनोदन्तवर्णने चोपसहृतौ वर्णितस्य दीर्घायुष्ट्वादि कामना ज्यायसी।

आत्मकथापि तावदाख्यानात्मकेष्वेव परिगण्यते। इयञ्च सजीवानां निर्जीवाना वा। सजीवानां मानवादीनामपि भवति। सा हि प्राय सत्या। पश्वादीनान्तु कल्पिता। तत्राजीवानां पुस्तकादीना प्राणिना गोगजादीनामात्मकथा स्वात्मन्युपचर्यते। अहमेव तावत्पुस्तकादि-रूपेण वच्मि तदवस्थाश्रितां कथामिति कल्पयित्वा वर्ण्यते। अत्र तावत्—या सार्वत्रिकी विशेषोल्लासकारिणी कौतुकस्पर्शिनी च कथा भवेत्सैवांशांशकलनया तावत्येव प्रबन्धनीया। सैव चमत्कारं जनयति। अचेतनानामात्मकथावर्णनच्छाया संस्कृतकाव्येष्वपि दृश्यते। तथाहि आलङ्कारिकस्याऽनन्दवर्धनाचार्यस्य पद्यमिदम्—

कस्त्वं भो कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधुविदितो वैराग्यहेतुस्त्वया।
वामेनात्र वटस्तमध्वगजनान् सर्वात्मना सेवते,
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे॥

अत्र शाखोटतरु स्व मनःसन्ताप पथिक प्रति वर्णयति।

# भगवतो बुद्धस्य जीवनचरितम्

**विमर्शसारः**—१ दैवज्ञवाणी। २. अवतारभावना। ३ ससार-क्लेशा.। ४. वैराग्यम्। ५. तपोलीनता। ६. महाबोध। ७. धर्म-प्रचारः। ८ बौद्धधर्मस्य सार्वत्रिक प्रसारः।

भगवतो बुद्धस्य प्रात. स्मरणीयं नाम समस्तेऽपि भूमण्डले सर्वे शिष्टा. सादर वदन्ति स्मरन्ति च। महाभारतकालानन्तर नाद्यावधि भारतवसुन्धरायां भगवतो बुद्धस्य समान-कोटिमाश्रितुमर्ह. कोऽपि समुद्भूतः। भगवन्तममुमेवार्हत्तम वर्णयितुमद्येह प्रकृतोऽस्माकं विषय।

जन्म

इतः सार्धद्विसहस्रसंवत्सरपूर्व भारतसंग्रामाच्च प्रायः साध-सहस्रवत्सरानन्तरं भारतस्योत्तरकोशलेषु प्रबल समृद्धं च गणराज्य-मभूत्। अस्य राजधानी कपिलवस्तु नाम्नी रमणीया नगर्यवर्तत। एतेषां गणानामधिपति शाक्यवशीयो महाराज शुद्धशील. शुद्धोदनो नाम कपिलवस्तुनि गणराज्यमपीपलत्। अस्य स्वधर्मसहचरी मायादेवी साध्वीकुलललामा गुणोज्ज्वला कमलेव केशवस्य प्रिया बभूव। व्यतीते सुमहति समये नैतयोः किमप्यपत्यमभूत्। अपत्यहीनो राजा शुद्धोदनो भृशमताप्यत्। एकदा तं कोऽपि मुनि र्वसिष्ठ इव दशरथं दैशिकवरोऽभ्युपाजगाम। स च राज्ञा सत्कृतोऽनुयुक्तश्चैव मुदा जहार 'एकं पुत्ररत्नं प्राप्स्यसि साक्षाद्-भगवतो हरे द्वितीयं विग्रहमिव। स हि भवाभोगान्विहाय कानने

तपश्चरिष्यति, धर्ममुद्धरिष्यति, ज्ञानं च समस्ते मेदिनीपृष्ठे प्रसारयिष्यति।" एवमुद्घोष्य स मुनि र्ययौ। अथ कालक्रमेण मायादेवी साक्षाद्धर्ममिव धृतमूर्तिं हरिमिव धृतावतारं गुणोदारं दारकवरमेक सुषुवे। स एष मातापितृभ्या 'सर्वार्थसिद्ध' इति नाम्ना प्रख्यापितः कालान्तरं 'बुद्ध.' इति च ख्याति लेभे।

शैशवम्

सर्वार्थसिद्ध. स्वपितृगृहे पितृभ्यां लालितः पालितश्च कौमारे वयसि वर्तमानो न जात्वपि विनोदकौतुकमयान् पदार्थान् बहु अमन्यत। तं हि दैवज्ञप्रबोधितो राजा 'हित्वा श्रियं काननमेव गन्ता' इति भिया स्वप्रासाद एव संसारस्य सर्वान् रमणीयान् विनोदमोदप्रदान् पेशलान् पदार्थान् परिकरांश्च सम्भृत्यारञ्जयत्तथा यथा स 'कि दु खम्' इति न जातु व्यज्ञासीत्।

यदा सर्वार्थसिद्धः शैशवात्परं वयः पस्पर्श, तदा स पितुर्नियोगाद् यशोधरां नाम सुरूपां सद्गुणामेकां राजकुमारीमुपयेमे। सा चाचिरेण 'राहुल' इति कृताभिधानं पुत्रमपि प्रासोष्ट।

वैराग्यम्

एकदा दैवप्रेरणया सर्वार्थसिद्धः प्रासादाद्बहिः स्वीयां विजिहीर्षा प्राचीकटत्। पिता चानिच्छन्नपि सुतवात्सल्येन तं बहि विहर्तुमादिदेश। राजा च सर्वस्मिन्नपि पुरे वामनकुब्जखञ्जपङ्गुव्याधिग्रस्तादीन् नरान् निर्वेदप्रदानन्यानपि सञ्चरितुं निषिषेध। किञ्च दैवमायया स बहिर्विहरन् मार्गे यष्टिमवलम्ब्य प्रचलन्तं त्वगस्थिमात्रावशिष्टकाय कासमानं प्रजवं श्वसन्तं गलिते-

न्द्रिय-शक्तिं वृद्धमद्राक्षीत्। स चादृष्टपूर्वं त तथाविधं नरं निर्वर्ण्य सारथिमप्राक्षीत्। सोऽपि दैवमायाविमोहित

"रूपस्य हन्त्री व्यसनं बलस्य ।

नाशः स्मृतीनां रिपुरिन्द्रियाणां, सेय जरा नाम ययैप भग्नः ॥"

इत्यवाच्यमपि व्याहार्षीत्। सर्वार्थसिद्धोऽसौ निर्विण्णो रथयन्तारं प्रत्यावर्तितुमेव समादिशत्।

अथ द्वितीयविहारकालेऽपि स मृत नरं स्वबन्धुभिः श्मशानं नीयमानं दृष्ट्वा मृत्युनाम्ना चकित इव दु खित इव च परं निर्वेद-मापन्नो वैराग्याय मति चक्रे। परं पित्रा नान्वमन्यत।

एकदा सोऽर्धरात्रौ शोभनशरीराया यशोधरायाः स्तन्धयस्य चार्भकस्य प्रासादान्निर्गत्य वनाय गन्तुकामः प्राव्राजीत्।

सर्वार्थसिद्धो वनविहारापदेशेन छन्दकेन स्वसारथिना वाह्यमानेन रथेन कपिलवस्तूपकण्ठमेव स्थितं मुक्तिमार्गणा भार्गवस्य महर्षेराश्रमं प्राप। तत्र छन्दकं स्वाभिप्रायं निवेद्य प्रत्यावर्तयत्। अथ वनाद्वनं भ्रमन् यायावर' स 'ममाभिलापस्त्वपुनर्भवाय' इति कृतमति-र्विन्ध्याटवीमाजगाम। तत्र कतिचित्समास्तपस्तप्त्वा स ससारार्णव-तितीर्षया बोधलिप्सया च गयायाः कानने वटमूलमाश्रित्य बहुकालं यावत्तपांसि तपमान समाधि भेजे। अत्रैव च स स्वस्मिन्नेव साक्षाच्चकार परमं तज्ज्योति र्दिव्यं च लेभे निर्वाणमयं बोधम्।

भगवतो बुद्धस्य काले भारतेऽत्र धर्मस्य परा ग्लानिरवर्तत। लोका हि यायजूका यज्ञानेव स्वर्गैकसाधनभूतानगणयन्। यागेषु

पशूनां नराणाञ्च बलय उपाह्रियन्त ।

ज्ञानप्रचार

ज्ञानाचारमयान् मानसांश्च धर्मान् न केऽप्यन्वपालयन् । धर्मस्येमां विकृतिमयीमवस्था पर्यालोच्यैव बुद्धो निर्वाणोपाय लब्धुं तपांसि तेपे । अथ लब्धज्ञान-ज्योति' स सर्वत्र देशेऽज्ञानतिमिरं विनाश्य लोकानां ज्ञाननयनानि विस्कारयितुमैच्छत् । स नु तदानीं 'अहिंसा परमोधर्म ' इत्येव सनातनं नथ्य मोक्षैक-हेतुभूतमुद्घोपयन् धर्म प्रचचार । पूर्व वाराणसी-सविध एव स स्वोपदेशान् प्रारभत । इदञ्च स्थानं 'सारनाथ' नाम्ना प्रसिद्धमद्यापि तीर्थभूतं बौद्धानाम् ।

बुद्धश्च ग्रामाद् ग्राममाश्रमादाश्रमं नगरान्नगरं जनपदाज्जन-पदञ्च बम्भ्रम्यमाण स्वाहिसामार्गेण प्रजा प्रवर्तयामास । अस्य शिष्येषु बुद्धस्य जनक शुद्धोदनोऽपि बभूव । अन्येऽपि सामन्ता सार्वभौमाश्च नृपतयो बुद्धस्योपदेशेन परमां शान्ति लेभिरे । तेऽपि बुद्धप्रचारितमहिसा-धर्मं प्रचारयन्तः स्वप्रजा हिसामयेभ्य' पशु-यागादिभ्यो बलान्निवार्य धर्मेण पथा प्राचालयन् । अनाथपिण्डदो नाम तदानीन्तन. कश्चिदाढ्यतम. श्रेष्ठी स्वीयां सर्वां सम्पत्तिं भिक्षुभोज्यां विधाय कौपीनवाससी .परिधाय भिक्षुधर्ममङ्गीचकार । स ह्यासीन् बुद्धस्य शिष्यः । शारिपुत्रो नाम भगवतो बुद्धस्यासीत्प्रियो विद्वांश्च शिष्य. । अनेन बौद्धग्रन्था केऽपि दार्शनिकाश्च ग्रन्था रचिता. ।

अल्पीयसैवानेहसा सगस्तेऽपि मध्यभारते बौद्धधर्मं प्रचार्य

निर्वाणम्

भगन्दरगदेन क्षीणो भगवान शाक्यमुनि एकोन चत्वारिंशद्वगदेशीय एव कैवल्यं भेजे। केचित्तु वदन्ति यदशीतिवर्षावस्थाया म निर्वाण प्राप। परे तु ततोऽप्यधिकावस्थायामिति भणन्ति।

उपसंहार

आर्यग्रन्थेषु भगवान् बुद्धो भगवतो हरेरेव नवमोऽवतार. परिगण्यते। एव च सत्यपि वैदिकधर्म-विभेदे निर्विशेषतया दशावतारेषु पूज्यते हिन्दुजनैरपि। अत्र भारते सार्धसहस्रवर्षं यावद्बौद्धधर्मप्रसारोऽवर्तत। अधुना चीनजापानसिंहलत्रिविष्टपेषु कोटिसंख्याका बौद्धा। धन्येयं भारतमही यस्यामेतादृशा पुण्य-श्लोका धर्माचार्या. प्रादुर्बभूवु।

---

## "श्री शङ्कराचार्यस्य जीवनचरितम्"

**विमर्शसार:**—१ लोकोत्तर-चरितानि। २ सन्यासदीक्षा, मातृभक्ति.। ३ वादि खण्डनम, अद्वैतमत प्रचार। ४ दिग्विजय ५ भाष्यकर्ता।

इह दक्षिण-भारते केरल इति नाम प्रदेशस्तत्र कालपी इत्याख्यो बभूवैको ग्राम। अस्मिन् समाहिताग्नयो वेदवेदांग-पारदर्शिनो द्विज-

वंशपरिचय.

गणा ऊषु.। एष्वास्तैक' परमतप प्रवणो मुनिजन-चरितावदात पंक्तिपावनो भूसुरा-धिराजो विद्याधिराजो नाम विप्रवरिष्ठ.।

अस्य मध्यमे वयसि वर्तमानस्याजागत शिवगुरुर्नाम समस्त-गुणा-भिरामः कच इव वाचस्पतेरेको दारकः । स चाधीत-सकल-विद्यो ब्रह्मचर्य-व्रतमनुपालयन् यथाविधि द्वितीयमाश्रमं प्रविश्यामोघाभि-धस्य महीसुरवरेण्यस्य सुरूपां सद्गुण-समुज्ज्वलां कामाक्षीं नाम कन्यकामुपयेमे । परमसौ अतिक्रान्ते सुमहत्यनेहसि न च किमप्य पत्यमाप । ततस्तौ दम्पती पुत्रकामनयाऽनेकान् नियमान् व्रतांश्चा-चरन्तौ भगवन्त तरुणेन्दुशेखरम् आराधयामासतुः । ततः सुशोभने मुहूर्ते रसवसु वेदहायने(४८६)शाके वैशाखशुक्ल तृतीयायां कामाक्षी स्कन्धमिव तुषारगिरिनन्दिनी सुत प्रासोष्ट । तञ्च शिवस्य भगवत प्रसादमिव मत्वा तौ शंकर इतिनाम चक्रतुः । परं हन्त ! त्रिहायन-देश्यमेव क्षीरोष्टं शंकरं वियुज्य श्री शिवगुरुः शिवपुरं प्रतस्थे । ततो-ऽर्भकस्यास्य माता भर्तुः दारुण हृदयादुत्पाट्येव शोकशङ्कुं शङ्कर-मेव स्वजीवन-सर्वस्वं मेने स्वायत्ति-सुखमीहमाना ।

अथायुप सप्तमेऽब्दे प्रविष्ट दारकं शङ्करं विधिवदुपनीयास्य जननी गुरुकुलं विद्यामध्येतुं प्रेषयामास ।

विद्याभ्यास

आसीदयं शैशवादेव कुशाग्रधीः । गुरुकुले ऽसौ वेदान् वेदाङ्गानि च सम्यगधीत्य षोडशवर्ष-वयस्क एव स्वगृहं प्रत्याजगाम । अस्यासाधारण पाण्डित्य-स्य यशः समस्त एव केरलप्रदेशे तदानीमेव प्रसृतम् ।

तदानीमत्र भारते बौद्ध-मतमेव प्रायः सर्वत्र प्रसृतमासीत् । बौद्ध-भिक्षवस्तु विहारेषु वसन्तो भगवतो बुद्धस्योदारमवदातञ्चोपदेशं दुरुपयुज्य कर्म-विमुखा भ्रष्टाचारा अभूवन् । क्वचन भिक्षु-

संन्यासदीक्षा

ऽपि 'तथैव कुरु' इति समादिशत्। जलौघोऽपि शशाम। शङ्करोऽपि नदीमुत्तीर्य कूलं प्राप।

ततस्तु अनतिचिरेणैव मातरमापृच्छ्य प्राव्राजीत्। प्रव्रजन्तं च तं सलिलाप्लुताभ्यां नयनाभ्यां पश्यन्ती भगवती कामाक्षी वात्सल्यभरिताऽब्रवीत् 'वत्स! वृद्धाया मे त्वमेवैकाऽसीर्यष्टिर्मदवलम्बनभूत, स त्वं यासि, किञ्च प्रतिजानीहि प्रतिहायन सकृन्मद्दर्शनाय समागमिष्यसि, तेनैव मे जीवनम्, अथ च मम निधनकालेऽपि त्वं मम सन्निधावेव भविष्यसि'। शंकरोऽपि तथेति प्रतिज्ञाय जरतीं मातरं विरहय्य वारिधारां नयनाभ्यां मुञ्चन स्व गृहान्निर्जगाम।

अथासौ नर्मदारोधसि तपस्तपत' समस्तनिगमागमपारीणस्य ब्रह्मज्ञाननिधे. श्री गौडपादशिष्याग्रगण्यस्य श्री गोविन्दपादस्याश्रमं समाजगाम, 'मां शिष्यत्वेन स्वीकुरु' इति चाभ्यर्थयामास। श्रीगोविन्दोऽपि तं रत्नाकरमिव सकल-गुणमणीनामाकर ज्ञात्वा कमपि दिवश्च्युत देवांशमिव मेने। तस्मै दीक्षां ददौ। प्राब्रवीच्च 'मेधाविन्! सकलविद्याभिज्ञोऽसि, वाराणसीं याहि, सौगतमत निरस्याद्वैतमत प्रचार्य धर्म संस्थापय, ब्रह्मसूत्राणां वैयासिकानां भाष्यं विरचय' इति। अथ धृतकाषायदण्ड. शंकराचार्येति समाख्यया सम्बोधितो बालयतिवरोऽसौ वाराणसीं प्रययौ॥

वादिविजय.

वाराणस्यां समेत्यासौ तत्रत्यान् वादि-दिग्गजान् स्वशास्त्राणामगाध-पाण्डित्यबलेन केसरीव वादद्रुमदान् पराजेष्ट। अस्य प्रखरपाण्डित्यकीर्ति' सर्वत्र प्रससार। अत्रैवैन शिष्यसंघाः

पर्युपासन्त । इदञ्चानुश्रूयते यद्भगवान् व्यासोऽप्यस्य पाण्डित्यबल परीक्षितु शिष्यत्वमुपेयिवान् प्रशशंस चैनमभ्यनन्दयच्चाशीर्भि । ब्रह्मज्ञानोपदेशप्रवणमेनमेकदा निरीक्ष्य कोऽपि पण्डितोऽगादीत्—

'चित्रं वटतरोर्मूले वृद्धा' शिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥'

इति ।

वाराणस्या भगवत शङ्करस्य शिष्यवर्गेषु पद्मपाद प्रसिद्धः । स चैनमन्वगयासीत् । वाराणसीत' श्रीशङ्कर प्रयाग समुपागमत् ।

तत्र स्वगुरूनेव बौद्धवादिनो विजित्य भट्ट

मण्डनमिश्र सदने श्रीकुमारिलस्तत्प्रायश्चित्त-चिकीर्षया तुषराशिसमुद्दीपिते जातवेदसि प्रवेष्टुं समुद्यत आसीत् । स च शंकर सौगतवाद समूलमुत्पाट्याद्वैतवाद च प्रचारयितु पुन प्रैरयद्, आशिषोपि व्यतरत् । अवदञ्च माहिष्मत्यां मीमांसकाग्रगण्य मच्छिष्य मण्डनमिश्र वादे जय तत्पत्नी महाविदुषीं भारतीं मध्यस्थां विधाय ।

अथाचार्यशंकरो माहिष्मतीमभिजगाम । तत्र च मण्डनस्य सदनं मार्गयन् कामपि तत्प्रतिवेशिनी पप्रच्छ, 'क्व श्रीमतो मण्डनपण्डितस्य गृहम् ?' सा च मन्दं हसन्तीद प्रत्यब्रवीत्—

'स्वत. प्रमाणं परत प्रमाणं कीराङ्गना यत्र गिरो वदन्ति ।
द्वारस्थनीडान्तर सन्निरुद्धा अवेहि तन्मण्डनपण्डितौक ॥'

आचार्यशंकरस्य नाम पण्डित-मण्डली-मण्डनोमण्डनः पूर्वमेवाश्रृणोत् । स चैनं विधिवत्सभाजयित्वाऽस्य वादविजिगीषां

स्वीचकार । अथ द्वयोर्वादे मण्डनस्याशेषशास्त्रविशारदा श्रीभारती मध्यस्थतामशिश्रियत् । मण्डनस्तु पराजितः । भारत्यपि स्वपत्यु पराजयमसहमाना श्रीशंकर वात्स्यायनमधिकृत्य विवदितुं प्राह, असौ बालब्रह्मचारी तदनभिज्ञो वपस्यावकाश ययाचे । सा च तदनुमेने । ततोऽसौ परकायप्रवेशविद्ययाऽमरूकस्य राज्ञो मृतदेहं प्रविश्य समामेकामन्तःपुरे कामशास्त्ररहस्यानि ज्ञात्वा स्व शिष्यै रक्षितं निजदेहं पुन. प्रविश्य मण्डनभवनमुपाजगाम। किञ्च विचक्षणा भारती स्वयमेव विनावादमधुना पराजय स्वीचक्रे । मण्डनमिश्रस्य पराजयेनाचार्यशंकरस्य ख्यातिश्चन्द्रिकेव समस्ते भारते प्रससार ।

तदानीं धर्मभ्रष्टाना सौगतानां प्रधान आश्रयभूत सुधन्वानाम कोऽपि नरपतिरासीत् । आचार्यशकरस्तस्य पुरे समेत्य 'वादिदिग्विजयाय मही चरामि, वादञ्च याचे भवतां सौगतसुधीभि' इत्यवोचत् । अथ सौगताचार्यानामन्त्र्य राजा शंकरेण सह वाद कर्तुं प्राह । अस्य राज्ञ एको मन्त्री रिक्तमेव पिटकमेक समानीय मध्ये सभं संस्थापयमास । ततश्च 'किमस्मिन्नस्ति' इति पण्डितान् पप्रच्छ । तेऽपि 'इदमस्ति, एवमस्ति' इति धीकल्पितमेवाभणन् । तत श्रीशकरः 'अत्रैक कृष्णसर्पोस्ति' इति प्राह । तत्र समं सचिवेन सर्वे जहसुः । यदा पिटकपिधानमुद्घाटितं तत्र सत्यमेव भीषण एको व्यालोऽभवत् ।' श्रीशंकरस्यामानवीय बलं तेज. पाण्डित्यञ्च ज्ञात्वा सुधन्वा स्वीकृत्य वैदिकधर्मं तस्य शिष्यो बभूव । ततस्तेन राज्ञा वृथावाद-दर्पिताः सौगता दण्डिता

सुधन्वा नृप. शङ्करस्य शिष्योऽभूत्

परमाचार्यस्तं प्रत्यादिशत, सौगतांश्च तान् प्रचालयामास वैदिकाध्वनि। अनेन भगवत शंकरस्य सौगतवादिविजय-कीर्तिर्दिक्षु प्रासरत्।

उग्रभैरवो नामैकः कापालिको नरबलि-प्रदित्सया श्रीशंकर मानवोत्तमं मत्वा रहसि समेत्य प्रार्थयन्, "अहं स्वदेवतां प्रसादयितुं भवन्तमेव बलिदानाय वरं मन्ये, त्वं मे कामनां पूरयितुमर्हसि" इति। शंकरो हि भगवान किञ्चिन्स्मित्वा 'तथास्तु' इति प्रत्याह। अथ कापालिस्तं चण्डिकायतने यावदेव करवालेन प्रहर्तुमुद्यत आसीत्तावदेव भगवत शिष्य पद्मपादस्तत्रागतस्तस्य खड्गं न्यरोधयन्। कापालिकस्य शिर स्वयमेव भूमौ निपपात।

कापालिक-दुष्टता

भगवत श्रीशंकरस्य जननी कामाक्षी प्राणोत्क्रमणकाले स्वसुतस्य सस्मार। तदानीं योगबलेनैव रेवारोधसि माहिष्मतीं नगरीमधिष्ठितोऽसौ स्वमातु सविधे कालपीग्राम प्रापत्। 'श्रियाश्लिष्टो विष्णु' रित्यादि स्तोत्रैः भगवन्तं प्रार्थयन् मातुरन्तिमां कामनां कृष्णदर्शनरूपामपूरयन्। समाप्य चौर्ध्वदैहिकक्रियां नत प्रययौ।

मातुर्महाप्रस्थानम्

वैदिक-धर्मध्वज दोधूयमानोऽद्वैतमूर्ति श्रीशंकर शैलराजादाविन्ध्य विन्ध्याच्चा सागरं सौगतान् वादेषु जयन् धर्मञ्च संस्थापयन् बभ्राम। अस्य शिष्यास्तत्र तत्र मठान् स्थापयामासु। भगवता शंकरेण स्वगुरोराज्ञया ब्रह्मसूत्राणां भाष्यं विरचितम्।

निर्वाणम्

एतच्च संस्कृतग्रन्थागारस्यामूल्यं रत्नम्। अत्र श्रीशंकरस्यालौकिका प्रतिभा गम्भीरञ्च वैदुष्यं स्पष्टम्।

अथ त्रयस्त्रिंशद्वर्षदेश्य एवाशाश्वतमिदं शरीरं विहाय बदरिकाश्रमे शाश्वतं पदं प्रविवेश। एवं हि विदुषां मतं यदि भगवान् शंकरो न प्रादुरभविष्यत् तदेदानीमत्र भारते ईसाई धर्मो वा म्लेच्छधर्मो वा प्राचरिष्यत्।

---

## महर्षेः श्रीदयानन्दस्वामिनो जीवनोदन्तः

विमर्शसारः—१. ईसाईधर्मप्रचारखण्डनम्। २ हिन्दुजातेः कुरीतयः। ३. धर्मभ्रंशः। अखण्डब्रह्मचर्यम्। ५ वेदानां प्रचारः। ६ आर्यसमाजस्थापना।

इतः सपादशतहायनेभ्यः पूर्वं यदा खल्वांग्लशासनं सकलेऽपि भारतखण्डे व्यजृम्भत सहैव च तेन पाश्चात्यसभ्यताऽपि तावदांगलभाषाया आंगलाचारादेराश्रयं प्राप्य भारतीयान् तरुणान् नवोज्ज्वला विहितभूषा रूपाजीवेव[1] वशयामास। भारतीयाश्चांगलशिक्षादीक्षिताः पाश्चात्यसभ्यतारागेणारक्ता आंगलम्मन्या अभूवन्। इतश्च ईसाईधर्मप्रचारका अपि सर्वत्र शलभसंघवत् प्रसृता अज्ञान् जनान् देवान् प्रकटं निन्दन्तः स्वधर्मवागुरासु[2] बाङ्वलवेणुनिनादेनैणानिव[3] वराकानजस्रं न्यपातयन्। हिन्दवोऽपि

देशदुरवस्था

१ वेश्या २. जालेषु ३ मृगान्।

बालविवाह-बहुविवाहसलग्नाः 'न नार्योऽध्यापनीया न शूद्रा पालनीया.' इति दुराग्रहग्रहिलाः स्ववेशं स्वभाषां स्वसंस्कृतिमार्थविगणय्यावनतिगर्तेषु पतनोन्मुखा एवाभूवन्। नासीत्तदा कोऽपि तेषां समुद्धर्ता। सन्तोऽपि केचन यत्र कुत्रचन न तावदीसाईधर्माचार्याणा प्रतिपत्तित्वं गत्वा विद्याबलेन वाग्बलेन वा स्वजातिं त्रातुमक्षमा मृणालतन्तव इवोन्मार्गगं गजम्। आसीदेष महान दुरवस्थाग्रस्तः समयो भारतस्य विशेषतश्च हिन्दुजातेरार्यसंस्कृतेश्च।

स्वामिनो दयानन्दस्य जन्म सौराष्ट्रदेशस्य मौरवी राज्यान्तर्गत टङ्काराख्ये ग्रामे शशिवसु वसुशशिमिते (१८८१) वैक्रमे सम्वत्सरे विप्रकुल एकस्मिन् बभूव। अस्य च जन्मनाम मूलशङ्कर इत्यासीत्। एकदा पावने शिवरात्रिपर्वणि शिवदेवायतने शम्भोरर्चनावसरेऽयमपि स्वजनकेन सह गृहीतव्रत शिवं समर्चयितुमुपातिष्ठत। निशायां तत्र तन्द्राभिभूतेष्वन्येषु पञ्चदशाब्ददेशीयो मूलशंकरो जागराञ्चकार। स तत्रैक मूषिकं शिवलिंगेस्थं माल्यमर्घ्यादिकं च खादन्तं ददर्श। अनेन बालकस्य मूलशंकरस्य पर्यवर्तत हृदय मूर्तिसपर्यासु श्रद्धापि व्यपेता। यथा मृतं नरं निरीक्ष्य भगवतो बुद्धस्य मनो विरक्तमभूत्, यथा च पादपात्पतन्तं सेव पर्यालोच्य न्यूटनमहोदयस्य हृदि भूमे गुरुत्वाकर्षणशक्तिधारणा पदं न्यधत्त, तथैव मूषिकस्योच्छृङ्खलत्वमपि मूलशंकरस्य मनसि कमपि नवीनमेवानास्थामयं जीवन-विपरिवर्तकं भावं बिभराम्बभूव।

जन्म बाल्यञ्च

अथ किञ्चित्कालानन्तरमस्य प्रिया स्वसा पितृव्यश्च पञ्चत्व-

मापतु । एतेनास्य मनसि मृत्युभीतिरपि

संन्यास

समुदपद्यत । मृत्युञ्जेतुमसावविगणय्य स्वगृहविभूतिं सर्वं संन्यस्य प्राव्राजीत् । दयानन्द सरस्वतीति परिव्राजकानुरूपां संज्ञां च लेभे । अथ ज्ञानपिपासयाऽसौ आनर्मदारोधसो हिमवतो गह्वरं यावद् ग्रामं ग्रामं नाल्पान् परिव्राजकान् विदुषश्चोपाजगाम परं न क्वाप्यस्य ज्ञानतृट प्रशशाम । गृहीतब्रह्मचर्यस्तपोनिष्ठो यमनियमानुवर्ती श्रीदयानन्दः पर्यन्ते श्रीमथुरानगरीं प्राप । अत्रैव श्रीपरिव्राजकाचार्यस्य स्वामिनो विरजानन्दस्याश्रमे निवसन् तस्य शिष्यत्वमुपेयिवान् । त्रीणि हायनानि वेदान् श्रीस्वामिविरजानन्दान् समधीत्य शास्त्राणि च पर्यालोच्य गुरुदक्षिणायै तमभ्यर्थयामास । स चावोचत् 'वत्स ! न मे द्रव्येण प्रयोजनम्, किञ्च निरीक्षस्व भारतस्यैदानीन्तनीं दुरवस्थाम्, पाखण्डधर्मान् विनाश्य वेदोक्तधर्मान् त्व प्रचारय, आर्यसंस्कृतिं पुनरुन्नमय, मानवजातेः कल्याणाय यतस्व, त्रायस्व च स्वहिन्दुजातिमवनतिकूपप्रपतनात्, इत्येषैव मेऽभीष्टा गुरुदक्षिणा, अस्ति त्वयि किमपि बलं येन त्वामेवाहमत्र प्रेरयामि" इति । दयानन्दोऽपि महात्मा गुरुणा सह तथाकर्तुं प्रत्यज्ञासीत् ।

अथ स्वामी दयानन्दो महात्मा हरिद्वारं समाजगाम । तत्र महति जनसमूहे हिन्दुजाते र्दुर्दशां वर्णयन्

वेदप्रचार

वैदिकधर्मानुसरणमुपदिदेश । अथ वाराणसीमुपेत्य तत्रत्यैरनेकैः सुधीधौरेयैः सह शास्त्रचर्चां विधाय वैदिकधर्म एव निःश्रेयसकर इति युक्तिभिः

म्प्रमाण प्रत्यपादयन् । ततोऽसौ बंगदेशं गत्वा कलिकात्तायां जनानां विपुलसमूहे पाखण्डपण्डितानां दम्भान् व्यक्त परिगणयन् वेदानां प्रशस्नमवदातञ्च मार्गमनुवर्तयितुं व्याचचक्षे । एवं नगरान्नगर प्रान्तात्प्रान्तञ्च धर्मध्वजमावहन् महात्माऽसौ यत्र यत्रागात्तत्र तत्र तत्काले धर्मध्वंसका पाखण्डिनो विशेषतश्च ईसाईमत-प्रचारणचतुरा जल्पाकाः पादरीपण्डिता अत्रस्यन्त । न च तेषां प्रचारणपटीयस्यपि वाणी श्रीस्वामिन पुरत. प्रासरन् । तर्क-युक्तय स्वामिनो मर्मस्पर्शिन्यो मुखमुद्रणनिपुणा आसन्वादिनामाततायिनाञ्च । इदमासीत्तेषां त्यागस्य ब्रह्मचर्यस्य तपसश्च बलम् । असौ 'क्रिया केवलमुत्तरम्' इति स्वकर्मभिरेव स्ववाचां साफल्यमद्रढयन् । इदं विश्वसनीय यदि स्वामिपादानमाविर्भावो नाभविष्यन् तदा भारतस्य विपुला जनानां संख्या 'ईसाई' मतानुयायिन्यभविष्यदधुना ।

न केवलं धर्मप्रचारायैव स्वामिपादै र्यतितमपितु हिन्दुजातेः कुरीतिनाशायापि । बालविवाह-बहुविवाहयोर्निरोध., विधवानां विवाहः, नारीशिक्षा, अस्पृश्योद्धार , इत्येवंविधा अर्वाक्कालोद्भवैर्देशबन्धुभिर्नेतृभिर्ये प्रचारितास्ते तु दयानन्देन महानुभाववता पूर्वमेव प्रचार्य दृढीकृता आसन् । यदा कांग्रेसस्य जन्मापि नाभूत्, स्वराज्यमिति शब्दोऽपि नास्पार्क्षीत् कर्णकुहरं लोकानाम्, तदा स्वामिपादैः स्वरचित 'सत्यार्थप्रकाशे' अखण्डस्य स्वाधीनस्य च शासनस्य महत्त्वं प्रतिपादयद्भि' स्वराज्यं सडिण्डिमघोषं व्याख्यातम् । नैतावदेव ।

गुर्जरप्रदेशीयां स्वजन्मभाषामवहेल्यामौ हिन्दीभ.षायामेव

वेदानां भाष्यं स्वोपज्ञं सत्यार्थप्रकाशञ्चारीरचत्। संस्कृतभाषाया अनेका पाठशाला उद्घाटयत्। हिन्दीभाषाञ्चानुशीलयितुं प्रैरयल्लोकान्। एतदर्थमेवासौ (१६३१) शशिवह्निनन्दैकमिते विक्रमहायने मुम्बापुर्यां 'आर्यसमाज' इत्यभिधान सघ प्रत्यस्थापयन्। अधुना चार्यसमाजस्य शाखाः प्रशाखा भारते विदेशेष्वपि सन्ति। तथा च पञ्चनदे समाजेनानेन या सेवा विहिता हिन्दूनां जातेर्भाषाया विद्याया धर्मस्य च तां के न सोरस्कारं स्वीकुर्वते केषां वा सा तिरोहिता? अयं तावच्छ्री स्वामिपादानामेव दृढपरिश्रमस्य कठोरतपसस्त्यागस्य च परिणाम.।

आर्यसमाज-स्थापना

श्रीदयानन्दः स्वामी खवेदांकशशांकमिते (१६४०) विक्रमवत्सरे दीपावली-पर्वणि अजमेरनगर्यां 'यद् यत् करोषि भगवन् हितमेव तन्मे' इति वदन् नश्वरं देहमुज्झित्वा सायुज्यमापन्। कैश्चिद्दाम्भिकैरसौ विषं पायित इति प्रचलति प्रवादः। भवतु।

महाप्रयाणम्

'यद् यद् विभूतिमत्सत्व श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्॥'

इति भगवदुक्तदिशा श्रीस्वामी नूनं कोऽपि महात्मैवेह भारते समवातरत् पाखण्डखण्डनाय संस्कृतिसंरक्षणाय च।

# वर्तमानयुगस्य महापुरुषः

# महात्मागान्धी

विमर्शसारः—१ अवतार-धारणा। २ विदेशख्याति। ३ कांग्रेसकार्याणि। ४ अहिंसाव्रतम्। ५ अस्पृश्योद्धारः। ६. ग्राम-सेवा। ७ हिन्दुमौसलैक्य-प्रयत्न। ८ प्रशस्त निधनम्।

उपक्रम.

सर्वस्मिन्नेव मेदिनीपृष्ठे कस्य कीर्तिपताका दोधूयमानेव विराजते? भारतेऽस्मिन् ग्रामे ग्रामे नगरे नगरे च कस्य यशांसि गीयन्ते शिशुतरुणवृद्धैः सर्वैः? क बुद्ध इव ईशु-मसीह इव चावतारधारणयाऽद्रियते? हन्त! एप भारतवसुन्धरा-मौलिमुकुटायमानोऽहिंसावतारो युग-प्रवर्तक कलितस्वतन्त्रताविग्रह इव कोऽपि देवांश-सम्भूतो नरवरिष्ठो महात्मा 'गान्धी' इति ख्यातनामा महापुरुष। अस्यैव मानवोत्तमस्य जीवनोदन्तो महाप्रभावश्चेह प्रकृत। तदेवात्र समस्य विवक्षाम.—

जन्म

असौ नरवरः षड्विशत्युत्तरैकोनविंशतिशतमिते विक्रमसम्वत्सरे कार्तिककृष्णप्रतिपदि सौराष्ट्र-प्रान्तान्तर्गत पोरबन्दराभिधे पत्तने निवसत. श्रीगुणनिधे कृतिनो महामहिमशालिन कर्मचन्द्रमहोदयस्य 'पुतलीबाई' इति नामधेयायां पत्न्यां सतीव्रतपरायणायामजायत। पिता चास्य मोहनदास इति नामाकरोत्।

राजकोटाख्ये नगरे महाविद्यालयशिक्षाम् अपरिसमाप्यैवाप्यं

विधानपरीक्षामुत्ततुं पारेर्णवं गन्तुमीहाञ्चक्रे। परं नास्य जननी तदनुमेने। अथ स्वपुरोधसा प्रेरिता सा

शिक्षा

साध्वी मोहनमादिदेश गन्तुम् इंगलैण्डम्। किञ्चैद प्रत्यजानात् 'मांसं मद्यं मैथुनम्, इति माद्यत्तरं परिहरिष्यामि द्रव्यत्रयम्' इति। श्रीमोहनस्तु सम्यक्तया तामेतां प्रतिज्ञामपालयत्। विधानपरीक्षामुत्तीर्यासौ स्वदेशमागत्य प्राड्विवाकवृत्त्या कञ्चित् कालमवर्तत। अथाफ्रीकावासिभिः कैश्चिच्छ्रेष्ठिभिरामन्त्रितोऽयं स्वगेहिन्या 'श्रीकस्तूराबाई' इति नामधेयया सार्धं तत्र गतः। तत्र च विंशतिवर्षाणि न्यवसत्। तत्रत्यान् भारताभिजनान् कारावन्धनमप्यवाप्य सत्याग्रहायुधेनैवामोघेन स्वतन्त्रानकारयत्।

अफ्रीकायां कृतेनाद्भुतकर्मणा श्री मोहनदासस्य ख्यातिर्भारते प्रासरत्तथापि शिष्टा एवैनं तदाज्ञासिषुः।

भारते

अथ प्रथम विश्वयुद्धस्यान्ते राज्याधिकारिभिः 'रोलट ऐक्ट' इति सर्वजन-द्विष्टं विधानं प्रावर्ति। तदा तद्विरोधाय श्रीमोहनदासः सर्वान् समघटयत् भारतीयान्। सर्वे चाविचार्य जातिधर्मादिभेदम् एनमन्वगच्छन्। तदा प्रभृत्येवास्य जनतायां महती ख्यातिरजायत। सर्वे चैनं 'महात्मा' नाम्ना समबोधयन्।

अथासहयोगादोलनकाले महात्मा षट् वर्षाण्यवधीकृत्य कारायां निरुद्धः परं गदग्रस्ततया द्विवर्षानन्तरमेव मोचितः। ततः स बलग्रामे रचितस्य काग्रेस-महासम्मेलनस्य सभापति-पदमधिश्रयन् ग्रामोद्धारं

खादीप्रचारञ्च कांग्रेस-कर्तव्येषु मुख्यतया निरधारयत्। एतदर्थमेव साबरमत्यां स्वाश्रमं समस्थापयत्। यन्त्रनिर्मित-वस्त्र-परित्यागाय कैश्चिद्विदेशस्थैः स्वदेशस्थैश्च भृशं जुगुप्सितोऽयम्, परं नैष स्व निश्चयाद् व्यरंसीत्। अथ भारतीयास्तदानीमस्योपदेशधाराभिर्जागरूका संवृत्ताः। बहिर्देशजा अपि तदैनं सर्वमानवोत्तमं निरचैषत।

महात्मनोऽस्यास्पृश्यानामुद्धरणे महानुद्योगो व्यजृम्भत। अयं 'हरिजन' इत्यभिधेयमेकं साप्ताहिकं पत्रं समपादयत्। यदांऽगलशासकाः निर्बलयितुं हिन्दुजातिं तदङ्गभूतान् सप्तकोटि-संख्यानन्त्यजान् पृथक् चिकीर्षन्तो वर्तन्त तदा प्रायोपवेशं समाश्रित्य महात्मनोऽस्य प्रबलेन व्रतेनैवांगलाधिकर्तारस्तं विचारं पर्यहरन्।

अद्भुत प्रभाव

महात्मा च वर्षाधिकं कालं ग्रामाद् ग्रामं नगरान्नगरं पर्यटन् हरिजनेति सम्बुद्ध्यमानान् अन्त्यजान् देवमन्दिरेषु निराबाध-प्रवेशान् अकरोत्। अयं च महात्मनोऽस्य महानुपकारभारो हिन्दुजातौ।

महात्मनो गान्धिमहोदयस्य हृदयं वराकाणां भारतीयानां ग्रामीणानां दयनीयतमा दशापि व्यद्रावयत्। स च सप्तलक्षेषु ग्रामेषु निवसतां तेषामार्थिकीं दशामुन्नमयितुमेव 'खादी' कार्यं प्रारभत। स्वयञ्च यावज्जीवं खादीकौपीनमेवाधारयत्।

नवनन्दांकेन्दुमिते (सं० १९९९) 'भारतं परित्यजत' इति कांग्रेसेन प्रचारितमुपदिशन् महात्माऽन्तिमावसरे पुनरपि कारायां बद्धोऽभवत्। परं किंचित्कालानन्तरमेव पुनर्विसर्जितः। अथ वंगदेशे

'नौआखली' प्रदेशे यवनैः पशुमारं मारिता हिन्दुजना तदा दया-मयोऽय स्वयं तत्र ग्रामाद्ग्रामं पादचारेणैव धाराधरसमये [1]किलान भूभागान् क्राम्यन् हिन्दु-मुस्लिमैकतामुपदिशन सर्वानेव तत्रत्यान भ्रातृभावभरितान् व्यधात्। अथ मगधेऽपि हिन्दुजनैर्मुहम्मदा अहन्यन्त तदापि महात्मा मगधदेशं समागत्य तत्रत्यान पर सहस्रान मुसलमानानरक्षन् निर्भीकांश्चाकरोत ।

(२००४) चतुरुत्तरद्विसहस्रस्य संवत्सरस्याषाढ़े मासि भारतं स्वातन्त्र्यं लेभे । तदानीं पञ्चनदे महान् जनसंहारो लुण्ठालुण्ठि च पर.सहस्रान् मानवान् धनगृहहीनानकुरुनाम् । अथ कलिकात्तायां महत्यशान्तिर्व्यजृम्भत । महात्मा गान्धी तत्राधावत् । तस्य शान्त्यु-पदेशैः प्रायोपवेशभीत्या च तत्रत्या म्लेच्छोच्छेदाय बद्धकटयोऽपि जना स्वशस्त्रास्त्राणि महात्मने समर्प्य प्रतिज्ञाय च नृशंसतानाचरणं व्यरंसिषु क्रौर्यात् । ततो दिल्लीनगर्यामपि तथैव वृत्तम् ।

महात्मा गांधी कृशकायस्त्वगस्थ्यावृत एवासीत् । एतस्य शरीर-भारोऽपि पञ्चपञ्चाशत्प्रस्थमित[1] एवाभवत् । स बहुकालं केवल-मजापयसैवावर्तत किञ्चित्फलसहकृतेन ।

उदारं चरितम् असौ चार्धसंवीत एव भारतीयमुनीनां मूर्तिमान् विग्रह इव, शान्तिप्रियोऽहिंसानिरतो जिन इव साक्षात्, महात्मा, सत्यवादी, धर्मात्मज इव, स्पृहणीय-चरितो, गुणोदारो, निष्कामकर्मयोगी, गीताचिन्तनलीनो, रामरामेति जपने जापने च पटीयान्, किं किं न लोकोत्तरं कृतवान्? 'यत्र

---

[1] सेर

सूर्योऽपि न जातुचिदस्तमयते' तदीदृश ब्रिटिशसाम्राज्यं विनाति-रक्तपातेन ऋते शस्त्रास्त्रप्रयोगेभ्यो भारतान्निष्कासितम् । असौ तेषामेकोऽभवन् ये पृथ्वीखण्ड परिवर्त्यान्यया दिशा गत्या च स्थाप-यन्ति । न ह्येवंविधा महात्मान प्रतिशताब्द जनिं लभन्ते । गान्धी महाभागस्याद्भुतानि कर्माणि ध्यायन् महान् वैज्ञानिक. 'आइन्स्टीन' महोदय एकदाचकथन् 'इतोऽग्रे लोका ग्नद्विश्वसितु नोद्यता भविष्यन्ति यदासीदेक''कोऽपि गान्धीनाम धृतमूर्ति इति ।

न केवलं भारतमेवापितु समस्त जगतीतलमेवाहिंसाया साफल्य शिक्षयन्नसावुपाकरोत् अदर्शयच्च सत्यस्य शान्ते प्रेम्ण-श्चोदारं पन्थानम् । "परमाणुवमाद् अहिंसैव महत्तमस्त्रममोघम्' इति हि गान्धीमहात्मा स्वोदारैश्चरितैरद्रढयत् ।

राष्ट्रपितेति व्यपदेशङ्गतो महात्मा गान्धी राष्ट्रकार्यमवसाय्य धर्मोन्मादविजृम्भितं वैमनस्यमुन्मूलयितुं प्रयतमानो दिल्लीनगरे हरिकीर्तनऽपरायण आसीत् । अथैकदा

अन्तकाल.

चतुरधिकद्विसहस्रतमे विक्रमवत्सरे माघ-मासे (जन्वर्या त्रिंशत्तमे दिने, पञ्च-वादनवेलायां) यदा स बिरलाभवन प्रार्थना कर्तुमगच्छन् तदानीं नात्थूरामगोडसे नामधेयेन स रिवाल्वरास्त्रेण व्यापादित. । तदानी-मेव समस्ते क्षितिमण्डलेऽस्य निधनोदन्तं श्रुत्वा सर्वे शोकब्रुडिता अभूवन् पाश्चात्येष्वपि प्रदेशेषु राष्ट्रध्वजा अवानम्यन्त पञ्चकला: पर्यन्तम् । अन्येद्युर्दिल्ल्यां यमुनाकूले राजघट्टेऽस्य दाहक्रिया विहिता । ततो भारतेऽन्येष्वपि प्रदेशेषु महात्मनोऽस्य चिताभस्म

समारोहं पवित्रनदीषु प्राक्षिप्यत । भारते त्रिवेण्यां श्रीनेहरू महोदयेन स्वयमेतस्य चिताभस्म प्रक्षिप्तम् तदा तत्र लक्षातीता लोका अभूवन ।

एषा तावल्लोकस्य गति । संसारस्य महापुरुषाणामीदृगेव पर्यवसानम् । ईशुमसीह. शूले समारोप्य व्यापादित । यवनदेशस्य महापुरुष 'सुकरात' विषं पाययित्वा हत । किञ्च तेऽद्यापि जीवन्त्येव मृता अपि ।

---

## राष्ट्रपतेः श्रीराजेन्द्रप्रसादस्य जीवनोदन्तः

**विमर्शसारः**—१ सम्पत्ति शालित्वम् । २ अध्ययन-पाटवम्, कार्यक्षमता । ३ त्यागो देशसेवा कारावासश्च । ४ लोकप्रियता, सरल-स्वभाव । ५ विधान-परिषद प्रधानता, राष्ट्रपतिसमादर ।

अस्माकं राष्ट्रपते विश्व-विदितस्य भारतीय-शासन-सूत्रधारस्य डाकटरोपाधिधारिणो मानवमणे श्री राजेन्द्रप्रसादस्य जन्म मगधप्रान्तस्य छपरा[1] निगमान्तर्वर्तिनि जीरादेई

जन्म शिक्षा च

ग्रामे महत्येकस्मिन् कुलीने कायस्थगृहेऽभूत खवेदनन्दैक सम्वत्सरस्य (१९४०) मार्गशीर्षे मासि । शैशवादेव उर्दू हिन्दी संस्कृत भाषा अभ्यस्यन्त । अष्टादशवर्षदेशीयोऽसौ एन्ट्रेन्सपरीक्षामुत्तीर्य क्रमेण कलिकात्ता विश्वविद्यालयात् एफ ए, बी ए परीक्षे च प्रथमायां श्रेण्यामुदतरत् । अथ ततोऽयं वैधानपरीक्षामपि प्रशस्तैरङ्कै रुत्ततार ।

---

[1] जिला ।

स्वररसांकशशांकाब्दे (१९६७) वैक्रमे कलिकात्तानगरस्य बृहत्तन्त्रपतिसदने[1] विधानकार्यमारेभे। क्षिप्रमेव चास्य विधानपाटवयश सर्वत्र प्रससार। ततो नेत्रर्षिनन्दैकवत्सरे (१९७२) यदा पाटलिपुत्रेऽपि बृहत्तन्त्रपति सदन प्रातिष्ठत तदा तत्रैव स्ववृत्तिमार्जत्।

देशसेवा

महामतिर्गोपालकृष्णगोखले महोदयोऽमुं नेत्ररसांकशशिवत्सरे (१९६२) स्वप्रतिष्ठापितायाः 'भारतसेवक समितेः' सदस्य स्वीकृत्य तत्र प्रैरयन् कार्यं कर्तुम्। परमसाविच्छन्नपि ज्यायसः बन्धोरादेशमनुवर्तयितु न तथाऽकरोत्। अथासहोद्योगचेष्टायां सर्वत्र भारते व्याप्तायामसौ स्वीयां सहस्राधिकायदात्रीं विधानवृत्ति तृणाय मन्यमानः श्री गान्धिमहोदयैः सह कार्यञ्चकार। कांग्रेसस्य कार्यकारिण्याः समितेः सदस्यपदमध्यास्त।

खनन्दांकशशांकसम्वत्सरे (१९९०) मगधप्रदेशे दारुणतर क्षितिकम्पोऽभून्। तत्रासंख्या जनाः क्षणेनैव गृहधनहीना अभवन्। एतेषु दिवसेषु राष्ट्रपतिर्गदाक्रान्तोऽभवत्। तथापि स निरन्तरं महता श्रमेण दीनानां भूकम्पपीडितानां दयनीयया दशया खिन्नचेतोऽविगणय्य स्वस्वास्थ्यं धनेन कर्मणा च साहाय्यमकार्षीन्। अस्यैतया सेवया कृतसाहाय्या जना एन तस्मिन्नेव वर्षे कांग्रेसस्य सभापतिपदमध्यारोप्यानृण्यमिव प्राप्तुं स्वप्रेम स्वीयञ्च सम्मान प्राचीकरन्। तस्मिन् वत्सरे परमया योग्यतयाऽसाधारणममु कार्यभारमुद्वहन्नसौ कैर्न सगौरवमश्लाघ्यत ? शरांकग्रहैकवत्सरे (१९९५) यदा प्रथित-

---

१. हाईकोर्ट।

यश श्रीनेतृवर सुभाषचन्द्र महाभाग कांग्रेसस्य साभापत्यमज-हात्तदा राजेन्द्रप्रसाद एव पुनरपि सानुरोध कांग्रेसस्य सभापतित्वम-ध्यासित । एषोऽभवदस्य सद्गुणानां त्यागस्य दक्षतायाश्च प्रभाव एव यः सर्वानावर्जयन्मानवान् ।

अथ नन्दग्रहांकशशांकसम्वत्सरे (१६६६) यदा 'भारतं त्यजता-ङ्गला' इति समस्त विषयव्यापी जनविद्रोहो बभूव , ब्रिटिशाधि-कर्तृभिरसंख्या स्वाधीनता-संग्रामस्य निरायुधा भारतीया भटा कारासु क्षिप्तास्तदा द्विपदेन्द्रो राजेन्द्रोऽपि कारालयङ्गतस्तत्र चासौ यद्यपि न कायेन स्वजाति स्वदेशञ्च सेवितुमपारयत्तथापि स्व-कीयामात्मकथां परिविस्तृतां 'अविभाज्यं भारतं' इति गम्भी-रार्थं ग्रन्थञ्चारचयत्। यदा द्व्युत्तरद्विसहस्रवत्सरे लार्डवेवलाख्येन वायसरायमहोदयेनान्तरगशासनपरिषद् प्रतिष्ठापिता तदा श्रीराजेन्द्र प्रसादस्तत्र केन्द्रीय शासने खाद्यकृषिसचिवपदमलञ्चकार । खाद्य-कृषिसचिवपदस्योद्वहनं न केवल कर्दमयेष्वेव केदारेषु कलमहलेन कर्षणं नाम किञ्च किमपि विशिष्टमेवान्यदिति हि स्वकर्मकौशलेन व्यक्तं प्रदर्शितमेनेन। अमुष्मिन्नेव हायनेऽसौ 'भारतीय विधान-परिषदोऽपि प्रधानपीठममण्डयत् । त्रीणि वर्षाणि पदमदो भूषयता ऽनेन स्वीयमनन्यं प्रज्ञाबलं कर्मकौशलञ्च प्रादर्शि ।

अथ यदा भारतीय गणराज्यस्य ससमारोहं स्थापना घोषणा चाभवत्तदा श्रीराजेन्द्रो देवेन्द्र इवामरसिंहा-

राष्ट्रपतिः

सनं समलञ्चकार राष्ट्रपतिपदम् । अद्याप्यसौ स्वसुकीर्त्या धवलितवसुन्धरावलयो निज्ञय

सकलगुणानां दयासिन्धुर्बन्धुः प्रजानां पदमदोऽलंकुर्वाणः शास्ति भारतम् ।

राष्ट्रपते राजेन्द्रप्रसादस्यातुलनीयान् गुणगणान प्रह्वेन शिरसा गद्गदेन च हृदयेन मुखरया च गिरा केन स्वदेशरागरञ्जिता गुणग्राहिणो गायन्ति ? असौ वदान्यो मान्यो

प्रकृति

प्रकृत्या चारु सरलश्च । अस्याकृतिः शान्तिस्रोत इव कमपि मधुरमधुर चारुविचारामृतं रसं स्रवति । सरलसरलाप्यस्य वाक् गम्भीरार्था दूरदर्शिता-सम्भृता च । न चास्मिन्नभिमानगन्धोऽपि प्रतीयते । सार्धैकत्रिंशत्कोटि जनानां भोजनवसनादिचिन्तायाममौ नक्तन्दिन लीयते । पलिक्न-प्रायामवस्थां स्पृशन्नपि नवयुवेव कर्मसु समासक्तस्तिष्ठति । यदा समितिषु विद्यालयेषु लोकसंघेषु वा केषुचिदसौ सानुरोधं साभ्यर्थनञ्चामन्त्र्यते तदाऽयं न कदापि नेति वदति समुपागच्छति च तत्र स्थाने समये ।

अथापि भारतीयसंस्कृतेरयं महानुपासकः । शास्त्राणामपि वेत्ता । नीतिनिष्णातेषु प्रधान । अस्य लेखनपाटवमपि विलक्षणम् । किं किं वच्मोऽस्य गुणोदारमाचारमधिकृत्य । 'नारिकेलफलाकारा दृश्यन्ते सज्जना वहि' इति यदुक्त तद् भारतवसुन्धरा विभूतिरूपेऽस्मिन् संगच्छतेतमाम् ।

अस्माकं राष्ट्रपतिश्चिरंजीव्यादिति वयं प्रार्थयाम ।

---

# श्री सरदार वल्लभभाई पटेलस्य जीवनवृत्तम्

विमर्शसारः—१ सघर्षमय जीवनम्। २ लौहः पुरुषः, गम्भीरविचारशीलता। ३ भारतोपराज्यघटनम्। ४ उपप्रधान-मन्त्रिपदे प्रतिष्ठा।

बाल्यम्

अशेषे भारतभूखण्डे पारेर्णवञ्च प्रथितकीर्ते र्महामहिम-शालिनो भारतीयगणराज्यहृदयस्यार्यजनता-हीरकवरस्य लौहपुरुषेति-कृतयथार्थनामधेयस्य श्रीवल्लभभाई पटेलस्य सरदारोपाधिभाजो जन्म गुर्जरप्रदेशस्य करमसदनाम्नि ग्रामे अभूत्। अयञ्चैक-स्मिन कूर्मीतिप्रथिते 'लवा' इति गुर्जरदेशप्रसिद्धे कृषीवलकुलेऽ-जायत अस्य पितुर्नाम श्रीजवेरभाई पटेल इत्यासीत्। भारतीये सैनिकविद्रोहकाले वैक्रमे वेदशशिनन्दैकहायने ( १९१४ ) हलं विहायासौ देशसेवासंग्रामे चुकूर्द। तत प्रशान्ते चोपद्रवे त्रिसमा अलक्षित एवावर्तत न च भूयोऽप्यदृश्यत। तदानीमसौ द्विनवतिवर्षवयस्को बभूव। अस्यैव द्वितीयः सूनुः। ज्येष्ठस्तु श्रीविठ्ठलभाई पटेलमहोदयोऽवर्तत य इतः प्रागेव स्वतन्त्रायुद्धे बहुधा सेवामकरोत् भारतस्य, दिवञ्चागात्। द्वावेवेमौ प्रथितनामानौ सहोदरौ शैशवे केदारादररक्षणादिकार्येषु गच्छन् पिता सहकुर्वन् स्वदेशसंस्कृति-भरिता पुराणमहाभारतादिप्रसिद्धाः कथा अश्रावयत्। एतेन बाल्ये वयस्येव द्वयोरेव भ्रात्रो र्मनसि भारतीयसंस्कृते स्वधर्मस्य चानुरा-गाङ्कुरः पदं न्यधत्त।

श्रीपटेलमहोदयः स्वकीये कैशोरे वयसि स्वस्मिन् ग्राम एवैकस्यां

पाठशालायामपठत्। ततो बडौदा प्रान्तान्तर्गते नडियादग्रामे पठितुमगमत्। अत्र पाठशालाया एको मुख्याध्यापक. पाठ्यपुस्तकानि विक्रेष्ट स्वयमेव, स्वान्तेवासिनोऽतिमूल्येन पुस्तकानि क्रेतु निर्बबन्ध च। यस्तमवहेल्य लघुमूल्येनान्यत्र स्वपुस्तकं चिक्राय तस्मै द्विष्यन्नध्यापकमहोदयोऽपीडयच्च। वल्लभकुमारस्त्वमुं पूर्वं सानुनय समबोधयत् परं यदाऽसौ नास्योक्तिं मेने तदाऽय विद्यार्थिन. समुत्साह्य पञ्चषो दिवसाननध्यायसत्याग्रहं विधाय तं स्वप्रकृतिस्थञ्चकार।

शिक्षाकाल

अथ सभ्रातृकोऽय बडौदाविद्यालयं प्राविशत्। तत्रापि पटेलकुमारोऽयं व्यवदद्ध्यापकेन। तथाहि तस्मिन् विद्यालये प्रविष्टोऽय संस्कृतस्थाने गुजरातीभाषां विषयान्तर स्वीचक्रे। एतेन सस्कृताऽध्यापकोऽस्मै चुकोप। स चैनमुद्वेजयामाससौ च ससहोदरस्तमपि। पर्यन्ते तत्रत्यो मुख्याध्यापक सभ्रातृकमेन प्रवेशिकापरीक्षायां प्रवेशयितुं नैच्छत्। अयञ्च समं भ्रात्रा स्वग्राम एव समागत्य 'एन्ट्रैन्स परीक्षां' प्राविशदुदतरच्च। अथार्थाभावेन बलवत्सोत्कण्ठोऽप्यसौ महाविद्यालयं प्रविश्योच्चशिक्षामवाप्तुं नापारयत्।

अथ श्रीवल्लभ कृषककुलसुलभेनार्थकार्श्येन प्रसभं वृत्त्यर्जनायैव प्रेरित महोपल-निचयरुद्ध पयसां प्रवाह इव। अयं गोधराख्ये निगमेऽभियुक्तप्रतिनिधिवृत्तिमुररीकृत्य[1] तयैव कतिचित्समा अवर्तत। अस्य वाक् पाटवस्य निपुणमतिचातुर्यस्याजस्रमेव प्रससार यश

वृत्त्युपायानामेषणा

१ मुख्त्यार

सौरभमिव पटपटलपिहितस्य मृगमदस्य सर्वस्मिन्नेव प्रान्तेऽगण्यत चासौ तदा प्रथमस्तत्रत्यानां विधानवृत्त्युपजीविनाम्। एकदा ह्यत्रैक आंगलस्तन्त्रपतिरस्य[1] प्रगल्भया धिषणयान्तरेव दग्धोऽमुमशिष्टै र्वाक्यैरभाणत् किञ्च भस्मच्छन्नो वह्निरिवाल्पेनापि मरुता वेगेन समुद्दीपितोऽसौ। ज्वलमानो मन्युना तं सतर्जनं सस्वाभिमानञ्च अभर्त्सयत्।

गोधरपत्तने विधानवृत्तिमुपजीव्य वर्तमानस्य श्रीवल्लभमहोदयस्य

पत्नी वियोग

शरीरं तत्र मरकरूपेण व्याजृम्भितेनाग्नि-रोहिणी[2]गदेनाक्रान्तं परं भारतीयानां दीनानां सौभाग्येन स्वशुभकर्मणां परिपाकेन वा दिष्ट्योल्लाघतां लेभे। किञ्च हन्त! ततोऽस्य साध्वी गृहिणी तेनैव व्याधिनाऽग्रस्यत। अयञ्च तां चिकित्सयितुं मुम्बापुर्यां प्रैषत्। यथोपचारैश्चोपचरितुं प्रबबन्ध निखिलम्। एकदा गोधरपत्तन एवासौ तन्त्रपतिभवने[3] कस्याप्यपराधिनो व्यतिकरमाश्रित्य सम-भाषत। एतस्मिन्नेवान्तरे तारपत्रवाहकः समेत्यास्मै तारपत्रं प्रादात्। अयञ्च निर्वाच्य तत्तथैवाविकृत एव युक्तीर्ददद् व्यतिकरपक्षं दृढीचकार। अथ तन्त्रपतिभवने समुपस्थितैः सुहृद्भिरवसाने 'तारपत्रे किं लिखितम्?' इति पृष्टोऽसौ किञ्चित् स्मयमानस्तत्पत्रं प्रादर्शयत्। तत्र 'तव पत्नी स्वर्गङ्गता' इति दारुणः संवाद आसीत्। ते त्वत्यन्तं चकिता अस्य धृतिबलं, स्थितप्रज्ञत्वञ्च प्रशशंसुः। सत्यम् 'विकार हेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' इति यदुक्तन्त-

१ जज। २ प्लेग ३ अदालत

दस्मिन् पुरुषपुंगवे धीरधौरेये सगच्छतेतराम् । 'पत्नी प्रियतमोपरता, जीवनञ्च शून्यमिव जातम् तथापि न विकृति मनागपि' इत्यहो धैर्यम् ।

विदेशे 'सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति' इति ।

'अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत्' इति सदुक्ती श्रीवल्लभस्य चरितमिहानुहरत । अन्तःशल्यमिव जायावियोगमुद्वहन् स्वकुटुम्बभरणक्षम धनमर्जयन्नपि पारेर्णवं विधानशास्त्राण्यधिजिगीषु र्लण्डन नगर ययौ । तत्रापि स्वकुशाग्रधिया सर्वानेव शिक्षकान तत्रत्यान् विस्मापयन् सर्वेषां तत्राधीतवतां निपुणतमोऽगण्यत प्रमाणपत्रै विधानविरुदावलीभिः सममन्यत । इदञ्चोच्यते यत् तत्रत्यैः प्रशस्तै बृहत्तन्त्रपति[1]पदस्थैरस्योत्तरपत्राणि कौतुकाकुलितचेतसा निर्वाच्यास्य विधानार्हन्ती सोरस्कार स्वीचक्रे ।

अथ स्वदेशं प्रत्यावर्त्यासौ वैरिस्टरोपाधिसमलंकृतो मुम्बापुर्यां बृहत्तन्त्रपतिभवने विधानव्यवसायं प्रारेभे । इतः पूर्वमस्य ज्यायान्

कांग्रेसे प्रवेशः

सोदरो विट्ठलमहाभागो देशसेवाध्वरे दीक्षां जग्राह । असावपि श्री गान्धी महोदयस्य सम्पर्कमेत्य तस्मिन्नेवाध्वरे प्रविवेश ।

अस्य मतिगाम्भीर्यं देशजाति स्नेहञ्च विलोक्याय गुजरात-प्रान्तीय कांग्रेस समिते मन्त्रित्वं प्राहितो महात्मना । तदानीमसौ गुर्जरदेशे 'खेडाग्रामे' शासकैः कदर्थ्यमानानां भर्त्सितानाञ्चाकिञ्चनानां कृषीवलानां नेतृत्वं भेजे । तत्र तान् समुत्साहयन्

---

१. चीफ जस्टिस ।

महात्मना गान्धिमहोदयेनानुभूतममोघं सत्याग्रहास्त्र प्रयुज्य ग्रामकानवनमग्य्य कृषिकारिणा दु खानि पर्यहरत् । अयञ्च स्वतन्त्रता सग्रामेऽस्य प्रथम. प्रशस्तश्च विजयो बभूव ।

असहोद्योग-सघर्पकालेऽययं गुर्जरदेशस्य प्रतिनगर प्रति निगम, प्रतिग्राम प्रतिपल्लिञ्च भ्राम भ्रामं सर्वान् भारत-स्वातन्त्र्य-रणे योद्धुं समुपादिशन् । कारीन्त्रतेऽपि महात्मनि स्वदेश-कार्पासं सूत्रयन् वयनच-क्रेण 'कर्मण्येवाधिकारस्ते' इति भगवतो वचसि श्रद्दधानो जनानां मनांस्यावर्जयन् । ब्रह्म देशङ्गत्वा ततोऽसौ 'गुर्जर विद्यापीठ' समुन्नत्यै दशलक्षरूप्यकाणि सञ्जग्राह ।

नवर्ष

अथ वह्निवसुनन्दैक सम्वत्सरे ( १९८३ ) बारडोली कृषकाणा करप्रदानासमर्थानामग्रणीभूय महत्या गम्भीरया धिया धृत्या च सत्याग्रहञ्चकार । राज्यशासकै. प्रतारणा-प्रलोभनादिरूपा पीडाप्रदाश्चानेके समाश्रिता उपायाः परमन्ते ते विफलायासाः सवृत्तास्तांश्च कृपीवलान् कर-मुक्तान् विधाय रान्धाय च मरकमिव-प्रसृतं सत्याग्रहं प्रशमयितुम् अभ्यर्थयन् श्रीपटेलम् । एप आसीदस्यासम्भावितः साहसस्य बुद्धेश्च विजयः । महात्मनो डाण्डी यात्रायामपि श्रीपटेलस्तस्य दक्षिणबाहुरिव सहायकारी बभूव । अयमपि कतिपयवारं कारायां न्यरुध्यत । स्वरवसु नन्दशशाङ्क-सम्वत्सरे ( १९८७ ) कराची नगरे सम्मिलितायाः कांग्रेस-परिपद्. सभापतिपदम् अभूषयत् , प्रशस्तञ्च कर्मनैपुण्यं प्राचीकटत् ।

अथ चतुरुत्तर द्विसहस्र सम्वत्सरे चिराय दासता-कदर्थितं भारतं स्वातन्त्र्यं लेभे । आंगलशासकास्तु प्रयाता. । देशस्य विभाजनमभवत् ।

स्वतन्त्र भारतस्योप प्रधानमन्त्री

गृहधनहीनानामसंख्यानां पीडितानां दशा व्यगोचरा वचसामवर्तत। इत राष्ट्रे शान्ति-प्रतिष्ठापना, इतश्च षट्शताधिकानामपि राजन्यगणाधिष्ठितानामुपराज्यानां संघट-नम, इत आततायिनां कुचक्रदमनम् इतश्च विदेशीयाना हृदि भारतीयनीत्या समवदातता प्रख्यापनम, इति कष्टं कि कि नासी-त्तदा दु.साध्यम् नवस्वतन्त्रभारतशास्तृणां पुर । परं धन्यं बुद्धिचा-तुर्यम्, धन्य च कर्मकौशलं तत्रभवत' श्री पटेलस्य । असौ हि महाभागो भारतस्योपप्रधान-पदमलङ्कुर्वन् सान्धिविग्रहिक पदमपि सुशोभयन् कया नु नीत्या केन च बलेन सर्वाणि विपर्यस्ता न्युच्छृङ्खलानीमान्युपराज्यानि भारत-सघराज्ये विलीनीकृत्य खण्डितमपि भारतमखण्डितमिव व्यधादिति को वक्तुमीश' । एवं योगे क्षेमे च कौशलं दर्शयन् महाभागोऽसौ वैदेशिकैरप्यभ्य-नन्द्यत सर्वत्र। भारते चायं तत एव 'लौह पुरुष' इत्यन्वर्थां संज्ञां भेजे। न च भारतीया अस्येदम् ऋणं प्रतिदातु' समर्था इति दृढ विश्वसिम' ।

अन्त

बलीयसी कालगति.। असौ लौहपुरुषेति प्रथित श्री पटेल महाभाग. सप्तोत्तर द्विसहस्रसम्वत्सरस्य मार्गशीर्षे मुम्बापुर्यां नश्वरमिद शरीरं विसृज्य पौरन्दरी पुरीं प्रयातः । अस्य निधनोदन्तो विद्युद्वेग इव क्षणेनैव सर्वत्र प्रसृत । भारतेऽन्यद्देशेष्वपि लोका' शोकमग्ना अभूवन् ।

न्विगत श्रीपटेल । परमस्य लोहपुरुपस्य गुणगणान् महोपकारान् को विस्मरेत् ? कोऽनेन साम्यं भजेत ? एतस्य वा स्थानं पूरयेदत्रेति काल एव विजानाति ॥

---

## श्रीभारतप्रधानमन्त्रिणः पण्डितजवाहरलालस्य नेहरूपाह्वस्य जीवनोदन्तः

**विमर्शसारः**—१ विश्वविश्रुता कीर्ति, राजनीति मर्मज्ञता २ विदेशयात्रा, अद्भुता प्रतिभा। ३ कारावास, कांग्रेस-सेवा, वैदुष्यम् । ४ विश्वनायक, लोकप्रियता । ५. महान् त्यागः, विश्व-शान्ति-प्रिय । ६ भारतस्य गौरवम् ।

विश्वविस्तृतयशस सकलकलानिकेतनस्य भारतभूललाटिकाय-मानस्यास्माकं प्रधानमन्त्रिमहोदयस्य श्रीपण्डित जवाहरलालमहा-भागस्य नेहरूपाह्वस्य पूर्वपुरुषा मौसलो-

वश

पद्रवकाले काश्मीरान् विहाय दिल्लीनगर्या न्यवसन् । तत. प्रथमस्वातन्त्र्यादोलने ते दिल्लीं परित्यज्य प्रयाग ऊषु । अत्रैवेदं सारस्वतं काश्मीरब्राह्मणकुलं ख्या तिजगाम । अस्मिन्नेव वशे रसवेद ग्रहशशिसम्वत्सरे (१९४६) श्रीजवाहरलालेति कृताभिधानोऽजायत । अस्य जनकः श्रीमान् ख्यातनामा श्रीमोतीलालो नेहरूपाह्वो वैधानवृत्त्या प्रचुरतरमर्थमार्जत् । स च राजेव समृद्धिमान् महीयान् सम्पत्तिमानगण्यत । करशाखा-ग्रगणनीयास्ते स्तोका एवासंस्तदानीं विधानवृत्त्युपजीविनो ये श्रीमोती-

लालेन सह स्पर्धामर्थर्हेयु । अस्य स्तनन्धयात्कौमारं स्पर्शतो वय सुमहान्तो भारतीया वैदेशिकाश्चाध्यापका न्ययुज्यन्ताध्यापनाय । अस्य जन्मन एकादशवर्षाणि यावन्नाजायत किमप्यपत्यमस्य जनन्या. ।

शैशवे चाय मन्दाक्षशील.[1] पटुतरश्चासीत् । अस्य जनकोऽमु-मिगलैण्डे पठनाय प्रेपयामास । तत्र च हैरोपब्लिकस्कूलेति ख्याते पाठालये प्रवेशितः । अत्र केवलमाढ्यतरा-

शिक्षा

णामेव नराणां बाला अपठन् । अत्रायं बुद्धि-मत्तमेपु छात्रेष्वगण्यत । अथ कतिपयहा-यनानन्तरं कैम्ब्रिज विश्वविद्यालयस्य ट्रिनिटीकालेजे प्रविश्य विज्ञानो-पाधिं लब्धवान् ततश्च लण्डननगर्यां समागत्य विधानशास्त्रमभ्यस्य वैधानोपाधिमपि समाससाद । ततोयं भारतं प्रत्यावृत्यात्र कति-चित्समा भोगानुपभुञ्जन निष्कर्मैव तस्थौ । एवमुच्यते तदाऽस्य मलिनानि वासांस्यपि पेरिसस्य धावकैरेव प्राक्षाल्यन्त । इयानासी-दस्य वैभवविस्तर ।

अथ कियति काले गान्धिमहोदयैरुपक्रान्तेऽसहोद्योग-कर्मणि श्री जवाहरलालः सार्धं स्वपित्रा तस्मिन्नेव प्रविश्य देशस्य सेवां कर्तु-मुपचक्रमे । आसीदयमेव कालो यदासौ

कांग्रेससेवारम्भः

विलासोल्लसितं सम्पत्तिसमाप्लुतं मार्गं परि-हाय कदर्थनाकुलं देशोद्धारप्रवणं च पन्थान-मनुसृत्य दीनावस्थां पराभिभूयमानामिमां मातृभूमिं स्वतन्त्रीं कर्तुं

---

१. लज्जालु ।

प्रायतत । अस्मिन्नवसरेऽसौ कारायां निरुद्ध । कोमलकायस्य दासै-र्दासीभिरुपलालितस्य महीपतिकुमारस्येवास्य प्रथमोऽयं कारावास' कीदृक् दु खोद्वेगकरोऽभवदिनि को नु सचेतन कलयेत् ।

अथ कारावासादुन्मुक्तोऽय पुनरपि यूरोप यात्रायै गतस्तत्र च रूसदेशस्यान्यपाञ्च देशानां समाज राजनीति-दशा' समध्यैष्ट । तत्रास्य मन साम्यवाद-सम्पृक्तञ्जातम् । भारत प्रत्यागत्येहाप्यमु' प्रचारयितुमैच्छन् । तदानीमस्य बीजमुप्तमेतेन यदधुनाऽत्रांकुरित दृढमूलञ्चावलोक्यते । अय कांग्रेसस्य प्रधानमन्त्रिपदमध्यासित । सुचिरञ्चामु' कार्यभारमुद्वहन् न केवलं गान्धिमहोदयस्यैवापितु समेषामेव भारतीयानां हृदयेषु पदं न्यधत्त । तदानीमेष 'मुकुट-रहितो भारतसम्राट्' इति तरुणसम्राडितिच सर्वैर्भारतीयैरुदीर्यतेस्म ।

अथ लवपुरेऽय रसवसुग्रहशशांक सम्वत्सरे (१६८६) कांग्रेस सम्मेलनस्य सभापतिपदमलञ्चकार । तदा प्रभृत्ययं पुनरपि त्रिवारं कांग्रेसस्य सभापतिपदमध्यास्त । ईरावत्या-

स्वातन्त्र्य घोषणा

स्तीरे स्वातन्त्र्यमुद्घोषयन् भारतस्य,सुमहति जनसम्मर्दे जन्वर्या. षटविंशतितमेऽह्नि १६३० ख्रीस्तीये वर्षे 'देहं वा पातयेम, स्वातन्त्र्यं वासादयेम' इति प्रति-जानन् प्रतिजानयंश्च स्वाधीनतायास्त्रिरङ्गं ध्वजं निचखान । परं धन्यमस्य बलम् । धन्यधन्याऽस्य वाणी, तदानीं कतपयेऽस्येमां घोपणां विकत्थनामयोमेवामन्यन्त किञ्चेदानीमस्ति अष्टमोऽयं वत्सरो भारतस्य स्वतन्त्रतायाः । ततोऽसौ पुन. कारायां निरुद्धः । यदा शशिनन्दांकशशांकसम्वत्सरे (१६६१) अस्य वल्लभा जाया

कमला कालकला' कलयन्तीव यूरोपस्य वीयना नगर्यां गदग्रस्ताऽवर्तत तदाऽसौ शासकैर्मोचित कारायाः। अस्य प्रिया साध्वी भार्या कालधर्ममुपाययौ। आसीदस्यैकैव कन्येन्दिरा कुमारी। किञ्च नासौ पुनर्दारग्रहणञ्चकार। श्रीमान् नेहरूमहोदय स्वायुष पञ्चदशसमाः कारायामेवाऽयापयत्। नात्र भारते समस्तेष्वपि जननायकेषु स य एतावन्तमायुषः काल कारायामेव व्यत्यैत्।

श्री नेहरू महाभाग समस्तस्य जगतः प्रशस्ततमेषु वक्तृतागुणोज्ज्वलेष्वद्वितीय। अस्य वाणी मधुरा सरलार्थापि गम्भीरा, हृदयंगमोदारा च। ध्वनिवाहकयन्त्रेण सवाह्यमानामस्य वाणीं श्रोतुं नात्र भारत एवापितु समस्तेषु प्रदेशेषु सख्यातीता जना संघटन्ते।

प्रशस्तो वक्ता

महात्मनां गान्धिमहोदयानां निधनदिनेष्वसौ त्रिवेण्यां महति जनसमुदाये स्वोदारतरां भारतीं व्याजहारात्र तदानीं दशलक्ष सख्या जनानां सम्मिलितानामभूद्ये ह्यस्य भाषणं साक्षादेव पुरतोऽश्रौषन्। अमेरिका-समाचारपत्रैस्तदानीमिदमुद्घोषितं यदद्यावधि न जात्वपि कस्यापि वाणीं श्रोतुमियती जनानां सख्याऽभूत्। एष ह्यस्य लोकप्रियताया अलौकिक-वाक्शक्त्या महीयान् प्रभाव।

किञ्च यथा श्रीनेहरूमहोदयस्येयं वसुधा सकलाऽपि प्रांगणायते न तथा कस्याप्यन्यस्य। अयं हि यायावरो मुनिरिव देवर्षि नारद इव च यात्रासु सलग्नः। गणयितुमप्यशक्या नूनमस्य भारते यूरोपप्रदेशे च विहिता यात्रा। यदा ह्यसौ भारतप्रतिवेशि-

पर्यटनम्

द्वीपेषु स्थित सुमात्राद्वीपं जलनिधिवर्त्मनाऽगमन तदा 'जकारटा' नाम पोतमारुह्य गतो ब्रह्मदेशाध्वनाग्र भारत प्रत्याजगाम। अथ पाश्चात्यनगरेषु गमन त्वस्य सज्जनस्य कोष्ठात्कोष्ठान्तरप्रवेश इवाव-गन्तव्यम। किञ्च यत्र यत्रासौ याति तत्र तत्रैव सस्पृहमेनमालोक-यितुं संघटन्ते जनसमुदाया।

अयं महामहिमशाली भारतोर्वीहीरक इव श्रीजवाहरलाल-महाभाग साम्प्रतं सर्वस्य जगतो नायक समस्तस्य जगतो नेता इति वक्तुमुचितम्। 'उदारचरितानान्तु वसुधैव कुटुम्बकम्' इत्युक्तेरादर्श एवासौ।

द्व्यधुत्तरद्विसहस्राब्देऽयं समस्तजम्बूद्वीपाधिनायकानामन्त्र्येन्द्रप्रस्थे सममेलयत् व्यचारयच्च जम्बूद्वीपस्य संस्कृतिरक्षोपायान्। ततो द्विहायनानन्तरं पुनरपि 'इण्डोनेशियाप्रदेशेषु प्रचलितां क्रान्ति शमयितुं तत्रत्येभ्यश्च स्वायत्तशासन प्रदापयितुमयं पुनर्जम्बूद्वीप-स्याधिनायकानामेकं बृहत्सम्मेलन दिल्ल्यामकारयत्। यत्राखिलस्य जगतः पञ्चाशत्प्रतिशतसंख्यावतां जनानां नेतार उपातिष्ठन्त। समेषां प्रधानपदमसावेवालञ्चकार, एतेन समस्तस्य जम्बूद्वीपस्यासौ नेतेति सर्वैः सोरस्कारमभ्युपगतम्।

यदा खलु कोरियाऽऽहव प्रारभत तदाऽमेरिकास्थैरिङ्गलैण्ड-स्थैरपि पत्रसम्पादकैरयं त महाहवं निरोद्धुं प्रार्थित। कृतवा-श्चायं तदानी विश्वशान्त्यै प्रयत्न येन तत्र किञ्चित्कालं यावत्-संग्रामो मन्थरतां भेजे। अथ च महामात्यसम्मेलन यद् 'लण्डन' नगरेऽभवत् तत्रासौ विश्वशान्ति रक्षितुं युक्तिभिरद्रढयत्। न हि

कोऽपि साम्प्रत दरीदृश्यते यो विश्वशान्ति रक्षितु महाहवांश्च वारयितु प्रयतते ऋते महाभागादस्मात्।

श्रीनेहरूमहोदयस्योदारं चरित कया नु रसनया गायाम । अयं सरलश्चारुश्च प्रकृत्या। सत्यान्न जातु विचलति। अयं समस्तस्यैव जगत कल्याणं कामयते। अस्योदारतरं चरित दुरुपयुञ्जाना. परेऽस्य कार्येषु काम बाधा जनयन्त परिपन्थिन इवाचरेयु पर 'हिरू. स्यापायेन विहिंसित खल, साधु समत्वेन भयाद्विमुच्यते' इत्युक्तिरेव परिणामे सफलतामेति। अस्य महात्मनो यद् हृदि तदेव वहि र्न चासौ वञ्चनां वेत्ति। राजनीतावपि सत्य सदानुगच्छति। यदसावबोचत् काश्मीरविषये 'तत्रत्या जना. स्वयं स्वभविष्य निश्चेष्यन्ति' इति तदधुनाऽपि वदत्येव। भारतीया एवेमे ये स्वपरिपन्थिनोऽपि सुहृद इत्याकलयन्ति।

उदारचरितम्

इदानीं भारतीयगणराज्यस्य प्रधानमन्त्रिपदमलंकुर्वन् भारतीयानां हृदयसम्राट् श्रीनेहरूमहोदयो विराजते। न चात्र भारते जगति वा कोऽपि य श्रीनेहरूमहोदयस्य सादृश्यमनुभजेत्, नीतौ पाण्डित्ये उदाराचारे वा। धन्या वयं नूनं धन्येयं भारतभूर्यत्र त्यागी सत्यवादी गुणगणोज्ज्वलो मानवकुलतिलकोऽयं नेहरूमहाभागो जनि लेभे वसति च। अयमस्माकं प्राणा इव मूल्यवान् हीरको जीवेत् समा शरद इत्येव भगवन्तं तरुणेन्दुशेखरं प्रार्थयाम ।

प्रधानमन्त्री

नेहरूमहोदयस्य नीतौ शासने यथाऽगाध पाण्डित्य निरुपम-

कौशलञ्च तथा विलसति वैदुष्यमपि।

साहित्य-सेवा

अनेन साहित्य-सेवाऽपि बह्वीकृता। हिन्दी-भाषायामांगलभाषायाञ्चानेन बहवो ग्रन्था लिखिताः। तेषु 'मदीया आत्मकथा' 'पुत्रीं प्रति पितु. पत्राणि' इत्यादयो मुख्या.। एते नात्रैवाऽपि तु विदेशेष्वपि बह्वाद्रियन्ते। एभिरस्य प्रचुर आयोऽप्यभूत्। नेहरूमहोदयस्यैषा साहित्यसेवाऽस्माकं गौरवं भारतीयभाषादीक्षितानामन्येषाञ्च। नीति-साहित्य-वैदुष्यमेकस्मिन्नेव जातुचिदेव प्राप्यते नरपुंगवे।

---

# भारतभूषणस्य महामनसः श्रीमदनमोहन-मालवीयस्य जीवनचरितम्

**विमर्शसारः**—१ साधारणे विप्रवंशे जन्म, विलक्षणा प्रतिभा, २ विधानवृत्ति, सम्पादक, भाषणनैपुण्यम्, कांग्रेससेवा, कांग्रेस-सभापति। ३. हिन्दुविश्वविद्यालयस्थापना, सनातनधर्मसेवा। ४ आचार श्रेष्ठ, आदर्शो ब्राह्मण, विदेशयात्रा, कर्मवीर., हिन्दु-संस्कृतेरादर्श, अन्तिमा उद्गारा, संस्कृतपाण्डित्यम्।

प्रात स्मरणीयस्य पुण्यश्लोकस्यार्यसंस्कृते रादर्शरूपस्य भारत-भूषणस्य श्रीमदनमोहनमालवीयस्य यशांसि पावनानि केषां न विदितानि।

उपक्रमः

असौ महात्माऽनुकरणीयचरितो वन्दनीय. स्वगुणै रुदारैर्न केवल भारतेऽपितु पारेर्णवमपि विश्रुत आसीत्। भारतीय संस्कृतेरादर्शभूतस्य काशीहिन्दुविश्वविद्यालयस्यासौ प्रतिष्ठापयिता

देशस्य धर्मस्य संस्कृतेश्च याः सेवाश्चकार ता केषां न स्वदेश-गौरव-प्रियाणां न विदिता । इहास्य जीवनगाथां समस्य वर्णयामो भारतभूषणस्य भूसुरकुलललामस्य ।

श्रीमालवीयस्य पिता पण्डितव्रजनाथो मालवीयो ज्यौतिष कर्म-काण्डयो विशिष्ट पण्डितो बभूव । अस्यैव गृहे स्वरैकनन्दशशांके ( स० १९१७ ) मार्गशीर्षे श्रीमालवीयः प्रयागे जनि लेभे । अस्य मातापि साध्वाचारा सरला धर्मैकप्राणा बभूव ।

जन्म

अथ शिशुदेश्य एव लघुकौमुदी गीतां स्मृति-शास्त्राण्यप्यध्यैष्ट यावत्सप्तहायन स्वायुष । तत स्वसद्न-समीप एवऽवस्थितायां धर्मोपदेशपाठशालाया प्राविशत् । अत्राङ्गलशिक्षामपि लेभे । त्रयोविंशतिवर्षदेश्योऽयं बी० ए० परीक्षामुदतरन् । ततो धनाभावेनाग्रे पठितुं नाशकत् । आयुष षोडशतमे हायनेऽस्य विवाहोऽप्यभूत् ।

शिक्षा

पूर्वमसौ कस्मिंश्चिद् विद्यालयेऽध्यापकपदवृत्त्याऽऽर्जदायम् । ततस्तत्पदं विहाय कालाकांकराधीशप्रेरणया 'हिन्दोस्तान' इति नाम्ना प्रचारितस्य हिन्दीदैनिकसमाचार-पत्रस्य सम्पादकोऽभूत् । अस्य सम्पादक-पदावसरे तदानीमनेकैः प्रसिद्धै जर्ननायकैरन्यैश्च प्रशस्तैर्जनैः सहाऽस्य प्रगाढं संस्तवोऽभूत् । अस्य विलक्षणा प्रतिभाऽद्वितीयञ्च वाग्बलम् असाधारणञ्च लेखकौशलं तदानीमेव मसृणघुसृण[1] विसरवत्समन्तात्सौरभं प्रसारयन्त इव पप्रथिरे ।

वृत्त्यर्जनम्

१ कुंकुमम् ।

वह्निरारनन्दैकवत्सरे ( स० १९५३ ) विधानपरीक्षामुत्तीर्य तथैव वृत्त्या जीविकामर्जितुं प्रारभत। तदानीमस्य विधान-नैपुण्यं सर्वत्र ख्याति लेभे। किञ्च स्वदेशस्य दीनां परतन्त्रां दशामालोच्यायं कांग्रेसस्य सदस्यताम् अङ्गीचकार। विधानवृत्तिञ्च तत्याज।

विधानवृत्तिस्तत्परित्यागश्च

अथायं कलिकात्तानगर्यां सम्पन्ने कांग्रेसद्वितीय सम्मेलनेऽस्य सशपथं सदस्यताम् अगीचकार। तदानीं तत्रास्य युक्तिसगत नर्कपूर्णं विस्तृतं भाषणमभूत्। येनास्य वाक्पाटवस्य विश्रुति सविशेषाऽभवत् सर्वत्र। तत. प्रभृति च कांग्रेसेऽस्य महानादरोऽभवत्।

कांग्रेसे प्रवेश.

देवनागरीं लिपि राज्यकार्यालयेषु युक्तप्रान्ते प्रतिष्ठापयितुमयं प्रायतत त्रिवर्ष येन तत्रास्य परिश्रमेण फलितम्। अखिलभारतीयां सनातनधर्मसभा प्रत्यस्थापयत्। तदा मनातनस्य धर्मस्य प्रचारणाय सर्वामेव भरतवसुमतीं चचार। सर्वत्र चायं समभ्यनन्द्यत सस्नेहं सोत्साहञ्च।

शर रसग्रहैकसम्वत्सरेऽयं भारतीयकांग्रेसस्य सभापति-पदे प्रतिष्ठापितोऽभूत्। एतेनास्य यशो दीप्रमपि पुनरदीप्यत। देशस्य जना अमुं कथमादरदृष्ट्याऽपश्यन्निति त्वेतेनैवान्नेयं यदयं त्रिवार तत. पुनरपि कांग्रेसस्य सभापति-पदे प्रतिष्ठापितोऽभूत्।

कांग्रेसस्य सभापति.

हिन्दूसभाया वाराणसीयेऽधिवेशनेऽपि मालवीयमहाभागोऽस्य

सभापति-पदम् अभूषयत्। खवसुग्रहचन्द्रेऽयमेव 'हिन्दोस्तानटाइम्स'-समाचारपत्र प्रकाशतां प्रापद्यद्यापि प्रचलत्युत्तरोत्तरं वृद्धिं प्राप्य।

स्वरवसुग्रहचन्द्रे ( सं० १९८७ ) गोलफलक-सम्मेलनमुपस्थातुं श्रीमालवीयो महात्मना सह लण्डननगरीं गतवान्। तत्रत्या ह्यस्यांगल-भाषा-पाटवम् अवेक्ष्य परं विस्मयमापुरूचुश्च "अहो! कोऽयं भारतीय-पण्डितवेषधारीहांगलं समागतः" इति। यावत्कालं हरिवर्षेऽतिष्ठत् तावत्कालं भारतीययैव मृत्स्ना हस्तशौचाय गांगमेव चोदकं पानायाभवत्। एष एव लोकसंग्रह-शीलानां महापुरुषाणां विशेष आचारस्य।

विदेशयात्रा

नयनस्वरग्रहशशांकस्य (सं० १९७२) वसन्तपञ्चम्यां श्रीमालवीयः काश्यां भागीरथ्याः पुलिने हिन्दुविश्वविद्यालयं प्रत्यस्थापयन्। एष चाधुना समस्ते वसुधा-वलये ख्यात।

हिन्दुविश्वविद्यालय स्थापना

'श्रीभारतीमन्दिररूपधारिणी विचित्रवर्णाकृतिचित्तहारिणी।
श्रीमालवीयस्य गुणानुरागिनी कीर्तिर्ध्रुवेयं परमार्थदायिनी॥'

इति विश्वविद्यालयस्यास्य वर्णनयाऽद्यापि बहवो जातिसंस्कृति-विद्यानुरागिणः स्वात्मनं धन्यान् मन्यन्ते। अयञ्च विश्वविद्यालयो देशाद्देशं पर्यटता मालवीयमहोदयेन सामन्तेभ्यो नृपतिभ्यो दान-शीलेभ्यश्च भिक्षां याचं याचं स्वयं प्ररोपितः पादप इव पोपितो वर्धितः विकासञ्चनीतो यावच्चरमक्षणम्।

यदा दिल्ल्यां कांग्रेसाधिवेशनं प्रतिबबन्ध बृटिशशासनं, तदाऽसौ

कारावास

स्वयं दुर्बलदेहो वली-पलितोऽपि दिल्ली-मागत्य निरायुधानां प्रबलमायुधं सत्याग्रहञ्चकार। ततोऽसौ कारीकृतोऽभवत्।

निधनम्

त्र्युत्तर-द्विसहस्रस्य वैक्रमस्य मार्गशीर्षेऽथ वाराणस्यां नश्वरं शरीरं विहाय शिवपुरी-पौरोऽभवत्। तदानी-मस्य बंगदेशे नौआखली प्रान्ते हिन्दुजनाना हत्यया महान् खेदोऽभवत्। तमेव चासह-मानोऽयं सद्यएव प्राणैर्व्ययुज्यतेति वदन्ति स्म कुशलास्तदानीम्।

संस्कृतेपाण्डित्यम्

श्रीमदनमोहनमालवीयो यथांगलभाषायां निपुण आसीत्तथा संस्कृतभाषायमपि। कांग्रेसनायकेषु श्री-तिलकस्यानन्तरम् असावेव तादृश आसीद्य. पाश्चात्यभापाकोविदोऽपि संस्कृतभापाया अपि पण्डितो बभूव। संस्कृतभाषणेऽपि पाटवमासीदस्य। संस्कृत-लेखेऽपि माधुर्य बभूव।

श्रीपूज्यपादस्य मालवीयस्य कार्याणि सर्वतोभद्राण्यासन्।

'प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः।
नारायण इति भक्तै ब्रह्मेत्यग्राहि योगिभिर्देवः॥'

सर्वतोभद्रता

मथुरायां कंसस्यास्थानमण्डपं प्रविशन्तं भगवन्तं वासुदेव-मालोक्य पारिपदानामिमा भिन्ना विचार-धारा यथाऽभवन्। तथैव श्रीमालवीयस्यापि चरितमनुपश्याम'— तथाहि—

काग्रसजनानां मते स कर्मठो नायक, कुशलो राजनीतिज्ञ,

प्रगल्भश्च वक्ताऽऽसीत्। हिन्दूनां मते स दृढतरो धार्मिक, सदाचारी, दयालुरादर्शश्च भूमिदेवोऽभूत्। सनातनधर्मिणां मते च स सनातनधर्मप्रचारक प्रबलो वावदूकोऽभवत्।

अस्पृश्योद्धारकर्मणि गान्धिमहात्मनोऽय दक्षिणबाहुरिवावर्तत। स्वयमसौ वाराणस्यां दशाश्वमेधघट्टे रामनाम्नो मन्त्रं ददावेकस्मा अन्त्यजायेत्यहो अस्योदाराशयता।

अन्तिम सन्देश

नौआखलीहत्याकाण्डेनान्त शल्येनैव व्यथितो महामना श्री-मालवीयो रोगिशय्यामधिशयानो मृत्यो कतिपयवासरेभ्य पूर्वं यदुज्जगार यच्च सन्दिदेश तत्स्मरणीयमस्य महात्मनो व्यथितहृदयस्य वचनं सदा दन्ध्वनीष्यति स्वदेशवत्सलाना जनाना हृदि। तथाह्यस्य स सन्देश —

'हिन्दव। बलवन्तो दृढा संगच्छध्वम्, स्वं रक्षताततायिहतकेभ्य'। ये हि दुराचारा भवदीयां सहिष्णुतां भवतो दौर्बल्यं मन्यन्ते, दर्शयत तान् यूयं बलवन्त' सुदृढाश्च स्थ, रक्षितुञ्च सर्वथा समर्था स्वात्मानम्।'

ये गतास्ते नागता। श्रीमालवीयस्यापि स्थानं रिक्तमिह भारते। कोऽमुं पूरयेदिति दैवमेव प्रमाणम्।

---

# श्री पुरुषोत्तमदास टण्डन महोदयस्य जीवनवृत्तम्

**विमर्शसारः**—१. ऋषिजीवनम्। २ वचनपालनम्। ३. विधान-वृत्त्याश्रय। ४. हिन्दीभाषास्नेह.। ५ कांग्रेसदेशसेवा। ६. कांग्रेससभापतित्वम्।

टण्डनोपाह्व पुण्यश्लोक श्रीपुरुषोत्तमदासमहाभाग सर्वस्यामेवास्यां भारतवसुन्धरायां विदितचरण। लम्बकूर्चो मुक्तकेश ओजशाली स्थूलाकोमलवसनमवीतो गम्भीरस्वर प्रकाण्डपण्डितो दीर्घदर्शी वैश्वानर इव स्वतेजसा देदीप्यमानोऽचल इव स्ववचनादविचाली सागर इव गम्भीरः श्रीटण्डनमहोदयोऽनुकरोति भारतीयानां तपःप्रवणानां मुनिसत्तमानां चरितम्।

उपक्रम

एष महाभागो वैक्रमे वसुवह्निनन्देकमिते (१९३८) वत्सरे कालिन्दीजाह्नवीसलिलसंगमपूते प्रयागे जन्म लेभे। नेत्ररसनन्देकमिते वर्षे चासौ वैधानिकीं परीक्षा 'एम ए.' परीक्षां च युगपदेवोदतीतरत्। तत. प्रभृत्येव वैधानकार्येण वृत्तिमार्जत्। अथ खस्वरनन्दशशिमिते (१९७०) वत्सरे तत्रभवतां महामनसां मालवीयमहोदयानां प्रेरणयाऽसौ पाञ्चनदे नाभाराज्ये विधानमन्त्रिपदमुररीकृत्य षट् समाः प्रशस्ततया धिषणाया त कार्यभारमुवाह। हिन्दीभाषाभुज्जिनीषुरयं 'हिन्दीसाहित्यसम्मेलनेति नाम्ना प्रसिद्धां समितिमस्थायन्। नाभाराज्यात्सम्मेलनसमितेरस्याः कार्यक्रमानुपस्थातुमसौ नावापावसरं सम्यक्। ततस्तत्रत्यं पदं स्वयमेवाहासी।

जन्मशिक्षे

वाक्पाटवञ्च व्यक्तं स्वकार्यैरदर्शयत्। प्रतिवादिनः प्रतिपक्षिणो ऽप्यस्यावक्राभि दृढयुक्तिभि प्रासीदन् । यदा द्व्यधिकद्विसहस्र-सम्वत्सरे पुनरपि धारासभाया पदाधिकारिणो निर्वाचितास्तदा लोका निर्विरोध स्वयमेवामु प्रधानपदमग्राहयन् सानुरोधम्।

अथ सप्तोत्तरद्विसहस्रसम्वत्सरस्याश्विने मासे यद्भारतस्य बल-वत्तमायाः ख्याततमायाश्च कांग्रेसपरिषदः षट्पञ्चाशत्तमवार्षिकं सम्मेलन गोदावरीरोधसि नासिकनगरे-नासिककांग्रेसस्य सभापति. ऽभवत् तस्य सभापतिपदे महात्माश्रीटण्डन-महोदय एव देशवासिभि प्रतिष्ठापित । एष च श्रीटण्डनमहोदयस्य त्यागस्य तपस कर्मठतायाश्च प्रभाव.। अस्मिन् हि पदे प्रतिष्ठितोऽसौ नासिकनगरे सहस्रातीतेषु पारिषदेषु मनीषिवरिष्ठेषु तत्र संगतेषु यत्सारगर्भितं दूरदर्शिताभरित नीति-समाजानुकूलं त्रिहोराव्यापि समचकथत् तदस्य महामतिगाम्भीर्यं प्रकाण्डपाण्डित्यञ्च व्यञ्जयति ।

श्रीटण्डनमहोदयस्तु प्रकृत्या साहसी निर्भय स्पष्टभाषी च। अय कौमारे स्वाध्यापकेभ्यो न जात्वपि बिभयाञ्चकार परं सम-मानयञ्च तान्। बाल्यादेवासौ स्पष्टभाषी स्वभावः दृढवचनश्च । सर्वस्वं विहायाऽपि स्व-विचारितमनुसरति । प्रयागस्य नगरपालि-काया मञ्चाधीशपदमधिश्रयाणोऽयमेकदा युक्तप्रान्तस्य राज्यपाल-[1] मप्यवमेने—तथाहि तत्र प्रयागे नगरपालिकायाः प्रत्यवेक्षिते जल-

---

१. गवर्नर ।

संचये नागरिकाणामपि कृते प्रचुर पानीयं नाशिष्यत। किञ्च तथापि राज्यपालस्य क्रीडातडागाय तस्य महानभाग प्रणालीभि प्रावहन्, तस्य मीनाखेटकेल्यां मा स्म भूत्कोऽप्यन्तराय इति। टण्डनमहोदयस्तु पानीयप्रवाह तत्सकलमेव रोधयित्वा 'भवतो मीन-क्रीडाया लोकानां जलावश्यकताऽधिकमपेक्षणीया' इति स सन्दिष्ट'। एतादृशोऽसौ स्पष्टभाषी निर्भयश्च। असौ श्रीगान्धिमहोदयस्य शिक्षां कर्मणानुसरति न केवलं वचमैव। हिन्दुजातेरार्यसंस्कृतेश्च महान् प्रेमी। हिन्दीभाषोन्नत्यै त्वस्य महीयान प्रयास प्रचलति। "हिन्दीभाषा पञ्चदशवर्षात् पूर्वमेव राज्यस्य राष्ट्रस्य च भाषा भवेत्" इति ह्यसौ नासिककांग्रेससम्मेलने तारस्वरेणाऽवादीत्। अस्य सौम्यो वेष साधारणञ्चाशनपानज्ञानम, ऋजु. स्वभाव, उच्चतरा च विचारचतुरा मति', अजस्रगत्या निःस्वार्थभावेन च देशसेवाव्रतानुपालनम्, इत्येतै प्रशस्तै र्लोक-संग्रहोचितैर्गुणैरसौ राजर्षिरित्यभिधीयते।

चिरञ्जीव्यादसौ देशजातिसंस्कृतिसेवी नेतृणां प्रशस्त. कांग्रेसकार्यनौकाकर्णधारो महामहिमशाली श्रीपुरुषोत्तमदास टण्डन महोदय।

# धेनोरात्मकथा

**विमर्शसारः**—१. उपत्यकाविचरणम्, २ गोपगृहे परिचर्या, नगरे, स्वार्थभावोजनानाम्, ३ गोशालायाम्।

अहं धेनु। गौ र्गाय गौडीत्यपि मामेव वदन्ति। इदानीमस्मि जीर्णा। शिथिलानि मेंगानि। न पयो ददामि। चलितुमपि नास्मि क्षमा। मन्थरा मे गति.। कक्षां शष्पं वा गोष्ठे गोचरे वा चरामि[1]। कदाचन रोमन्थमेव चर्वयामि।किन्तु न मामीदृशीमेवावेहि। पश्य ममैता सजातीया धेनव। अहं स्वं कौमारं तारुण्य चानुध्यायन्ती 'ते हि मे दिवसा गता' इति मनस्येव दूये। सहृदयोऽसि चेद्वहसि कमपि सहानुभूतिलवं जिज्ञाससि च मदीयां जीवनकथां, श्रावयामि शृणु—

उपक्रम.

पञ्चनदे हिमगिर्युपत्यकोपकण्ठे समृद्धस्यगोपालस्यैकस्य पशुधनस्य सदने पालितायाः पयस्विन्या मे प्रसूतिः। तस्या अहं बाष्कयन्या द्वितीयमपत्यमासम्। तदानी किं वच्मि? स्पृहणीयास्ते दिवसाः। कोमल- कोमलैरंगैर्मातरमन्वव्रजम्। मे जननी होरामपि मामपश्यन्ती सोत्कण्ठा ननर्द। गोपालोऽपि मां शष्पाणां कवलै सस्नेहं पुपोष। भृंगारेण[2] पयोऽपि पायाञ्चकार। कोमला मधुरा चासीन्मे कपिला कान्ति। आसीत्तत्रास्माक महान् यूथ। अहं हि सजाती-

शैशवम्

---

१ भक्षयामि, भ्रमामि चेत्युभयत्र सम्बन्ध।

२. सनालिकम् पात्रम्।

यैर्वत्सैश्चरम्। कदाचन वाटिकासु कदाचन केदारेषु नेदिष्ठेषु कदापि कुल्याकूलेषु कूर्दन्ती शष्पाणि च चरन्ती सवयसैः खेलन्ती दिनान्यनैषम्।

कैशोरं व्यतीत्य तारुण्यं स्पृशन्तीं मां गोपालस्य दारकः समं यूथेन दिनं बहिः क्षेत्रेषु क्वचन कण्टकवतीषु क्वाप्यनुद्घातासु गिरिभूमिषु लकुटीकरश्चारयामास। तदा मे देहभारोऽपि बभूव महान्। नवोद्गताभ्यां शृङ्गाभ्यां गुरुगात्रेण वर्णप्रभया च मे पालको मयि सानुक्रोशोऽवर्तत, 'अचिरेणैवासौ प्रसूता दुग्धं प्रचुरं दास्यती'ति चिन्तयन्। स हि ममोधसो भारं पश्यन् मत्प्रसवावधि प्रतीक्षमाणो मां मृदूनि मृदूनि तृणानि भक्षयन् सलिलञ्च पाययन् मध्ये मध्ये कण्डूयते स्म। अहमपि तस्य सौजन्यानुरागेण घासमदन्ती तस्य करं लिहन्ती च भृशमनन्दम्।

तारुण्यम्

अथासन्नप्रसवां मां गोपः स्वसद्मन्येव घासभारान् ढौकयन् पर्यचरन्। अहमपि मन्दगमना तद् बह्वगण्यम्। प्रसूताऽहं काले स्वगोष्ठ एव। सूतिकायै मह्यं पशुप्रेमी गोपो गोधूमचणकानुत्क्वाथ्यादात् भक्षणाय शर्करामिश्रान्। किं नु वच्मि तस्य परिचर्यामधिकृत्य। अथ संनह्य दाम्ना गोष्ठे स मां दुदोह यदा तदा तस्य कर्कशाभ्यां कराभ्यां प्रसूति-काल-सुलभेन शरीरमार्दवेन कृतास्पदानि मे स्तनानि प्रपीड्यमानानि भृशं खिद्यन्ते स्म। परमहं नवजातं स्ववत्सं पश्यन्ती तां पीडां विस्मरन्तीव न कामपि दुश्चेष्टाम्

प्रसवः

इतरपशुसाधारणामकरवम्। एतच्चाहमपश्यं स मे पालकस्तेषु दिवसेषु मां विशिष्यैव पर्यचरत्। यूथेन सहास्तमनवेलायां प्रत्यागतां मां कार्पासबीजगोधूमतुषचणकशर्करामिश्रेणाहारेण प्रभूतेन मामपोषयत्। गव्ये गोपालवल्लभापि मां सोत्सुकाभ्यां नयनाभ्यां निर्वर्णयन्ती दोहवेलायां मामुपातिष्ठत पात्रहस्ता। दोहविरतौ मदीयं वत्सं माञ्च सस्नेहमस्पर्शत्।

रुग्णावस्था

एकदा तु दोहावसरे स गोपालो मां दोग्धुमुपातिष्ठत। तस्मिन्नहनि त्वजीर्णपीडिताहं न यथेच्छमाहारं न चास्वादम्। स च प्रचुरं क्षीरमप्राप्नुवन् बलान्मे स्तनानि पौनःपुन्येन निपीडयामास। अहञ्च कदर्थ्यमाना उदरव्याधिना खिन्ना कदाचन पूर्वकायेन कदाचन पृष्ठजङ्घाभ्यां चेष्टमाना भृशमक्लिशम्। एतेन तस्य दुग्धभाजनं भूमौ पतितं दुग्धञ्च बहिः प्रस्रुतम्। स च क्रुद्धो लगुडेन मामताडयत् येनास्वस्थो देहो मे महतीं पीडाम् अन्वभवत्। अयं चासीत्प्रथमोऽवसरो यदाहं पशुपालस्य प्रहार-भाजनताम् अगमम्। माञ्चानुतप्यमानां विचेष्टमानाञ्चावलोक्य मत्पार्श्वस्थैका गृष्टिरवोचत् 'वत्से! मास्म भूरुद्विग्ना। इमा हि पशुजनसुलभाः पीडाः सह्या नामास्माभिः। सर्वो हि लोकः स्वार्थमेव कामयते' इति। अहमपि तदुक्तेर्यथार्थतां ज्ञात्वाऽपरेद्युरुल्लाघाऽभवं प्रातः पुरीषमुत्सृज्य स्वयमेव।

अथाहमत्रापश्यं यद्गोपो मयि मन्दादर इवाभूत्। न तथा मामधुना पर्यचरत्। एकदा कोऽपि सौम्यवेशो मां दाम्ना प्रगृह्य ग्राम-

आर्यसदने

ग्रामटिकाभि प्रचालयन नगरे स्थितं स्वसदनं निनाय। स मामेकस्मिन भवन-प्रकोष्ठे समनह्यत। स्वैरं वनस्थलीषु सञ्चरणशीलाहं तत्र स्वजन्मभूमि-वियोगेन नितान्तमुन्मनाऽभवम्। सम्पूर्णमहः एकाकिन्येव गोष्ठेऽतिष्ठम्। आर्यगृहिणी मां प्रातरागत्य परया भक्त्या नमस्कुर्वाणा पर्यपोषयत् घास-भारान प्रयच्छन्ती। अथ व्यतीतेषु कतिचिन्मासेष्वह वत्समेकमजनयम्। गृह स्वामी स्वामिनी च परमतुष्यताम्। गोपवदेवैतेष्वह सु पर्यचरताम्। स्वामिनी तु समये मां दुदोह सदैव। अत्र समामेकामहं सपरिवारस्य स्वामिनः परं स्नेह-भाजनमभवम्। समतीते काले स गृहस्वामी मम प्रचुराहारदाने शिथिलादर एवाभवत्। इतस्तु वत्सस्य धयनम्, इतो द्विवारं प्रत्यहं स्वामिन्यपि मम दोहनपरा ऽभवत्। इतश्च न तावत् सौहित्यकरम आहारमलभं, कृशाया मे जाठराग्निरपि तद्दोदीप्त आसीत्। पशुपालगृहे त्वहं वनस्थलीषु कन्दरेषु चरन्ती स्वोदरं काममपूरयम् परमिह कारीकृतेव स्वामिमुखप्रेक्षिण्येवाभवम्। स्तोकाहारेण मम शरीरं कृशतामगमत्, कुतस्तदा क्षीरस्य सम्भवः। असौ ममैकं सहचरं वत्समपि ततो निस्सार्य न ज्ञायते क्व कुत्र नीतवान्। नाधुना मां सस्नेह परिचचार सः। स्वामिनी तु मा सादर नमस्कुर्वाणा-मयि श्रद्दधानेवाऽस्त। सा च तेनैव मां तृप्तामिव व्यचारयत्।

एकदा मत्स्वामिना सह कोऽपि लम्बकूर्चो प्रावाराष्णीषधारी मम गोष्ठ प्राविशत्। स च नयने नरीनर्तयन्निव मा सम्यक् निरीक्ष-

म्लेच्छगृहे

माणः किमपि विचिन्तयन् दाम्ना गृहीत्वा मां प्रतोलीभी रथ्यामि संवाहयन् नगरस्य तस्यैव प्रान्ते स्थितं स्वगेहमनैषीत्। अत्राहमन्या अपि पञ्चषः स्वजातीया शिथिलगात्रा वत्सरहिता धेनूरपश्यम् कांश्चिदनुड्होऽपि। असौ द्वित्रिवासरान पानीयप्रधानमेव घासाद्याहारं प्रददस्मान् पुपोष। किञ्चैतेषु दिवसेषु तत्रत्याः सर्वा अपि गाव एकैकशः क्वापि तेन नीता। अहमेव केवलमवशिष्टा तत्र द्वित्राश्च बलीवर्दाः।

अथ पञ्चमेऽह्नि मध्यान्हे कश्चन सौम्य प्रसादितकेशो भद्रवेशो वर्णेन गौर श्रेष्ठी भृत्येनैकेनानुगतो मां ततो नीत्वा सदनान्तर प्रापयामास। तत्रासीन्महान गोव्रजः।

गोशालायाम्

प्रायः सर्वास्तत्र मत्समानवयस्काः कृशशरीरा मयालोकिता। अह नन्दन्तीवात्र विस्तृत क्षेत्र सुविततां शालां स्वजन्मभूम्याः समानमिव देशं च दृष्ट्वाऽतुष्यम। अत्र स्थितायाः मम कतिचित्समा व्यतीताः। अस्मिन हि क्षेत्रे दिन चरामि। असौ नेदीयानेव मे गोष्ठ।

जराजीर्णानि मेऽगानि। यदृच्छयैवोपनत घास खादामि। न चाहं सञ्चरितुमपि समर्था तथा। सौम्य! स्मार स्मार स्ववृत्तम्य ध्याय ध्यायञ्च स्वस्वामिनां तांस्तान् व्यवहारान् इदमेव तावद् वक्तुमुचितम् 'सर्व स्वार्थं समीहते' इति किं बहुना।

# पुस्तकस्यात्मकथा

**विमर्शसारः**—१ गात्ररचनायां वैविध्यम् । २.ज्ञान मन्दिरम् । ३ बहुत्र सञ्चारः । ४ सार्वजनीना भावाः ।

अहो ! किं भणामि ! जगद्विलक्षणा मम सृष्टिः । सृष्टेरस्या उपादान-सामग्री युगेषु सर्वेषु भवत्येकैव । तथाहि मांसास्थिमयानि मानवादीनां पिण्डानि सनातनादेव कालादेकोपादानान्येकाकाराणि च । किञ्च मम तावच्छरीररचनायामुपादानानि नैकरूपाण्यभूवन् । अथ च मम पूर्वजा कुत प्रादुर्बभूवुः ? कुत्रोपुरिति त्वहमपि न वेद्मि ? केचन तु शिष्टा समामनन्ति यत्ते चीनेषु न्यवसन पूर्वम । केऽपि यवनदेशे । परे च भारते मे पुरुषाः पूर्वजा अवसन, इति द्रढयन्ति । अथान्ता वृद्धा एवमपि भणन्ति यन्नाहं सनातन । ममादिपुरुषस्तु नेतः सार्धसहस्रवत्सरात्पूर्वमजायतास्यां मेदिन्याम । पश्चात् गम्भीरानुसन्धानपराणां विपश्चिदपश्चिमानां मुखादेकदाश्रौषं मदीया आदिपुरुषा इतः पञ्चसहस्राब्देभ्योऽपि पूर्वं भारते समजायन्त । तत्रैव सुचिरमूषुरिति च । किञ्च तदानीं तरुत्वग्भिर्मम गात्रमरच्यन्त तरुदलैर्वा । अतिक्रामति काले तालदलानि भूर्जत्वचश्च प्राचुर्येण मद्गात्ररचनायां प्रायुज्यन्त । सन्ति मम जीर्णतमाः पूर्वपुरुषाः क्वापि क्वाप्येवस्वरूपा एव । अहञ्च तेषां तत्स्वरूपं स्वस्य च मनोहारि ग्रथितं नवोपादान निर्मितं च गात्रं दर्शं दर्शं विस्मये हृष्यामि च ।

उत्पत्तिवैचित्र्यम्

इतः शतद्वयवत्सरपूर्वं मम गात्रयष्टिमसमृणेषु खरस्पर्शेषु च

पत्रेषु कज्जलमय्या पतत्रिपत्र-काण्डादिनिर्मितैः कलमैश्चित्रयन्तो वर्णविन्यासान् नक्रन्दिरा कर्मप्रवणा अरचयन्। किञ्च ततो विज्ञानमयो युग प्रारब्धः। सर्वमेवात्र माश्चर्यमयीम् अ[illegible]भावित-दशां प्राप। ममाप्यत्राभूतपूर्वं कायकल्प संवृत्त। मुद्रणपत्राणामाविष्कारेण मम काय उपबृंहित'। विचक्षणानां सुधियां मस्तिष्कान्नस शावसम्भार उद्गच्छति। तेषामेव करकमलतल्लजैर्मदीया निर्मिति। तत्र कलममस्यौ मे निर्मितिसाहाय्यभूते। इयञ्च मे श्रूणशरीरस्यैव निर्मितिरित्यवधेया। [illegible] कष्टानि विविधोपायैर्मा मुद्रणालय प्रापयंति। अस्मिंस्तावन्दे सुमसृणपत्रे पचिन सुपरिष्कृत सुग्रथितं च शरीरं विनिर्मीयते [illegible] अत [illegible] कायकल्पो मे जात इति। [illegible] मे मत्वमपि गक्यते पूर्वतने युगे स एवाहमधुनाऽनेकनामाऽनेकरूपो विराडिव विश्वस्मिन्नपि जगति व्याप्त। किं नैतच्चित्रम्?

कायाकल्प

मुद्रणालयान्निर्गत्याहं रथेनैकदा [illegible] स्थितस्यापणिकस्य हट्टे प्रापम्। स मां तत्रान्यैश्रातृभि' साधं कायमञ्जूषायामस्थापयत्। अथ तत्रैवाहं कतिचन मासान व्यश्रमम्।

हट्टे

एकदा कश्चिद् भद्रपुरुषस्ततो मां नीतवान् सकौतुक सस्नेहञ्च मम देह-पुष्टिं निभालयन्।

असौ भद्रपुरुष उपनेत्रमायोज्य मां निपुणमपश्यत् अरक्षच्च

मां न जातु स्वगृहमञ्जूषिकाया बहिर्मलिनेऽरक्षिते च स्थानेऽस्था-
पयत । सुबहुवारं निशायां मामेव पश्यन्

उपाध्यायगृहे

सोऽस्वपन् । शिशिरे हि स मामुन्मुद्र्य
स्यानन्तेवासिनोऽध्यशिक्षयत कांश्चन । अथ-
मासीन्मे तदा धन्य मना । [illegible] रसम्भ्रम कदापि
मा पल्लके संस्थाप्य गतेऽस्मिन्नुपाध्याये [illegible] दारको मम चाक-
चक्येनाहृत्य मामन्तर्बहिश्च पश्यन् [illegible] चरणपत्रं तुत्रोट । ततो
भीत [illegible] मा [illegible] ।

उपाध्यायसदने निवसतो मे बहव समा व्यतीयु ।
उपाध्यायस्य सुतोऽपि वयस्क शिक्षितश्चाभवत । स तु मनो-
विनो[illegible] मध्ये [illegible] समादाय [illegible]मुपविश्यापठत ।

एकदा कोऽप्यस्य सवय. सखा मामस्माद् समादाय स्वगृहं
नीतवान् कतिपय-सप्ताह यावदहोरात्रं मयैव

बटुसदने

सहावसन् न च क्षणमप्यमुचत । आसीदयं
कोऽपि परीक्षार्थी बटु । अयं स्वभावसर-
लोऽपि तरलतया न मां यथाविधि रक्षणे दत्तचित्तोऽभवत् । कदा-
चिदुपवन कदाचिदापणं कदाचिच्च विद्यालय नयन् मां न साधु
पर्यस्थापयत । एतेन गतं मे तच्चाकचक्यम् । सा ममसृणताऽपि
नावर्तत । त्वगपि बहिरावरणस्वरूपा घृष्टा । मामत्रयमासीन्मगेयमेव
दशा । ततोऽहं तस्यैव बटो मञ्जूषायां सुचिरं विश्राममुखमन्वभवम् ।

एकदा मम पुराण सखोपाध्याय सूनुर्मा बटुगृहान्निनाय स्वगृहम् ।

स तु ममावस्थां निर्वर्ण्य नितरामतप्यत।

पुस्तकालये

तत्रास्य दारिका मां स्वपाणिपल्लवलालितमकरोत् बहुमासान्। सा च मे व्रणान् रोपयन्ती मम शिथिलतरं गात्रमपि नवीनमिवाकरोत्। नाहमस्या आनृण्यं लप्स्ये।

अथैकदाऽस्या पिता स्वकीयबृहत्संग्रहेण सार्धं मामत्रत्याया पाठशालाया: पुस्तकालयाय प्रादात्। तत: प्रभृति इहैवास्मि। दारका दारिकाश्चोपाध्याया महोपाध्यायाश्च मां नयन्ति प्रत्यानयन्ति च, परमत्रैव मेऽधुना स्थिरो निवास इत्यनुमिनोमि।

अयञ्च तावन्मया जन्मनो यात्रायाश्चोदन्तो वर्णित। पर

गुणा

विदितप्रायानपि गुणानत्र दिङ्मात्रं व्याहरामि-अहं विश्वम्भर इव जगतां भर्ता, अहं सुप्तानामुद्बोधयिता, त्रस्तानां भीतिहर्ता, दुर्विनीतानां विनेता, मुद्रितनयनानां भास्वानिव पंकजकुलानामुन्मुद्रयिता। अचिन्त्या मे शक्ति। अतर्क्यो मे प्रभाव। अहं कुलिशादपि कठोर कुसुमादपि सुकुमार। मम तु वल्गामाश्रित्य रंका अपि नृपायन्ते, जडा अपि प्राज्ञायन्ते, असभ्या अपि सभ्यन्ति। विश्वजनीना: सार्वजनीनाश्च मे गुणा इति।

# पञ्चमः प्रदीपः

## संकेतार्थकाः प्रबन्धाः

**अवतरणिका—**

पूर्वपीठिकायां सर्वेषु प्रदीपेषु विस्तृत्य प्रबन्धाः प्रणीताः । न हि नाम सर्वत्र सर्वानेव विषयानधिकृत्य प्रबन्ध-प्रणयनं सुशकम् । विस्तृतेषु प्रबन्धेषु लब्धपाटवा एव संकेतार्थकानपि तावत्प्रबन्धान् रचयितुं सुखेनैव समर्थाः । दिग्दर्शनं चात्रापेक्ष्यते केवलम् । तच्चेह विधीयते । अत्र संकेतसरणिमनुसृत्य प्रबन्ध-विस्तरो विधेयः । अतिविस्तरोऽपि न ज्यायान् । स चास्वारस्यमेव जनयेत् । कालमेव क्षिपेत् । असंगतो वाक्यकदम्बको विषयापकर्षक इति समवधेयम् । यावता प्रकृतोपयोगि समीहितं युष्मद् हृद्गतं प्रकाश्येत तावतैव विषय-प्रतिपादनैर्युक्तिभिर्निदर्शनैश्च प्रणेयः प्रबन्धश्चोपबृंहणीयः ।

इह प्रबन्धस्य सर्वविधस्यावश्यकतया प्रतीयमानान् कांश्चिद् विषयानाश्रित्य प्रबन्धान् संकेतात्मकैः संक्षिप्तैश्च वाक्यैः प्रस्तुमः । एतेऽपि तावदन्धतमसावृतेनाध्वना प्रचलतां प्रदीपा इव परीक्षार्थिनो भृशमुपकुर्वन्तु ।

# कर्मण्येवाधिकारस्ते मा फलेषु कदाचन

संसृतौ चरा अचरा सर्वे भूतसंघा भावाश्च सक्रिया । अस्माभिर्जडतया प्रतीयमानास्तरुगुल्मादयोऽपि रसशोषणादिभि क्रियाभि पुष्पफलादि समृद्धि धारयन्ति । सचेतनानां सम्राट् मानवस्तु कर्मप्रधान एव चकास्ति । कर्मणामेव प्रभावोऽयं यदसौ समस्तस्यास्य विश्वस्य मूर्धाभिषिक्त इव राराजते ।

प्रयोजनापेक्षयाऽयं नर कर्मस्वनुप्रवजते । परं कर्माण्यनुतिष्ठन्नसौ कदाचिदभीप्सितेन फलेन युज्यते कदाचित्तु न तथा । सफलतां कर्मसु लब्ध्वाऽपि जनो [illegible] । [illegible] [illegible] [illegible] [illegible] [illegible] सन्तोषं [illegible] निर्वेदं वा प्राप्नोति ।

न कोऽपि कर्मणः परित्यागाय प्रभु । 'कर्मणां परिपाको नात्यन्तिकसुखाय' इति [illegible] [illegible] [illegible] [illegible] कर्मणां त्याग परित्याग [illegible] । स्वशरीर[illegible]णि कर्माणि [illegible] त्यजेत् । तथा चोक्तम्– 'कार्यते ह्यवश कर्म सर्व प्रकृतिजैर्गुणैः' इति । इयञ्च प्रकृतिरेव या व्यापारयति सर्वान् कर्मसु ।

एव सति कर्मणा फलाभिसन्धितयाऽनुष्ठानं दु खाय । फलप्रेप्सया कर्माण्यनुष्ठेयानि । 'अयं मे धर्म इति' कर्मणामाचरणं फललोभ परित्यज्य कर्तव्य-भावनया प्रवृत्तो नर सिद्धिमश्नुते । न चावसीदति । कदापि सोऽभीष्टसिद्धिमनाप्नुवन्नपि तत्रापि भाग्यवतीमिच्छामेव बलीयसी ज्ञात्वा निर्विण्णो न भवति ।

कर्मफलानां विचार तिरस्कृत्य कर्मसु प्रवर्तमानो नैहिकमेव सुख लभतेऽपि त्वनासक्तियोगशाली स आमुष्मिक परमानन्दसन्दोहप्रदं सुख सायुज्य च प्राप्नोति । अत्र जनकादीना विदेह-कैवल्यशालिनां निदर्शनानि ।

# न हि ज्ञानेन सदृशं पवित्रमिह विद्यते

अशेपस्यास्य भूतजातस्य साम्राज्यपदमध्यासीनः समस्तानां भोगानामुपभोक्ता सर्वेषाञ्च शास्ताऽयं मनुजः। सत्यपि भोजन-निद्रादिगुणसामान्येऽन्यैः प्राणिभिः सह बुद्धिरेवास्यासु विशेषं जनयति। साऽपि ज्ञानाश्रया विशेष्यति नरं नानाशाविधम्। ज्ञानं चेह तद्यदैहिकं सुखं साधयेत्पारलौकिकं कल्याणमपि। तच्च निगमागमादीनामभ्युदयनिःश्रेयसरूपां सिद्धिं करोति। अतो नैतेन तुल्यं किमपि पवित्रमन्यत्।

इह पारलौकिकाय सुखाय प्रयतमानानां चतुर्धा भवन्ति तावदु-पायाः। केचन कर्माण्येव भोगापवर्गयोर्द्वारीकृत्याऽन्ये योगमेवोपाश्रय परे च भक्तिमार्गमनुसृत्य केऽपि ज्ञानमेवाश्रित्य तदर्थं प्रयतन्ते। तत्र सर्व एवैत उपाया यथाविध्यनुष्ठिता हिताय कल्पन्ते नराणाम्। परं सर्वेषामेतेषामाचरणे ज्ञानमेव प्रथमा भूमिः। विना ज्ञानन्तु तावत् केनापि 'किं हितं किञ्चाहितम्' इत्यपि न ज्ञायते। इष्ट-साधनताया बोधे विकलः किं कुर्यात्? कथं वा वर्तेत? तथात्वे तु पशुभ्यः तस्य न स्यात्कोऽपि विभेदः।

इतश्च ज्ञानमेव येन नरः समाद्रियते लोके। ज्ञानबलेनैव विद्वांसः सर्वत्र पूज्यन्ते। योगयागादिकर्मसु आसक्ताः स्वस्यैव कल्याणं कर्तुं समर्थाः। ज्ञानिनस्तु स्वस्य लोकस्य च मङ्गलं तन्वन्ति। ज्ञानानलेन तेषां कालुष्यं दहति नैर्मल्यं जायते। यथोक्तं भगवता—

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति।

व्यासवाल्मीकिकणादगौतमादयो महर्षयो यथा स्वकल्याणम-साधयन् तथा स्वोपज्ञाभिरताभिस्ताभिरागमरचनाभिरशेषस्य तदानीन्तनस्य तदुत्तरस्य भूतग्रामस्य च।

---

## बलवानिन्द्रियग्रामो विद्वांसमपि बाधते

दुर्निग्राह्याणीन्द्रियाणि। प्राकृता हि नराः भोगैकप्रवणा नक्तन्दिनं विषयचिन्तनलीनाः स्वकीयानामिन्द्रियाणां वशगाः। ते हि तावदिन्द्रियाणां विषयग्रहणप्रवृत्तौ स्वात्मानं स्वयमेव व्यापारयन्त इव लक्ष्यन्ते। विषयाभिपूर्तिं च ज्ञात्वा मोदन्ते। एषैव तावत्तेषामाहोपुरुषिका।

निगमागमनिष्णाताः महामहिमशालिनो हि भवन्ति विद्वांसः। ते च ज्ञानाभ्यासविगतकल्मषाः स्वात्यन्तिकश्रेयो मोक्षमेव जानन्ति सर्वदुःखप्रशमनसमर्थम्। प्रवर्तन्ते च ते मोक्षसाधनाय। परमत्र तेषां स्वकीयानीन्द्रियाण्येव बाधन्ते। इन्द्रियवासनाभिः प्रपीडितास्ते कदाचन निरुद्धचेतोवृत्तयो योगेष्वास्थिता अपि योगभ्रष्टा जायन्ते।

न हि नामेमानीन्द्रियाणि वशयितुं शक्नोति कोऽप्यनायासेन। इन्द्रियनिग्रहणाय प्रवृत्तोऽपि वात्या नौरिव दूरमपह्रियते नरः प्रसभमेभिः प्रमाथिभिः करणैः। अत एव भगवतोक्तम्—

> यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
> इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥

ज्ञानकर्मविभक्तानीन्द्रियाणि चक्षुरादीनि हस्तपादादीनि च । मनोऽप्यान्तरं करणम्। एतेषु ज्ञानेन्द्रियाणां प्रशमो दुष्कर । मनसस्तु निग्रहस्ततोऽपि दु:शक । चञ्चलं मन. । मनोनिग्रहं विना तु विजयोऽसम्भव इन्द्रियेषु । अभ्यासवैराग्ये समाश्रित्य कथमपि मनो निग्रहीतु समर्थो भवेत्। किञ्च तत्रापि मनसस्तारल्यं तस्येन्द्रियाणां प्रवृत्ति जनयेत् । प्रवृत्तेषु चेन्द्रियविषयेषु न स्यादभीष्टसिद्धि र्यतीनामपि तेषाम् ।

एकैकस्यापीन्द्रियस्य निग्रहो दुष्कर' किमुत सर्वेषाम्। मनोऽपि कामानामुपभोगस्पृहां न जहाति । संसारेऽपि विविधा अशनपानविहारवनितादय पदार्था सतत तरलयन्ति समाहितानामपि मनांसि । तीव्रतरै ज्ञानसमाधि-वैराग्यादिसाधनैरेव कामक्रोधादीना प्रशमस्ततश्च ब्रह्मनिर्वाणं प्राप्तुं शक्नुयान्मनुजो नान्यथा ।

---

## अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः

मानवास्तावत्प्रकृत्यैव स्वस्तुतिप्रिया । प्रमादः स्खलनमुन्मार्गगमनं वा नानैसर्गिकम् । सुखदु.खे सदा परिवर्तेते । सर्वे ह्यारम्भाः सुखार्था एव भवन्ति सर्वेषाम्। सुखसिसाधयिषया प्रवृत्तानां दु'खानि भवन्त्येव कदाचन। न नर सर्वज्ञ सम्भवति सर्वगुणोपेतो वा। एतदेव तावदस्यापूर्णत्वम । यद्वयं न विद्मस्तदन्य कोऽपि सम्यगवैति । यस्य परिणामं वयं न तर्कयितु समर्था इयत्तयेदन्तया वा तस्यैव सर्वं परिणामरहस्य कोऽपि सविशेषं जानाति । अत. परै सह सम्मन्त्रणं परानुयोग. परेषां सुहृदादीनाञ्च सगतिर्विमर्शो व्रेति

सत्र युज्यते कर्तुं मः। विवेच्यश्च तेषां प्रियमप्रियं वा वाक्यम्।

कर्मणां केषाञ्चिदारम्भात्प्रागेव यदि विशेषज्ञानां सुहृदादीनां सम्मतिं समादरेम दुष्परिणामस्तु न सम्भवेत्। परं कर्मारम्भावसरे यदि कोऽपि तस्य दुष्परिणतिं वदति न तमभिनन्दन्ति जनाः। 'अयं मत्सरी' ति तं धिक् कुर्वन्ति। चाटुप्रियाः हि सर्वे। यदा तु तथाविधेन दुष्परिणामेन ते सयुज्यन्ते तदा 'सत्यमवोचत्स' इत्यनुतपन्ति केचन। कोऽपि तत्रापि विविधानन्यानसंगतान् दोषानुट्टङ्कयंतस्तैरेव कार्य-बाधां मत्वा पिष्टमेव पिनष्टि। दुर्लभा हि सत्यमग्रेऽहिततया भास-मानस्य परिणामे च हितकरस्योपदेशस्य श्रोतारः।

पराराधनपटीयसां नराणां चाटुकारिता नाविदिता। हित-चिन्तका न सुलभाः। सुहृदोऽपि विरला ते ये स्वसख्युर्हिताय च चेष्टन्ते। यावत्कालं नरः स्वहृदं परेण स्वार्थसाधनाय साहाय्य-माचरति न तेन कुत्सितान् स्वार्थान् बाधते तावत्कालं स समभि-नन्द्यते परैः। यो हितेच्छुः स न मधुरमेव भाषते सदैव। यानि कार्याणि सुखप्रतिकूलानि निषेधते स स्वीयैस्तथ्यैर्वचनैः परिणाम दूषयन् तानि चेद्वयं स्वस्वार्थनिषेवणायावश्यमनुष्ठातुमिच्छेम, तर्हि तस्य वचनं नाभिनन्दाम। तच्चाप्रियवादिनममनिष्टचिन्तकं मत्वा निन्दाम।

हितवचनं प्रायो न मधुरं प्रियं वा भवति। गद्यातुरः कटुभेषजं निन्दति भिषजमपि। परं परिणामं च न जानाति तयोः।

# अहिंसा परमो धर्मः

शस्त्रादिभिरन्येषां सजीवानां प्राणै र्वियोजनं हिंसा। तत्प्रतिकूलो व्यापारोऽहिंसा। सैषा परमो धर्मोऽभ्युदयनिःश्रेयसकारिणी। परमियन्तावद् स्थूलैव व्याख्या भवेद्धिंसायाः। निगूढं हि तत्त्वम् हिंसायाः। शस्त्रादिभि र्विशसनं मा भूत्। ये तु वचसा मनसा वाऽन्येषां वधाय यतन्ते किं ते न हिंसकाः? चैतसिकोऽजादीन् कृपाण्या विशसति[1] स चास्य घातकः। यो हि तन्मांसं जिघत्सुस्तं सौनिकं[2] तद्वधाय प्रेरयति स एव परो हिंसकः। अतो मनसा वचसा कर्मणा परेषां निरपराधानामहितायाऽचेष्टनमनारम्भ एवाहिंसेति वाच्यम्।

मन्वादिभिः शास्त्रकारैरहिंसा परमधर्मतया परिगणिता। यथा स्वकल्याणमस्माभिः साधनीयं तथा परेषामपि। सर्वत्र भूतेषु साम्यदृष्टिः सर्वान् धर्मानतिशेते। यथोक्तं भगवता—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः॥ इति।

अथाहिंसापि दुरुपयुज्यते। आततायिनां धर्मद्रोहिणां जिघांसूनां वधस्तु न गर्हितः। तत्राहिंसाया धर्मत्वं प्रवदतां कातर्यं वा स्यात्स्वदुःखं वा। अत एवाततायिवधो धर्म इति भगवान्मनुरप्यस्मार्षीत्।

अहिंसाव्रतदीक्षितास्तपस्विनस्त्वाततायिष्वपि सानुक्रोशा भवन्ति। तेषां चाहिंसा-प्रभावेण हिंस्रा अपि पशवो हिंसनवृत्तिं त्यजन्ति नराणां तु कथैव का? अत्र भगवान् बोधिसत्त्वो निदर्शनम्।

१. हन्ति २. पशुघाती।

वर्तमानयुगेऽहिंसामूर्ति र्बभूवश्रीगान्धी महात्मा। स हि भारतं सर्वमहिंसाया अमोघमस्त्र प्रयुज्य स्वतन्त्रञ्चकारेति नागोचर कस्याऽपि सचेतनस्याहिंसाया उदात्तं चरितमदमनीयञ्च बलम्। अत एव भारतेऽद्यतनीयो युगोऽहिंसायुगो गान्धी-युग इति नाम्ना च प्रथते।

---

## नृपति-जनपदानां दुर्लभः कार्यकर्ता

राजनीतिर्नाम दुर्गम्या। शासनस्य भारोपि न सुवह। ये हि कोपबलादिवृद्ध्या नरनाथानां हित माधयन्ति भवन्ति ते प्रजानां द्वेष्या। प्रजानां हितान ये सिसाधयिपन्ति ते न वहुधा नरपति भिरभिनन्द्यन्ते। कदाचन च तेपा रोपभाजननाग्त्य वृत्तिभगमपि लभन्ते। विपमैषा स्थिति।

जनपदा नाम पालनीया पुत्रा इव, शासनीया शिप्या इव, ताडनीया उन्मार्गगा पशव इव भवन्ति महीपति-समाश्रितैरमात्यै शासनधुरन्धरैर्नीतिनिप्णातै। पालने शासने च तेपां धनमग्य-पेक्ष्यते। धनं तावत्पृथिवीपतीना कोपादेव लब्धुं शक्यते। कोपाणामवृद्ध्या नरपतय खिद्यन्ते। न चासात्यं वर कलयन्ति। अतो जनपदहितमेव कामयन्तो मन्त्रिणो द्वेष्या भवन्ति राज्ञाम्। अथ कोषवृद्धिरपि करादिवृद्ध्या प्रजाधनेनैव भवेत्। तर्हि प्रजाशोषण-मेतत्स्यात्। तेन प्रजास्वसन्तोपो राज्ञां च तोपः।

दुर्लभा हि नाम ते भवन्ति ये प्रजानां पालनै. सन्तोपं जनयन्ति जानपदीयानां मनःसु, राज्ञामपि भवन्ति प्रियकरा.। षाड्गुण्यनी-

तिमाश्रित्य साम्ना भेदेन दण्डेन च प्रजापालनं समुचितम्। कोष एव तावद्राज्ञां बलं यत् प्रजापालनाय साधकतमम्। रिक्तहस्ता हि किं साधयितुं प्रभवेयुः। दुर्भिक्षेषु शत्रुसंकटेषु च कोषबलं प्रधानम्। अतोऽपव्ययानां परिहारो न्याय्येन च वर्त्मना राज्यस्य पालनं निपुणमतयो राजनीतिनिष्णाताः कुर्वन्ति। तेन त उभयमपि साधयितुं कल्पन्ते जनपदानां नृपतीनाञ्च कार्यम्।

बृटिशशासनकाले गौरांगाणां चाटुकारा भारतीयैर्निन्द्यन्तेस्म। भारतीयाश्च प्रजाहितरतास्तैः पदच्युताः कृताः। अधुना केचन कुशला भारतीयाः शासका जनपदानां हितमपि कुर्वन्ति स्व राष्ट्रपालनाञ्च कार्याणि साधयन्ति। परमुभयविधा एतादृशाः सुदुर्लभाः कार्यकर्तारो न सदा सर्वत्र दृष्टिपथमवतरन्ति।

---

## सर्वे गुणाः काञ्चनमाश्रयन्ति

आदिकालात्स्वर्णमेवामूल्यं व्यवहारेऽर्थकरं गण्यते। अतः काञ्चनं धनमित्यनर्थान्तरमेव मन्यते। सर्वे हि काञ्चनार्थमेव यतन्ते। तच्च तेषां सुखायानुकूलम्। अतो युज्यते तदर्थं प्रयासः। विद्याशीलादयो गुणाः सर्वैः स्पृहणीया नाम। धनन्तु तेभ्योऽपि स्पृहणीयतरम्। विद्यादयस्तु सद्गुणा धनोपार्जनाय प्रायः समभ्यस्यन्ते लोके। सति धने ते स्फीता भवन्ति। धनाभावे तु सन्तोऽपि ते न शोभन्ते। अत एव स्थाने कोऽपि जगौ—

'यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवाः।
यस्यार्थः स पुमांल्लोके यस्यार्थः स च पण्डितः॥'

विद्यादिगुणानामर्जनमपि तावद्धनापेतमेव । निर्धनो हि स्वोदरपूर्त्यै स्वकुटुम्बभरणायैव कथमपि कल्पते, स्वसुतान् कथं शिक्षयितुं शक्नुयात । अद्यत्वे चैतत्प्रत्यक्षमेव । धनवतां तनया एव प्राय पारेऽर्णवं विद्यानां कलानाञ्चानुशीलनाय यान्ति ।

धनवन्तं सर्वे सर्वत्रैव मानयन्ति । यदि धनवान् दुर्गुणोऽपि निर्गुणो वा स्यात धनप्रभावेण तस्य दुर्गुणा गुणराहित्यं वा केवलं तिरोधीयन्ते, अपि तु स समस्तगुणानामाकर इति तदाश्रितैरन्यैरपि स्तूयते । स सद्भूर्णनः कमपीक्षेत तदपि ते तस्य कृपाकटाक्ष-पातं मन्यन्ते ।

दृश्यते बहुशोऽत्यन्तविद्या कुलीना [illegible] सद्गुणैरुपेता अपि धनाभावेन दीनहीना कृपणा इव न बहु मान्यन्ते लोके । तेषां [illegible] हृदयेऽपि [illegible] स्येव निलीयन्ते । यथाह कोऽपि कवि —

> 'उत्थायोत्थाय सतत निर्धनाना मनोरथा ।
> हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥'

किं तद्यद्धनेन विना सिध्येत । अद्यत्वे तु धनस्यैव विशेषेण पूजा, न गुणानाम् । निर्गुणा अपि धनस्य प्रभावेण समस्तेषु जन-पदेषु पत्तनेषु नगरेषु ग्रामेषु सर्वत्र समाद्रियन्ते यशांसि च तेषामेव जेगीयन्ते रत्नानां जलधय इव गुणानां भोगानाञ्च त एवाकरा मन्यन्ते नेतरे गुणग्रामगर्भिता अपि पुमांस ।

# मनोरथा नाम तटप्रपाताः

निर्निरोधा हि जनानामभिलाषाः । क्रियासु तावद्बाह्यासु भवति कोऽप्यवधिः । मनसः कामानां नास्त्यवधिः । इयत्तया सर्वथा परिच्छिन्ना नराणां कामाः । ते ह्यमी तटप्रपाता इवानियम्याः स्वैरमेकैकशः पतन्ति ।

नैसर्गिक एष स्वभावो यन्मानवः स्वार्थसाधनाय स्वसुखलाभाय च [illegible] तिष्ठति । एकं कार्यं संसाध्य द्वितीयं साधयितुं प्रवर्तते, ततस्तृतीयमित्येवमुत्तरोत्तरं तस्य क्रियाक्रमश्चलति । बाह्यक्रियाभिः सहैवान्तर्जगतोऽपि विविधकामनानां साधनाय स्वकल्पिताः प्रवृत्तयः प्रवर्तन्ते । यथा सागरे तरङ्गाणां ततयः समुद्भवन्ति तथा नरस्य मानसमपि मनोरथलहरीभिः समाकुलं क्षुब्धपारावारोपमं न शान्तं तिष्ठति ।

अकर्मण्योऽपि नरो मनोरथानां कल्पने कुशलः कर्मठः । "अनेन वाणिज्येन प्रचुरमायं लब्ध्वा द्वितीयं बृहदायकरं पण्यकार्यमारप्स्ये, ततो मे लक्षरूप्यकाणामायो भविष्यति । अथ हर्म्याणि रचयिष्यामि, वाष्पशकटैरेव यास्यामि, धर्मावसथान् उद्घाटयिष्यामि, यशो लप्स्ये" इत्येवंविधा हि सहस्रशो मनोरथाः । न चैतेषामुत्थाने नियमनम् । सागरे तरङ्गा इव लीयमाना अपि तत्रैव जनयन्त्युत्तरोत्तरमन्यान् । एवं रंकानामाढ्यानां वा, जडानां प्राज्ञानां वा, प्राकृतानामप्राकृतानां वा, सर्वेषां मनःसु मनोरथानां गतयः त्वरितधाराणां धुनीनां प्रवाहा इवाप्रतिहतं बोभवन्ति ।

विरलविरला एव ते कर्मकुशला नरपुंगवा ये स्वमनोरथान्

सफलान् विधातुं प्रयतन्ते। तेष्वपि स्तोका एव ते भद्रजना ये तत्र साफल्यं लभन्ते स्वशेमुषी-बलेनानवरतं कार्यसिद्ध्यै प्रयतन्तो ऽविगणय्य स्वं सुखं दुःखं वा।

---

## गतानुगतिको लोको न लोकः पारमार्थिकः

कश्चिदनुभवशाली विद्वद्वरिष्ठ एव स बभूव य एवमुदाजहार, 'गतानुगतिको लोको न लोक पारमार्थिक'। जगति मनुष्याणां निरंकुशा उच्छृंखलाश्च प्रवृत्तयः। संसारे जडा बहव.। विचक्षणा-श्चाल्पा भवन्ति। एष प्रकृति-सिद्ध एव नियम'। विद्वांसोऽपि मूर्खाणां निरंकुशानां मध्ये पतिता मूर्खवदाचरन्ति। तत्र हि तत्तेषां समीचीनमेव तथानुवर्तनम्। यदाह भगवान—

'न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्।
जोषयेत्सर्वकर्माणि विद्वान् युक्त समाचरन्॥' इति।

तथा च स्मरन्त्यन्ये शास्त्रकारा अपि—

'जनस्याशयमालक्ष्य यो यथा परितुष्यति।
तं तथैवानुवर्तेत पराराधनपण्डित॥' इति।

गड्डलिकाप्रवाह इवास्ति लोकस्याचार। तथ्यस्यान्वेष्टारस्तु स्तोका एव भवन्ति। कर्णाकर्णिकया प्राप्तानुदन्तान प्रायोऽलीकानपि तथ्यतया स्वीकुर्वन्ति ख्यापयन्ति च प्राकृता अत एव तेषां गता-नुगतिकत्वम्।

लोकानामेषा गतानुगतिकता चिरकालादेवावर्तत। रामस्य

भगवतः पावकशुद्धाया अपि स्वप्रेयस्या लोकापवाद-भीत्यैव निर्वासनमप्यस्यैव बलं पुष्णाति। महापुरुषा अपि मनसाऽनभीप्सितान् कार्यकदम्बान् जनानां पारमार्थिकधिया विहीनानां निदर्शनायैवाकुर्वन्। अत एव गाण्डीविनं प्रत्यवोचद्भगवान्—

'लोकसंग्रहमेवात्र संपश्यन् कर्तुमर्हसि।' इति

अद्यत्वे तु गतानुगतिकता प्राधान्यं पद मध्यास्ते सर्वत्र। तथ्यान्वेषणं तु क्वापि गुहासु निलीनमिवादर्शनतां यातम्। किञ्चात्रालीकाधारभूतेऽपि गतानुगतिकत्वे फलस्य परिणतिरपि कदाचन शुभैव भवति। दृश्यताम्—इतः कतिचित् वर्षेभ्य पूर्वं जिन्नामहोदयः 'पाकिस्तानं कांक्षामहे' इत्युदघोषयत्। हिन्दुजनास्तु सावमर्षं समाचारपत्रेषु व्याख्यानेषु च स्वविरोधपक्ष प्रकटयामासु.। तदानी गतानुगतिकतया सर्वत्र विरोधलहरी विजृम्भिता। यवना अपि ये पूर्वमेतस्यासम्भवतां ज्ञात्वा नाभिनन्दुरेनत्तेऽपि पर्यपोषयन् जिन्नापक्षम्। अथ पाकिस्तान इत्यसम्भावितोऽपि सम्भूत।

---

## यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्

इह संसाराध्वनि प्रचलतां जनानां शास्त्राणि 'केन पथा कथ गन्तव्यम्, केन सुखं स्यात्? केन वा दु.खम्' इति मार्गोपदशं कुर्वन्ति। अतएव शासनाद्धेतोस्तेषु शास्त्रेति संज्ञा प्रथते। मार्गप्रदर्शकस्तमेव मार्गं दर्शयेद्यो लोचनोपेतः स्यात्। अन्धस्तु यष्ट्यादिना किञ्चिद्दूरं नीतोऽपि पुनः स्खलेद् भ्रंश्येद् वा स्वमार्गात्। शास्त्राणां दर्शनं प्रज्ञया भवति। प्रज्ञाबलेनैव शास्त्राणां ज्ञाने कौशलं जायते।

# परोपकाराय सतां विभूतयः

सत्यव्रता विद्यावदातचरिता लोभमोहमदमात्सर्यरहिता नीरजस्काः क्षपितकल्मषा दयार्द्रहृदया सहृदया नरमणय सन्त इति लोके प्रथन्ते। ते हि यदर्जयन्ति यत्सञ्चिन्वन्ति द्रविणं ज्ञानं विज्ञानं वा यावदवाप्नुवन्ति तन्नैकान्तेन स्वयमेवोपभुञ्जते संविभजन्ति तावदन्यानपि तेन।

'ऊर्ध्वबाहुर्विरौम्येष न च कश्चित् शृणोति माम्।
परोपकारः पुण्याय पापाय परपीडनम् ॥'

इति भगवतः कृष्णद्वैपायनस्योदारं वचः स्मरन्तस्ते वसुधामेव स्वकुटुम्बं कलयन्तः आत्मौपम्येनैव परेषां सुखानि दुःखानि वा विदन्ति। यदि किमपि द्रविणं लभन्ते तदनपेक्ष्य स्वसुखसाधनानि दीनानां पीडितानां दयनीयानां जनानां हिताय प्रयच्छन्ति। तथा कुर्वतां तेषां चित्ते नाणीयानपि भवति खेदलेशः। हृष्यन्ति नाम ते परोपकृतये स्वसम्पत्तीः वटयन्तः सन्तः। ते हि

"सहते च किल मूर्ध्ना पादपस्तीव्रमुष्णं।
शमयति परितापं छायया संश्रितानाम् ॥"

इति प्रकृतिमेवाचार्यत्वेनोपासमाना न स्वसाध्याद्विरमन्ते। हसन्तु नाम केऽपि स्तुवन्तु केचित् निन्दन्तु वाऽपरे। न तेषामेतैः प्रयोजनम्। ते हि यत्र यत्रार्तान् निर्धनान् निःसहायान् वा पश्यन्ति तत्र तत्रैव विद्युद्वेगवदापतन्ति त्राणाय साहाय्याय। प्रच्छन्नञ्च भवति तेषां प्रदानम्। उपकार-भावना हि तान् प्रेरयति न च लोकश्लाघा। विकत्थनं न तेभ्यो रोचते। गुणास्तेषामुपकृतयो गुप्तानि च

तेषां प्रदानानि । समभिनन्दनीयास्ते । पावनानि तेषामुच्चरितानि ।

अद्यत्वेऽपि केचन परोपकाराय प्रवणा दृश्यन्ते । ते हि धर्मावसथान् रचयन्ति, चिकित्सालयानुद्घाटयन्ति, यशो नोऽस्तु धनेश्वरता च नः प्रख्याता स्यादिति बुद्ध्या । त एते यद्यपि स्वार्थैकसाधनपटीयसां विभूतिभाजां चरितेभ्य उदात्ततराः श्लाघनीयतराश्च, तथापि न सतां कोटिमध्यासितुमर्हन्ति ।

किञ्च ये जिह्मवृत्तीरनुसृत्य स्वार्थसन्धानाय परोपकारतां प्रदर्शयन्ति ते परोपकारकाभासा एव मन्तव्याः ।

---

## मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति

नराणां प्रकृतयोऽत्र भिन्नाः । सन्ति केचिद् ये सर्वात्मना स्वार्थसाधनमेव वरं गणयन्ति । दैन्येनौदार्येण, पैशुन्येन सज्जनतया, जिह्मेनाऽजिह्मेन, गौरवेण लाघवेन, बलेन प्रणत्या वा, येन केनापि गर्हितेनाऽगर्हितेन साधुनाऽसाधुना व्यापारेण ते स्वकार्याणि साधयन्ति । तत्रैव ते स्व नैपुण्य कार्मणत्वं पाण्डित्यं वा मन्यन्ते । किञ्च मानैकधनाः सद्वृत्तास्तु जनाः 'मानो हि महतां धनम्' इति सद्भणितिमनुध्यायन्त प्रकृत्यैवाकृपणा भवन्ति । ते हि न जातु कार्पण्यं भजन्ते । अयमेव तेषां समुदाचारः श्रेष्ठः शिष्टश्च व्यवहारः । इदमेव ते स्वस्य परमं धनं महतीञ्च विभूतिं गणयन्ति । कियन्तोऽपि स्युर्नाम विपद्ग्रस्ताः, महान्त्यापतेयुस्तेषु कष्टानि, असवोऽपि तेषां सन्देहे पतेयुः, बुभुक्षा तान् कामं बाधेत, परं न जातु ते कस्यापि पुर

सगद्गद सानुनयं किमपि प्रार्थयन्ते प्राकृताः कृपणा इव। यथोक्तं कविना—

"त्यजन्त्यसून् शर्म च मानिनो वरं
न तु त्यजन्त्येकमयाचितव्रतम्।"

अयं हि स्वभावः सत्त्ववतां मनस्विनाम्। ते कामं कदर्थिता अपि प्राणोत्सर्गं वरं मन्येरन् दैन्यं न यान्ति। क्षुत्क्षामोऽपि मृगपति र्मृगयया स्वयमुपाहृतं क्रव्यमेव खादति न तृणम्।

प्रकृत्यैव मनस्विता भवति। किञ्चाभिजन्यं, विद्यादिजनितं महानुभाववत्त्वं, शिष्टसंगतिघटितमुच्चाशयत्वं, इतीमे गुणा मनस्वितां जनयन्ति द्रढयन्ति च। एतैर्गुणैः स्वलङ्कृता मनस्विन एव मरणं स्वीकृत्याऽपि कृपणता दीनतां वा न जातु व्रजन्ति।

वीरवरः प्रतापसिंहोऽनेकानि दु सहान्याभीलानि सेहे किञ्च स्वातन्त्र्यदीक्षाधारी स मनस्वी कार्पण्यं न भेजे।

---

## सहसा विदधीत न क्रियामविवेकः परमापदां पदम्

प्रायोऽत्र मानवा अविचारकारिणः। अल्पीयांस एव विविच्य कर्मस्वनुष्वजन्ते। यद्यपि 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति शिष्टाः स्मरन्ति, तथापि मानवानां मानसीय वृत्ति र्यया ते कदापि झटिति कार्याणि समुपक्रमन्ते। तथाविधान् एवाभिलक्ष्य भारवे रुक्तिरियं समुल्लसति।

सहसैव कर्मणामारम्भो भवेन्नाम कदाचन क्वापि सुखपरिणामः। किञ्च न तत्सर्वदा सर्वत्र तथा दृश्यते। उत घोरा हि

दुष्परिणामा अविवेककारिताया दृष्टचरा श्रुतचराश्च भवन्ति प्रेक्षावद्भिः परिगणिता ।

अमर्षस्य रजः समुत्थितस्य तमोमूलस्य वाऽयं भवति प्रभावो यन्मर्त्यः कस्यापि प्रवर्तिष्यमाणस्यारम्भस्य ऋते परिपाकविवेककल्पनायाः साधनाय सावेगं घटते[1] । सैषा राजसी तामसी वा वृत्ति र्नरान् महतीभिरनर्थपरम्पराभिः संयुनक्ति । यथाऽविचार्य चालितं नालीकं[2] कदाचन चालकमेव घातयेत्तद्वदविवेकेन सरभसं कृतानि कर्माण्यपि कर्तुरेवानिष्टं जनयेयुः । प्रथत इहैको लोकप्रवादः "शनैः शनैः पाचितं सुजरं भवेत्" इति । विवेकपूर्व [illegible] सन्तोष्य कृतानि कार्याणि [illegible] । [illegible] चिन्तानि तथाविधानि मा भूवन् तथापि नानिष्टं कुर्युः [illegible] वा जनयेयुः । अत्र [illegible] — आरब्ध निर्धन [illegible] । स तालपत्रेषु [illegible] लिलेख । [illegible] नगरे राजगृह दुग्ध दधि चानैषु । एकदा राजा [illegible] शङ्कमानस्तां खड्गेन हन्तुमारभत । [illegible] खड्गमुत्तोलयन् तावत्तत्रैव तालपत्र लिखिते 'सहसा विदधीत न' इति पत्रे तस्य दृष्टिरपतत् । स च सम्यक् निर्णीयैतां [illegible] विरराम । ततोऽपरेद्युरन्वेषणेनावगतवान् 'देवी निरपराधिनी' इति । ततोऽस्य पद्यस्य सार्थकतया हृष्टो नरपतिः कविमिमं [illegible] स्वसभाकविपदेऽस्थापयत् ॥

---

१. चेष्टते ( 'घट्' चेष्टायां धातोः रूपम्) २. बन्दूक. ।

# विमानम्

विमानपदोपलब्धिरतिप्राचीना । इतो द्विसहस्रवर्षपूर्वेसरस्मिहः 'व्योमयानं विमानोऽस्त्री' इति विमानशब्दं स्वकोषे प्रायुङ्क्त । रामायणे वाल्मीकीये वेदेष्वपि विमानस्य वर्णना लभ्यते । अन्येषु पुराणग्रन्थेषु काव्येषु चास्याभासो दृश्यते । प्रचलन्ति तास्ता उड्डयनगाथा अपि नराणाम् ।

इतः सार्धशतवत्सरपूर्वं पाश्चात्येषु वियति उड्डयन-समीहाऽभून्मनसि तत्रत्यानाम् । ख्रीस्तीये खरनन्दवसुशशांके (१८९७) वत्सरे प्रथमं व्योमयानमाविर्बभूव । परं नासीत्तत्सर्वजनोपयोगि । ततो 'राइट' भ्रातृभिर्वह्निखनन्दैकवत्सरे (१९०३) वायुयानमाविष्कृतम् । तदा प्रभृत्युत्तरोत्तरमस्य उत्कर्षा अभवन् । अधुना तु बृहत्परिणाहा द्रुतगतयो विमाना निर्मीयन्ते ।

विमानानामाविष्कारेण देशानां दुर्गमता दूरतासम्बन्धश्च निराकृतः । इतो लण्डनं वायुयानेन चतुर्विंशतिहोराभिरेव प्राप्नुवन्ति यात्रिणः । समस्तस्यैव वसुधावलयस्य परिक्रमणं पञ्चभिरेवाहोभिः कर्तुं शक्यते विमानेन ।

विमानानामाविष्कारोऽसौ वर्तमानयुगस्य विस्मयावह एक आविष्कारः । वाणिज्यस्य वृद्धिरेतेन सञ्जाता । यच्चोक्तं शिष्टैः 'वसुधैव कुटुम्बकम्' इति तदनेन साध्यते । अधुना त्वस्य प्रभावेण विश्वबन्धुत्वं रचयितुं प्रयत्यते ।

मानवस्य दानवीया वृत्तिर्जघन्या । विमानानामुपयोगो युद्धेष्वपि क्रियते । एतैरेवाग्निवर्षकाण्यस्त्राण्यस्यन्ते यैः क्षणेनैव निरपराधा

जनसंघा प्राणावयु ज्यन्ते । नगराणि सुन्दराणि ध्वंस्यन्ते । वायु-यानानामसौ प्रयोगस्तेषामुन्नतिं बाधेतेत्याभाति । न हि जनानां प्राणेभ्योऽपि गरीयांसो भवितुं शक्या विमानाः ।

यदि युद्धेष्वेषां प्रयोगो भीषणतमो न स्यात्तदाऽल्पेनैवानेहसा लघुभाटयैव[1] सर्वे विमानैः स्थानात्स्थानं यास्यन्ति वाष्पयानानि च तदा गन्त्रीरूपाणीव[2] गणयिष्यन्ति ।

---

## ध्वनिवाहक यन्त्रस्योपयोगिता

शाब्दिकानां शब्दनित्यत्ववादोऽधुना ध्वनिवाहकयन्त्रेण स्पष्टं निर्विवादतां नीतः । इटली प्रदेशस्य वैज्ञानिकः श्रीगुग्लीलिमो मारकोनी महोदय इतः पष्टि-वर्षपूर्वं यदा ध्वनियन्त्रमाविश्चकार तदा समस्तस्यैव जगतो जना परम विस्मय प्रपेदिरे ।

विमानेन सुगमताऽऽपादिता किञ्च ध्वनिवाहकयन्त्रेण सर्वं जगत् स्वचत्वरमिव सम्पादितम् । तारयन्त्राणां ध्वनिक्षेपकाणाञ्च कृते सहस्रश क्रोशान् स्तम्भा निखन्यन्ते, धातुरज्जवश्च तन्यन्ते तदा कथञ्चनोदन्ता प्राप्यन्ते । परं किं वर्णयामस्तावद् ध्वनिवाहकस्य गुणग्रामान् ? येनैकेनैव सर्वमेतन्निराकृत्य तथ्येनैव विश्वबन्धुत्व साध्यते ।

अल्पेनैव मूल्येन ससुखं वयं ध्वनिवाहकस्य कृपया सर्वस्य जगतो जनैः संलपाम. स्वगृहजनैः सहेव । संसारस्य नवान् नवान्

---

१ भाटी—शुल्क (किराया) २ गन्त्री—शकटम् वृषभादिचालितम् ।

प्रातिदिवसानुदन्तान् शृणुमः। किन्नरकण्ठीनां नर्तकीनां संगीतैर्मनो विनोदयामः। जगतो वित्ततराणां नेतॄणां विदुषां शासकानाञ्च भाषणैः स्वज्ञानकोषं वर्धयामः। पण्यद्रव्याणां समर्घतामहर्घताभ्यां प्रत्यहमपचयोपचयप्रवणानां श्रवणेन व्यवहारेषु दाक्ष्यं भजामः। अनल्पा हि तावदुपकृतयोऽस्मासु ध्वनिवाहकयन्त्रस्य। एष हि राजनीतिवाणिज्यकृषिकर्मादिक्रियासु महानेवोपयोगी। पाश्चात्येष्वधुनाऽनेन कृषीवलाः कृषिकर्मसु निपुणा विधीयन्ते। बालाः समुचितरीत्या शिक्ष्यन्ते। सर्वतोभद्रं ह्यस्योपयोगित्वम्।

अधुना ध्वनिवाहकयन्त्रेण सहामेरिकायामेकमन्यल्लघुयन्त्रमपि संयोजितम्। एतेन ध्वनिप्रक्षेपणयन्त्रे गायकादीनामाकृतिबिम्बं पतति। एतच्च ध्वनिवदेव विद्युत्तरङ्गैः स्थानान्तरं वाह्यते। येन ध्वनिग्रहणयन्त्रे[1] तत्तथैव प्रतिफलति। एतेन गायकादीनां साक्षात्कारोऽपि भवति श्रोतॄणाम्। 'एतत् 'टेलीवीयन' इत्याख्यया प्रथते।

---

## ग्रामनगरवासयोस्तारतम्यम्

न ह्येकान्तेन क्वापि दोषा न वा गुणा भवन्ति। दोषगुणमय एवायं चराचरात्मकः संसारः। ग्रामवासे सन्तीह गुणाः केऽपि दोषाश्च। नगरवासेऽप्येवम्।

अद्यत्वे तु नगरेषु सुरम्या मार्गाः प्रस्तरास्तृता वीथयः सुमसृणानि स्थण्डिलानि सुचारा राजमार्गाः परितो लसन्ति। अत्र सुधाधवलिताः पक्वेष्टिकारचिता अभ्रंलिहाः प्रासादाः। एते विद्यु-

1 रिसीवर (अस्मत्कोष्टेस्थित रेडियोयन्त्रम्)

द्वीपप्रकाशोद्भासिता विविधासन्दीमञ्चादिपरिष्कृता' सर्वां सौख्योप-
भोग-सामग्रीमुपाहरन्ति नवागन्तुकान्। नगरेषु सर्वाणि द्रव्याणि
विपणिषु लभ्यन्ते। अत्र विलसन्ति शिक्षालया. सर्वविधा.। अत
एव ग्रामीणाश्छात्रा नगराण्यधिवसन्ति शिक्षामवाप्तुम्। न
चैतदेव। अत्रौषधिका साधनानि भवन्ति नानाविधानि। राजकीया
कार्यालयास्तन्त्र[illegible]त्रैव [illegible]। [illegible]
साधनाय [illegible] विद्यते।

नगरस्येमान् गुणाननु[illegible]चिन्त्य कि तावद्[illegible] निहितमित्येन
भासते पर नैवं चिन्त्यम्। पश्यत—ग्रामे प्रकृति[illegible]
विलासलालिता मूर्तिमतीव प्रतीयते। अत्र विस्तृतानि क्षेत्राणि शाद्वल-
शोभीनि विहरणाय क्रीडनाय, निर्झरिणीनां तटागाना प्रस्रवणाना
कूपानां वाऽयत्नशीतलं मधुरमधुर वारि [illegible], [illegible]
घरट्टपेषणीपिष्टं जीवनीय[1]गणोपबृंहितमन्न भोजनाय, कार्पा-
समौरम्न[2] वा सुदृढ वसन परिधानायेति कि किं न लभ्यते। शुद्ध
गव्यं माहिष वा घृतमत्र सदा सन्निहितम्। नगरे त्वस्य गन्धोऽपि न
लभ्यते। यथेच्छं क्षीरं तक्रं च प्राप्यते। दृढकाया सवसा [illegible]
भवन्ति ग्राम्या। आतिथ्य श्रद्धा सत्यममात्सर्यमृजुस्वभाव इतीमे गुणा
दिव्या ग्रामीणेष्वद्यापि प्राप्यन्ते न च नगरेषु। नागरा हि तावदन्त'
श्यामा बहिरुज्ज्वला। यथा ते वर्णकै[3] विशेषकैश्च' विविधै
शरीरकार्ष्ण्यं पीतत्वं वा संवृण्वन्ति तथा कृत्रिमालापै मधुरैरान्तर
मालिन्यमपि। यदि ग्रामे शिक्षा भवेत्तर्हि नगराद्ग्रामवासो नून-
मतिरिच्यते।

---

1 विटामिन २. ऊर्णामयम् ३ ओष्ठादिरञ्जका रगा. ४ पैष्टम।

## स्व विद्यालयस्योपाधि वितरणोत्सवः

अमुष्मिन् अयनेऽस्माकं सारस्वती महाविद्यालयस्योपाधिवितर-णोत्सव आग्रहायण्यां पूर्णिमायामभवत्। महाविद्यालयस्य विस्तृते क्षेत्रे विद्यालयसोपानश्रेणीनां पुरो मण्डपं काष्ठफलकैररच्यत। तस्मिन् पञ्चाशत्संख्याकला आसन्द्यो लघुमञ्चिका अस्थाप्यन्त। वितानञ्चोपर्यास्तीर्यत। विद्यालयं परित उद्यानञ्चाभित पल्लव-लालिता मञ्जर्यः, क्वचन पीतवसनखण्डरचिता ध्वजा क्वापि भारतीयनेतॄणामन्येषाञ्च महापुरुषाणां चित्राण्यादोल्यन्ते स्म।

दिनस्य तृतीयप्रहरे सभापतिमहोदयेन सभापतिपदमलंकृतम्। आसन् अत्रान्ये प्रतिष्ठिता नागरिकाः केऽपि विद्वांसश्च। अस्माकं विद्यालयस्य छात्रा सर्वे उपातिष्ठन्त। शास्त्र्याचार्य परीक्षासु समुत्तीर्णाः प्रमाणपत्राण्यादित्सवोऽग्रमण्डलमध्यासुस्ततोऽपरे। सर्वे च स्नातकाः पीतोष्णीषधारिणः प्रलम्बकञ्चुका उत्तरीयसंवीताः प्राचीनान् तक्ष-शिलादिविद्यालयानां समावर्तिनान् बटूनस्मारयन्।

अत्र पूर्वमेका नाटिकाऽभिनीता। एषा चास्मत्सतीर्थ्यैः प्रस्तुतासीत्। अस्या अभिनयभंगीं सामाजिकशिक्षाप्रवणताञ्च सर्वे पारिषदः प्रशशंसुः। मंगलगीतिकानन्तरं राष्ट्रध्वजवन्दनाऽभूत्। ततोऽस्मन्मु-ख्योपाध्यायचरणाः विद्यालयस्यातीतोन्नतिविवरणं सविस्तरमश्रावयन्, समभ्यनन्दयन् मान्यान् वदान्यांश्चागन्तुकान्। तदा सभापति महोदयः स्वकरकमलतल्लजाभ्यां बटुभ्यः प्रमाणपत्राणि व्यतरन्। ये ह्यस्मिन् वर्षे सर्वप्रथमं पदमलभन्त परीक्षासु तेभ्यः पुरस्कारा अपि प्रादीयन्त।

अथ सभापतिमहोदय 'संस्कृत विद्यार्थिभि· सस्कृतभाषाया समुन्नत्यै कि विधेयम्' इति विषयमवलम्ब्य सारगर्भितं सयुक्तिकञ्चा-भाषत ।

---

# भारते ग्रामोन्नतिः

कृषिकर्म प्रधानमत्र भारते । तच्च ग्रामाधीनम् । सार्धपञ्च-लक्षमिता सख्या भारतीयगणराज्ये ग्रामाणाम् । जनसंख्या जन-संख्याया प्रतिशत नवतिसंख्या जना ग्रामेषु दशसंख्याका एव नगरेषु निवसन्ति । नगराणामिह सख्या सार्धद्विसहस्रमितैव केवलम् । एतेन बृहत्तमस्यास्य भारतगणराज्यस्य त्रयस्त्रिंशत् कोटि-जनगणात्मकस्य ग्रामा एवाधारभूता इति स्पष्टं पर्यवस्यति ।

हन्त ! ग्रामाणामत्र कियती दुरवस्था ? वराका ग्रामीणा नगर-निवासिनः पोषयन्ति स्वय पर्याप्तमशनवसनादिकमपि न लभन्ते । भूस्वामिनामग्रहारभाजाम् अन्येषाञ्च भूपरिवृतानामधीने तयोः सुखदुःखे । उत्तमर्णानाममीषामेव भूस्वामिनामृणभारेण सदैवाभि-भूयन्ते । कङ्कालकलेवरास्तेऽर्धसंवीता एव दिगम्बरव्रतमिव चरन्ति । व्याधिभि र्ग्रस्तानां तेषां चिकित्सासौकर्यमपि नास्ति । ते हि दैवाभि-शापमेव मत्वात्र साहं साहमनेका व्याधिपीड़ा प्राणैरपि वियुज्यन्ते । विषमज्वरविषूचिकादयस्तु ग्रामाणां चिर सहचरा इव साहचर्यं न मुञ्चन्ति । नारीणां प्रसूतिकाले मूढगर्भादिचिकित्सनाय शस्त्रोप-चारादिना न नेदिष्ठाश्चिकित्सालया । वराका अमो ग्रामीणाः स्वशिशून् शिक्षयितुमपि न समर्थाः समोहमाना अपि । न सन्ति

तत्र पाठशाला प्रवरा अवरा वा। इयमेतादृशी दुर्दशा गण-राज्यस्यास्माकं परमनिधीनां ग्रामाणाम् ?

सुदिष्टमिदमस्माकं यदधुनाशासनाधिकारिणो ग्रामाणामुन्नतौ दत्तचिता वर्तन्ते। किञ्चास्ति बहुयोगक्षेमात्मकमत्र विधेयम्। भूस्वामिता सर्वथा विनाश्या। विज्ञानपद्धत्या कर्षणनिपुणा विधेयाः कृषकाः। प्रतिपञ्चक्रोशं वैद्यैर्निपुणैः कृतानुशीलनाभिश्च वैद्याभिः सुशोभिता अगदशस्त्रपूरिताश्चिकित्सालयाः प्रतिग्रामञ्चावरा पाठशाला उद्घाटनीया। सुदृढाः कूपा वाप्यो वा निर्मापनीयाः। ऋण-दानाय राज्यप्रबन्धाधीनाः स्युः संसदः। रक्षापुरुषाणां पञ्चायतनानाञ्च सुस्थितिः स्यात्। स्वास्थ्यधर्मोपदेशका राजनीतिप्रचारकाश्च तत्र प्रतिपक्षमेकवारं प्रेषणीयाः। वाचालैर्मूकैश्च चलचित्रैर्ध्वनि-वाहकैश्च कृषिशिल्पादिशिक्षा देया।

---

## संस्कृत साहित्ये नारी कवयित्र्यः

'संस्कृत साहित्ये ऽनेकसंख्याः कविकुलमणयो वियति तारक-ततय इव देदीप्यन्ते ऽनेकेषां श्रव्यदृश्यात्मकानां काव्यानां कर्तारः। एतेषां तावदेकस्या अपि कवयित्र्याः काव्यं न लभामहे।' इति विमृशतोऽस्मान् विस्मयो भूयानाविशति। किञ्च यत्र वेदवेदाङ्ग-ब्रह्मवादनिष्णाता विदुष्योऽभूवन् तत्रावश्यं बह्व्यो वनिता काव्यकर्त्र्यो बभूवुरिति हि कल्पयामः। तथा च सुभाषितावल्यादौ विलसन्ति कानिचन पद्यान्यन्योक्तिरूपाणि प्रक्षिप्तानि च सनामनि-र्देशम्। अन्येषामप्येतादृशानाम् अलंकारशास्त्राणाञ्च निरीक्षणेन

[illegible] विदुषीणां [illegible] [illegible] [illegible] [illegible]-
[illegible]:—

**विज्जिका**—इयं काचन कर्णाटराजवल्लभा विदुषी कव-
यित्री च। अस्या नाम संस्कृतकाव्येषु प्रसिद्धम्। इयमुक्ति—

'नीलोत्पलदल श्यामा विज्जिका मामजानता।
वृथैव दण्डिना प्रोक्त सर्वशुक्ला सरस्वती॥' इति।

अस्या सन्ति बहूनि पद्यानि यानि चालंकारिकैरुदाहृतानि।
तेष्वेक प्रसिद्ध यथा—

दृष्टि हे प्रतिवेशिनि क्षणमिहाप्यस्मदगृहे दास्यसि,
प्रायेणास्य शिशो पिता न विरस कौपीरप पास्यति।
एकाकिन्यपि यामि सत्वरमित स्रोतस्तमालाकुल,
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थय॥'

**शीलाभट्टारिका**—इयमपि काचन दाक्षिणात्या। अस्या अपि
काव्यमाधुरी प्रसिद्धा। अस्या पद्यानि कानिचनोदाहृतान्यालकारिके
स्तेषु तेषु ग्रन्थेषु।

**विकटनितम्बा**—इय काचन महाराष्ट्रदेशोद्भव ऽभूत्।

**सुभद्रा-अनगलेखा**—इमे काश्मीरदेशोद्भवे।

**ज्ञानसुन्दरी**—इयं दाक्षिणात्या विशस्य शतकस्य पूर्वार्धे
ऽभवत्। अस्या पद्यम्—

'स्फुरन्ती तामारादकलुपनवांगारकमणि—
ज्वलन्तीं साशंकं सपुलक-करालालनहिताम्।
हरन्तीमाश्लेषादतनु तनु भूकम्पमचिरात्,
हसन्ती हैमन्ती श्रियमिव हसन्ती भज सखे॥

वनविहारस्थली कानन-वल्ली त्यक्त्वा जननमनसे मामाकुलस्य सर्वान्स्यैव विश्वस्य तत्प्रथमदर्शनम्। आधोरणस्य ते प्रथमानुभूयमाना अंकुशाघाता। मच्छिक्षणाय तस्य तानि तानि पीडनानि। इदानीं प्रासादे निवसतो मे स मिष्टास्वाद शर्करागुडोपचित। कृतानां गोस्तनी नारिकेल खर्जूरीणाममन्दम आस्वादनमपि भृशमरोचत मह्यम् ? तत्रैव मे महीयान् देहोपचयोऽभूत्। मम सघण्टानाद मन्दं मन्दं घण्टापथेन गमनं दृष्ट्वा सर्वे नागरा मामपश्यन् सकौतुकं सानन्दञ्च। अधुनेह जन्तु-कौतुकागारे निवसामि। प्रत्यहमाधोरणो मामुपचरति भक्ष्याण्याहरति। 'त्वं तु कल्याणि! कान्त्यतिशयेन स्वर्गे इव दृश्यसे। एष ते फलभरपूर्णमिष्टसनाथो भक्ष्योपहार समभिनन्दनीय। त्वां हि दृष्ट्वा प्रासादस्थायास्तस्या स्मेरमुख्या पद्मावत्या स्मरामि'। यैवमेव सा तत्र मध्ये मध्ये मधुराणि भक्ष्याण्युपाहरत्।

---

## प्रजातन्त्र राजतन्त्र शासनयोः का विशेषता

अधुना जगति परिविस्तृतानां शासनपद्धतयो विविधा प्रचलन्ति। तासु प्रजातन्त्र-राजतन्त्र-वादयो पद्धति प्रधाना। अत्र तावद्राजतन्त्रं मीमांसयाम.—

**राजतन्त्रवादः**—अयं पुरातनः। भारतेऽन्येषु च देशेष्वस्यैव प्रभावोऽवर्तत। राजतन्त्रवादे राजैव सर्वस्य राज्यस्याधिकारी गण्यते। सान्धिविग्रहिकादय सेना-शासनादय सर्वे ह्यधिकारास्तस्यैव भवन्ति। नात्र मतप्रदानेन मतग्रहेण वा पदाधिकार। राजैव सर्वेषां भाग्यस्य हर्ता कर्ता धारयिता च।

पुरा भारते राजा प्रकृतीनामुपास्य देव इवावर्तत। राजापि स्व-प्रजा सुतनिर्विशेषमपालयत्। भगवतो रामस्य सीतानिर्वासनं प्रकृत्यनुरञ्जनार्थमेवासीत्—तस्य

'आराधनाय लोकस्य त्यजेयं जानकीमपि' इत्युदारं वचः। गच्छता कालेन 'प्रजा प्रजानाथ पितेव पासि' इत्यादर्शो लुप्तो नरपतीनाम्। तत प्रजासु शोक क्षोभ कलह इत्यभूवन्। ईतयोऽप्यत्रैव भवन्ति तदा। राज्यविप्लवानामयमनुदाचारो राज्ञां वीजम्।

जनतन्त्रवादः—यदा राज्ञा पोषणनीति शोषणनीतिरध्यास्त देश एव, तदा जनविप्लवो राजद्रोहो वा नासीदनैसर्गिकः।

जनतन्त्रे जनानामेव शासन भवति स्वायत्तम्। अत्र जनानां मतग्रहणेनैव प्रधानस्य भवति स्थापना। सावधि च तत्पदं पञ्चवर्षात्मकं प्रायः। प्रधानो राष्ट्रपतिरुच्यते। अस्याधीने यन्मन्त्रिमण्डलं तस्यापि जनमतग्रहणेनैव स्थापना। जनतन्त्रे कृषकाणां दशा सुस्था भवति। लोकानां भाषणे व्यवहारे च पूर्णं स्वातन्त्र्यं गण्यते। आयव्ययकलनाऽपि सकला प्रजा-परिषदि प्रत्यब्दमुपस्थाप्यते। अत्र न राजतन्त्रवद्राज्यमेकस्य स्वीया पैतामहिकी सम्पत्तिः पैत्रिकी वाऽपि तु सर्वेषां नागरिकाणाम्। एतादृशी जनतन्त्रशासनपद्धतिरधुनाऽस्माक देशे परिलसति। अमेरिकायामप्येषैव पद्धतिरस्ति।

एतदत्रावधेयं यत् शुद्ध-रूपेण जनतन्त्रवादः प्रचलितुं न सम्भवति अनुशासनञ्चापेक्ष्यत एव। न चाधुना राजतन्त्रवादोऽपि केवलस्तिष्ठति। बृटिशदेशस्य जनतन्त्र-राजतन्त्रोभयमिश्रा वर्तते शासनपद्धतिः।

# शरणार्थिनां पुनर्वासः

विक्रमाब्दचतुरुत्तरद्विसहस्रसम्वत्सरे निदाघे भारतं स्वतन्त्रता-मवजगाम, खण्डितञ्चाभून्। पाकिस्तानेति भारतभागस्यैव प्रत्या-दिततत्प्रदेशात् तत्रातताथिभिः कदर्थिता पशुमारं जघ्न्यमाना हिन्दु-जना पाञ्चनदा स्वतन्त्रभारतं गृहाणि सम्पत्तिञ्च तत्रैव विहाया-जग्मु। एतेषां पञ्चषष्टिलक्षमिता सङ्ख्या... इम ... शरणा-र्थिनः शरणैषिणः। अत्रागतानां निवासादि प्रबन्ध कथं कृतो ... शासकैस्तदानीमिति दिङ्मात्रमत्रोदाहराम —

(१) शरणार्थिशिविरा संस्थापिता — अत्र वर्षद्वय भोज्यपेयादि-पदार्था वस्त्राणि च व्यतार्येन्त शरणार्थिभ्यः, चिकित्साप्रबन्धोऽपि रचित।

(२) मध्यमवर्गजनानां निवासाय केषुचिन्नगरेषु नगरोपकण्टमेव आदर्शपत्तनानि निर्मितानि।

(३) छात्रेभ्यश्छात्रवृत्तय पुस्तकानि शुल्कादि चादीयन्त।

(४) वणिग्भ्यो वाणिज्यार्थमृणमपि दत्तम्।

(५) कृषिकर्मदक्षेभ्यश्च स्वानुकूला सम्भारादयो व्यतीर्यन्त।

(६) पुनर्वास-विभाग एक स्वतन्त्र एव विभाग प्रतिष्ठापित पुनर्वास प्रबन्धाय।

यद्राज्यशासकैरद्यावधि कृतं तदेतेषां गम्भीरं नीतिज्ञानं प्रजा वात्सल्यं कर्मकौशलञ्च परिचाययति। किञ्चात्रापेक्ष्यते बह्वन्यदपि कर्तुम्।

पाकिस्तानभागादत्रायातानां प्रचुरा निश्चला सम्पत् तत्रास्ति। इत

स्तत्रगता मुसलमाना स्तत्रत्यानि हिन्दुजनत्यक्तानि गृहाणि भूसम्पत्ति-श्चाधिचक्रु । ते तत्र सुखं वसन्ति । अत्र तु पुरुषार्थिनोऽस्मत्या गृहहीना अद्यापि । आजीविकासौकर्यमपि नास्त्येतेषाम् । महर्घता च महती । नगरनिवासशीला अत्र ग्रामेषु नेहन्ते वस्तुम् । राज्येन पुरुषार्थिनां कृते गृहाणि निर्मेयाणि । वृत्त्यर्जनस्य प्रबन्धो विधेय. । पाकिस्ताने । सह सम्मन्त्र्य हिन्दूनामचलसम्पत्तेमूल्यं ततो ग्राह्यम् । एतच्च शरणार्थिभ्यः प्रतिदेयम् । एतैरेवोपायै सुविहितैः पुनर्वास-कार्यं सेत्स्यति नोचेदत्र महत्यनिष्टशङ्का समापतेदिति ।

---

## विश्वशान्तिः

'लोभ पापस्य कारणम्' इति यदुच्यते तदिह तथ्यतम प्रतीयते । 'विश्वशान्ति' कीदृशी कथं वा स्यादिति हि सर्वत्राधुना विचार्यते । किञ्च कथनेन विचारणेनैव वा कथं विश्वशान्ति स्यात् ? अद्यत्वे तु पशुबलमेव प्रथते, सात्त्विकबलन्तु तिरोहितम् । प्रबला राष्ट्रपाला यदि लोभं न्यक्कृत्य सत्येन हृदा विश्वशान्ति चिकीर्षन्ति तदा तु सा सम्भवेत् । न हि नाम जडा भूमयोऽशान्तिकारिण्यः । इमे हि तदाश्रिता जनसंघा येष्वशान्तिर्विद्यते । कारणपरिहारेण कार्यस्य कथमारम्भः ? निदान-त्यागेन रोगस्य स्वयमेवानुद्गमः । ये हि साम्प्रत विश्वशान्ति रक्षितुं बाधका हेतवस्तेषां परिहारेण तु विश्वशान्तिर्भवेदनायासेनैव ।

राष्ट्रसंघस्तु विश्वशान्तिप्रचारायैव प्रतिष्ठापितोऽभूत् । पर सो-ऽपि पक्षपातदूषितः । दक्षिणकोरियाबलैस्तत्रावधिभागोऽष्टत्रिंशन्मिता-

ऽवश्य उत्क्रान्त । उत्तरकोरियाप्रदेश आक्रान्त । किञ्च राष्ट्रसंघ स्यैकदेशवाहिन्या कोरियाप्रदेशो नैव आक्रान्तः कृतः । चीनदे शाकिस्तानाक्रमणं तु न जानन्नपि गजनिमीलिकायते । न चाद्यापि केनापि न निर्णीतं शतधा प्रार्थितोऽपि । अथ च साम्यवादश्चीना ऽन्तर्राष्ट्रसंघे न प्रवेशं ददाति । उत पुनरेव तमेवाक्रान्तं निजगाद । इदन्तु स्वयं युद्धाह्वानम् ।

विज्ञानाविष्कारा परमाणु बमादयोऽपि विश्वशान्तेर्विघातका । एतेषां को दोष. ? यदि मन्त्राणां नियोक्तैव मिथ्यारूपेण नियुक्ते मन्त्रान् तत्र मन्त्राणां कोऽपराध ? न ह्यसि स्वयं कृन्तति । एष हि पुरुषो यत्तथा त व्यापारयति । यावत्काल गार्ध्यांभिवृद्धिर्लसति राष्ट्र-पालानाम् , यावद् बुभुक्षा, दारिद्र्य . करुणाक्रन्दनम , जिघांसा चेति तामसानां राजसानाञ्च गुणानां भूयस्त्वमस्ति न तावद्विश्वशान्ति-र्भवितु शक्या ।

अत्र वय स्पष्टं ब्रूम —अहिंसाव्रतस्यानुपालन, सत्यस्य प्रचार , विश्वबन्धुत्वभावना, आस्तिकबुद्धि , सदाचार , अलोभ . अमा त्सर्यम् , इत्येत एव बलवत्तमा उपाया विश्वशान्ति-स्थापनाय ।

सात्त्विकभावनामुदयः सदा भारत एवाऽभूत् । चेद् विश्व-शान्तिर्भङ्क्ष्यत्यपि , तदा भारतमेव पुन. चिरस्थायिनीं विश्व शान्ति साधयिष्यति । तत सर्वत्र कल्याणमुल्लासिष्यति ।

---

# सैनिकस्यावश्यकता शिक्षकस्य वा ?

गम्भीरा गतिमत्यश्च देशकाल-दशा भवन्ति। देशानां यादृशी स्थिति र्भवति तादृशान्येव तत्रोपकरणान्यपेक्ष्यन्ते। किञ्चोपादान-कारणंभूता द्रव्याणामिव भवन्ति केऽपि पदार्था येषां देशेन कालेन वा सहाविनाभावो जागर्ति। सैनिक-शिक्षकयोरेतादृश्येव सम्बन्ध-सरणिः स्वस्वदेशैः सह।

राष्ट्रं तावच्छरीरमेव ज्ञेयम। शरीरे करचरणादीनि चक्षुरादीनि च कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च। एतैरेव शरीर वर्तते। इमानि शरीरं यथा बाह्याघातेभ्यस्त्रायन्ते तथोपयुक्तपोष्यसामग्रीभिरपि पोषयन्ति। राष्ट्रस्य सैनिका एतान्येव करपादचक्षुराद्यंगानि मन्त-व्यानि। कोनामाऽऽपालयितुं शक्नोति सैनिकगणस्यानावश्यकत्वम्। शान्तिमये कालेऽपि सुप्तं नरमिव बाह्याघातेभ्यो रक्षणाय सदा जागरूका भवन्ति सुसैनिकाः करचरणाद्यवयवा इव।

अथ शिक्षकस्य सैनिकादविशेषेऽप्यावश्यकताकृतो महान् विशेषो विद्यते। एतच्चानुचिन्त्यं—कर्मज्ञानेन्द्रियाणि मस्तिष्कशा-सितानि शरीरं वर्तयन्ति। अत एव पक्षाघातादौ मस्तिष्कस्य संज्ञा-शक्तिर्यदा नश्यति तदामीषां वैयर्थ्यमेव शरीरे स्पष्टं भासते। देशस्य मस्तिष्कं शिक्षकः। शिक्षका एव यन्त्रवत्स्वदेशीयान् सैनिकान् यथोपयोगं चालयितुं कीलयितुञ्च शक्नुवन्ति। निर्जने कोणे स्थितः शिक्षकः स्वबुद्ध्या विचार्य्य यत्कर्तुं शक्नोति देशकार्यं तन्न संगरांगणे करवालचालनचतुरा उद्भटा अपि भटा।

पोष्यपोषकभाव इव वर्तते सैनिकशिक्षकयो। अन्नं हि तावज्जी-

विनां जीवनाधार । तेनैव वर्तन्ते मनुष्या । किञ्चान्नस्यापि गुणा-स्तत्रैव प्रथन्ते यत्रा मनुष्या. सन्ति। त एवैनदुत्पादयन्ति रक्षन्ति। तेषामेव चेद भवति प्राणाधार । शिक्षका एव रणांगणदीक्षितान् परिपन्थिनिवहमन्थनपटून् भटान जनयन्ति तांश्च ते रक्षन्ति। अत्रोभययोरपि सनै-ा-श्यकना स्वीकार्या। किञ्च शिक्षकस्य पदस्तथा-रुच्चैस्तरां राजते। गाण्डीवी समरभूमौ यदप्रतिहतोऽप्रधृष्योऽभव-द्रिपूणां स सर्वःस्य शिक्षकधनुर्वेदाचार्यस्य द्रोणस्य शिक्षाया प्रभावो बभूव।

# १—सूक्तयो लोकोक्तयश्च

अगाधजलसचारी विकारी न च रोहित.।
अङ्गारः शतधौतेन मलिनत्व न मुञ्चति।
अङ्गीकृत सुकृतिन परिपालयन्ति। (The vırtuous abıde by theıı undeıtakıng)
अजीर्णे भोजनं विपं। (अनपाचे में भोजन जहर का असर करता है।)
अतिदर्पे हता लका (Pııde goeth befoıe a tall)
अतिदानाद् बलिर्बद्ध (अति दान से बलि बांधा गया—अति अच्छी नही।)
अतिपरिचयादवज्ञा,
मन्ततगमनादनादरो भवति
मलये भिल्ल-पुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते। (Famılıaııty breeds contempt)
अत्यारूढिर्भवति महतामप्यपभ्रंश-निष्ठा (All rıses must end ın a tall) हरकमाले राजवाले (Persıan)
✓ अध्रुवाद् ध्रुव वरं (A bırd ın hand ıs worth two ın the bush नौ नकद न तेरह उधार)
अनुक्तमप्यूहति पण्डितो जनः। (The wıse make out even what ıs ımplıcıt)
अधनश्च धनं प्राप्य तृणवन्मन्यते जगत्।
अधिकार्थालाभेऽल्पार्थे प्रवृत्तिर्न दोषाय।
अत्यादरोऽनर्थीभूतः। (Undue regard breeds suspıcıon)
अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
अधिकन्तु न दोपाय।
अति लोभो न कर्तव्य लब्धं नैव परित्यजेत्।

अनेकाः विनश्यन्ति, नश्यन्ति शिशुनायकाः ।
स्त्री नायका विनश्यन्ति, नश्यन्ति बहुनायकाः ।
अनुत्सेकः खलु विक्रमालंकारः ।
अपेयेषु तडागेषु बहुतरमुदकं भवति । (जोड जोड़ मर जायंगे माल जमाई खायेंगे)
अर्थस्य पुरुषो दासः, दासस्त्वर्थो न कस्यचित् ।
अपि धन्वन्तरिर्वैद्यः किं करोतु गतायुषि (There is no remedy against death)
अपुत्रस्य गृहं शून्यम् निपूते का घर मसान।
अन्यद् भुक्तमन्यद् वान्तम् । (दुरंगी छोड़ दे इकरंग हो जा)
अन्धस्य दीपो वधिरस्य गीतं, मूर्खस्य शास्त्रं किमु सादुरत्नम् ।
अविवेकः परमापदां पदम् (Indiscretion is the greatest cause of misery)
अन्नचिन्ता चमत्कारी ।
अमृतं बालभाषितम् ।
अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । (घर में आया साँप पूजिए बाम्बी पूजन क्यों जायें)
अर्धो घटो घोषमुपैति नूनम् । (An empty vessel sounds much थोथा चना बाजे घना)
अपरं वा किं भविष्यति ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
अश्वमेध-सहस्रेभ्यः सत्यमेवातिरिच्यते ।
असह्यं भाति दुर्वाक्यं मेघान्तरितरौद्रवत् ।
अस्ति नास्ति न जानन्ति देहि देहि पुनः पुनः ।
अहो ! दुरन्ता बलवद्विरोधिता ।
अल्पविद्या भयंकरी (A little knowledge is a dangerous thing) नीम हकीम खतराए जान, नीम मुल्लां खतराए ईमान

अरसिके हि रहस्यनिवेदनं,
    शिरसि मा लिख मा लिख।
अलमति विस्तरेण।
अजाकृपाणीयन्याय। (यत्र किमप्यनर्थं सहसाऽऽपतेत्, कापि
    आश्चर्यमयी घटना ऽकस्मादेव घटेद्वा। तत् प्रसङ्गे)
अगुरणि विशेपोऽध्यवसायकर.।
अनिषिद्ध ह्यनुमतं भवति।(Silence is halt consent)
अन्धकवर्तकीन्याय। (अन्धे के हाथ बटेरे)
अन्धचटकन्याय.। ( ,, ,, )
अन्धगजन्याय। (यत्र किमपि वस्तु-विशेषम् अज्ञान-वशाद् बहुश
    कल्प्यते तत्रायं न्याय.)
अन्धपरम्परान्याय।
अन्ध दर्पणन्याय।
अयमपरो गण्डस्योपरि स्फोट।
अरण्य रोदन न्याय:।
अशक्तस्तत्पद गन्तुं ततो निन्दां प्रकुर्वते। (अगूर खट्टे हैं)
अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने।
अस्त्रमस्त्रेण शाम्यति।
अन्योन्यदर्शन कृत समानरूपानुरागकुलवयसाम्।
आयास. खलु राज्य मुज्झितगुरोस्तत्रास्ति कश्चिद् गुण.।
आजगाम यदा लक्ष्मीर्नारिकेल फलाम्बुवत्।
    निर्जगाम यदा लक्ष्मीर्गजभुक्त कपित्थवत्॥
आतुरे नियमो नास्ति (Necessity knows no law)
आत्मीय पर इत्यय खलु कुत. सत्यं कृपाया. क्रम:।
आत्मच्छिद्रं न जानाति परच्छिद्रं पदे पदे।
आत्मवन्मन्यते जगत्।
आत्मन. प्रतिकूलानि परेषां न समाचरेत्।

आत्मार्थे पृथ्वीं त्यजेत्।
आवृत्ति सर्वशास्त्राणां बोधादपि गरीयसी।
आयुर्मर्माणि रक्षति।
आयुर्याति दिने दिने।
आशावधि को गत।
आम्रान् पृष्ट कोविदारानाचष्टे।(Is questioned one thing and replies another सवाल दीगर जवाब दीगर)
आशा वैतरणी नदी।
आशा दुःखस्य कारणं।
आकाशमुष्टिहननन्याय। (यथाऽऽकाशोमुष्टिभिर्हन्यते, पर न तु किमपि फल भवेत्, एव निष्फलेऽस्य [illegible] प्रयोग)
आम्रसेकपितृतर्पणन्याय। (एक पन्थ दो काज)
आमुखापाति कल्याणं, कार्यसिद्धि हि शमति (Coming events cast their shadows before होनहार बिरवान के होत चीकने पात)
इतोऽन्धकूपस्ततो दन्दशूक। (On the horns of dilemma इधर कुआ उधर खाड़ी)
इतो भ्रष्टस्ततो नष्ट। (Out of frying pan into the fire)
इदमरण्ये रुदितमिव (A cry in the wilderness)
इन्द्रोऽपि लघुतां याति स्वय प्रख्यापितैर्गुणैः।
इतो व्याघ्र इतस्तटी।
उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथा।
उदारचरितानां तु वसुधैव कुटुम्बकम्।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमा।
उपकार प्रत्युपकारेण निर्यातयितव्य। (One good turn deserves another)

उपकारो जगत्त्राता विश्वस्य जननी दया।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।
उत्पतितोऽपि हि चणक शक्त किं भ्राष्ट्रक भङ्क्तुम।(A weakling, who-so-ever he may be, cannot injure the strong)
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी
दैवेन देयमिति कापुरुषा वदन्ति।
उप्यते यद्धि यद्बीज तत्तदेव प्ररोहति (As you sow so shall you reap)
उष्ट्राणां विवाहेषु गीतं गायन्ति गर्दभा· (स्वाजे के गवाह मेढक)।
उभयत स्पाशा रज्जु·।
उत्सं॰संगिनि बालके तदन्वेषणं।(गोद में बालक, नगर में ढढोरा)
उद्बाहुरिव वामनः।
ऋद्धिश्चित्तविकारिणी।
एका क्रिया द्व्यर्थकरी प्रसिद्धा ( To kill two birds with one stone एक पंथ दो काज )
एकमेवाद्वितीयम।
एकः श्लाघ्यो विवस्वान् परहितकारणायैव गस्य प्रयास·।
औषधार्थे सुरापानम्।
कन्याप्येवं पालनीया रक्षणीयातियत्नतः।
कुरुते दीप इवार्थदर्शनम्।
काकाक्षिगोलकन्यायेन।
काव्येषु नाटक रम्यं।
कोऽतिभार समर्थानां।
किं दूर व्यवसायिनाम्।
करतलगतामलकवत्।
क कालो न कवलयति (Who can escape death)।

[illegible] ।

[illegible] ।

[illegible]

[illegible] ।

को[illegible] ।

[illegible] किम ।

[illegible] निवर्तति । ( राजा की बेटी के [illegible] )

[illegible] निवृत्तो भवति ?

कालेन फलते [illegible] ।

क उडुपेन तरति सागरम् । ( ओस चाटने से प्यास नहीं बुझती )

कण्टकेनैव कण्टकम् (One nail drives out another)

किमार्द्रकवणिजो वहित्रचिन्तया ।

कीर्तिर्यस्य स जीवति ।

कुपुत्रेण कुलं यथा ।

कृशे कस्यास्ति सौहार्दम् ?

क्षीणे कस्याति गौरवम् ?

क्षणे क्षणे यन्नवतामुपैति, तदेव रूप रमणीयतायाः ।

कस्यात्यन्तं सुखमुपनतम् । (Christmas comes but once a year)

कालस्य कुटिला गतिः । ( समय की चाल टेढ़ी है )

किमिष्टमन्नं खरसूकराणाम्, रत्नोपहारैः किमु मर्कटानाम् । (Why cast pearls before swine गधों और सूअरों को मिठाई से क्या ? भैंस के आगे बीन बजाना ।)

केषाञ्चिदेव मन्ये समागमो भवति पुण्यवताम् ।

कीदृशो नवमालिकया विना शेखरकः ।

क्रोडीकरोति प्रथमं यदा जातमनित्यता ।

धात्रीव जननी पश्चात् तदा शोकस्य क क्रम ।
किं गते सलिले सेतुबन्धनेन ( सांप गया रस्सी पीटो )
किं कुर्वन्ति ग्रहा सर्वे यस्य केन्द्री बृहस्पति. ।
किं कृते विवाहे नक्षत्रपरीक्षया ( विवाह के पीछे वड़िहा )
किमाश्चर्यमत. परम ।
क्षमा हि देवधर्म ।(To forgive is divine)
क्षते क्षार-प्रक्षेप ( To add insult to injury छाती पर मूंग दलना, जख्म पर नमक छिड़कना )
किं सुजन' प्रिय वर्जयित्वाऽन्यद्गुणतु जानाति ।
काकतालीय न्याय ।
काशकुशावलम्बन न्याय । ( नद्यां पतितस्य काशकुशस्थावलम्बनं वृथैव, एवम् अनर्थकस्य कार्यस्यानुष्ठानेऽस्य प्रयोग )
कुड्यं विना न चित्रम ।
कूपमण्डूक न्याय. ।
कूपयन्त्रघटिका न्यायः ।
क्वास्त क्व निपतित ।
खल सर्षपमात्राणि परच्छिद्राणि पश्यति, आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति (The mote thou seest in the eyes of others, but not the beam in thine own)
खल' करोति दुर्वृत्तं नूनं फलति साधुषु ( The mischief of wicked reacts on the good )
खल्वाटबिल्वीयन्याय ( -काकतालीय न्यायः )
गण्डस्योपरि पिण्डक. ( पिटक ) संजात. । ( एक कड़वा करेला दूसरा नीमरस चढा )
गवेषते केलिवन प्रविष्टः क्रमेलकः कण्टकजालमेव (The evil-minded has an eye for faults only)

ग्राम गच्छन् तृण स्पृशति (To kill two birds with one stone)

गत न शोचन्ति ; गतं न शोचनीयम् (Let bygone be bygone)

गुणी गुण वेत्ति न वेत्ति निर्गुण ।

गृहिणी गृहमुच्यते ।

गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ।

ज्ञानेन हीना पशुभि समाना ।

गण्डूषजलमात्रेण शफरी फर्फरायते ।

गुणा. पूजास्थान गुणिषु न च लिङ्ग न वय ।

गतानुगतिको लोको न लोक पारमार्थिक ।

ग्राणेनार्धं भोजनम् ।

घुणाक्षरन्याय ( कदाचित् कदाचित् घुणस्योत्किरणाद् अक्षरं निष्पन्नं भवति । तद्वद् यत्राकुशलेन दैवाद् निष्पद्यते काऽपि क्रिया, तत्रास्य प्रयोगः )

चक्रवत् परिवर्तन्ते दु खानि च सुखानि च । (To every spring there is an autumn )

चटकस्य मास भागशतकम् ।

चिन्ता ज्वरो मनुष्याणां ।

चिन्तामणि परित्यज्य काचमणिग्रहणन्याय ।

छात्राणामध्ययन तप ।

जातस्य हि ध्रुवो मृत्यु. । (Man is mortal)

जाता वामतयैव मेऽद्य सुतरा प्रीत्यै नवोढा प्रिया ।

जलं जलेन सम्पृक्त महाजलाय भवति । ( थोड़ा-थोड़ा करके बहुत हो जाता है )

जलबिन्दु निपातेन क्रमशः पूर्यते घट. ( बूँद-बूँदकर घट भरे ।)

जननी जन्मभूमिश्च, स्वर्गादपि गरीयसी ।

जीवन्नरो भद्रशतानि पश्येत् ।

तृष्णावधि को गत. ?

तेषा वाराणसी गति , येषामन्या गतिर्नास्ति ।

तृणैर्गुणत्वमापन्नै र्बध्यन्ते मत्तदन्तिन ( एकता में बल है )

ते हि नो दिवसा गता. । (Those palmy days are gone)

तथापि काको न च राजहंस ।

तदेतद् घुणोत्कीर्णाक्षरमिव (This is only accidental)

तस्मिन् तुष्टे जगत् तुष्टम् ।

तत्त्वावबोधैकरसो न तर्क (Reason does not essentially lead to the knowledge of reality)

दरिद्रान् भर कौन्तेय, मा प्रयच्छेश्वरे धनम् ।

दीयताम् भुज्यताम् ।

देवा न जानन्ति कुतो मनुष्या ।

दर्दुरा यत्र वक्तारस्तत्र मौन हि शोभनम् ।

दारिद्र्यदोषो गुणराशिनाशी (A light purse is a heavy curse)

दूरत. पर्वता. रम्याः ( दूर के ढोल सुहावने) ।

दूरस्था द्राक्षा लब्धुमपारयताऽलपेत्युक्त्वा त्यज्यते (अंगूर खट्टे हैं) ।

दण्ड शास्ति प्रजा. सर्वा. (डंडा सब को ठीक करता है) ।

दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावके एवाहुति. पतिता ।(होगा वही जो राम रचि राखा) ।

धर्मो रक्षति धार्मिकम् । (Cf धर्मो रक्षति रक्षित.

धनं दानाय, भुक्तये ।

धर्मस्य सूक्ष्मा गति. ।

धर्मस्य तत्त्वं निहितम् गुहायाम् ।

न कषायैर्भवेत्क्षति ।

न च दैवात् परं बल । (निर्बल के बल राम)

न जातु काम कामानामुपभोगेन शाम्यति ।
न दु क पञ्चभि सह ।
न दैव सृष्टि नाशक ।
न निम्बो मधुरायते ।
न भूत न भविष्यति ।
न महानिच्छति भूतिमन्यत ।
नराणां मातुलक्रम ।
न सदिद जगदित्यवधारय ।
न स्वातन्त्र्यात् परं सुख ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा ।
नान्य पन्था विद्यते अयनाय ।
नायमात्मा प्रवचनेन लभ्य ।
नि स्पृहस्य तृणं जगत् ।
नवा वाणी मुखे मुखे ( जितने मुँह इतनी बातें ) ।
न संरोहति वाक्क्षतम ( वाणी का घाव नही भरता) ।
नहि सुख दु खैर्विना लभ्यते (No pains no gains) ।
न मुनि पुनरायातो न चासौ वर्धते गिरि (If the sky falls we shall catch larks) ।
न विडाली भवेद्यत्र तत्र क्रीडन्ति मूषिका (When the cat is away the mice will play) ।
नवाङ्गनानां नव एव पथा (New lords new laws)
न कूपखनन युक्तं प्रदीप्ते वह्निना गृहे (While the grass grows, the horse starves)
नहि प्रभवति परवत्ता कर्तुमात्मप्रियाणि (A dependant cannot have his own way)
नहि बन्ध्या विजानाति गुर्वी प्रसववेदनाम । (An idler has no idea of other's labours) ।

न रत्नमाहार्यमपेक्षते गुण(Beauty requires no painting)
नहि कस्तूरिकामोद शपथेन विभाव्यते (Profession is no proof)
नष्टे मूले नैव फलं न पुष्पं (जड़ गई शाख गया)।
निवसन्ति पराक्रमाश्रया.
न विषादेन समं समृद्धय ।
निर्वाणदीपे किमु तैलदानम् ।
नीरुजस्य किमौषधै ।
ननु वक्तृविशेष नि स्पृहा ।
गुणगृह्या वचने विपश्चित ।
नैराश्य परमं सुखं ।
न खलु बधिराणां कुतूहलमातनोति कोकिलालाप । (बन्दर क्या जाने अदरक का स्वाद)
नहि जगति मशको मातङ्गस्य प्रतिस्पर्धी भवति ।
न हि बलिभुजः प्रक्षाल्यमाना बलक्षतां लभन्ते । (गधा नहाने से गाय नहीं होता)
नहि कठोर कण्ठीरवस्य कुरगशावक प्रतिभटीभवति । (चना फटेगा, क्या भाड को फोड़ देगा)
नहि क्षुधार्तोऽपि शार्दूल कदाचिदपि शाद्वलमत्ति । (भूख कुत्ते को नहीं खाता कभी, जान निकले मुखसे गो शेर की )
नहि श्यामाकबीजं पराक्रमसहस्रेणापि कलमांकुराय कल्पते ।(बोए पेड बबूल के आम कहां से खाय।
न वेत्ति यो यस्य गुणप्रकर्ष स तस्य निन्दा सतत करोति ।(Grapes are sour)
नास्ति खलु दुष्करं दैवस्य ।
नियति केन बाध्यते । (Fate is inexorable)
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ।

निन्दति कञ्चुकमेव शुष्कस्तनी नारी। (A bad workman quarrels with his tools नाच न जाने आंगन टेढा)

निजसदननिविष्ट श्वा न सिंहायते किम्। (अपनी गली में कुत्ता भी शेर)

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण। (पहिए के धुरे की तरह सुख दुख नीचे ऊपर होते रहते हैं)

नि सारस्य पदार्थस्य प्रायेणाडम्बरो महान। ऊँची दुकान फीका पकवान)

न साहसमनारुह्य नरो भद्राणि पश्यति।

निर्दोषदर्शना कन्यका भवन्ति।

न शक्यते चित्तमन्यत प्रवृत्तमन्यत प्रवर्तयितुम्।

नष्टाश्वदग्धरथन्याय।

नहि भवति तरक्षु प्रतिमल्लो हरिणशावकस्य।

नहि वरविघाताय कन्योद्वाह।

नहि भिक्षुका सन्तीति स्थाल्यो नाधिश्रीयन्ते।

न च मृगा सन्तीति यवा नोप्यन्ते।

नहि सर्व सर्व जानाति।

नहि करकंकणदर्शनायादर्शापेक्षा। (हाथ कंगन को अरसी क्या)

नहि गोधा सर्पन्ती सर्पणादहिर्भवति।

न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति।

निरीक्षते केलिवन प्रविश्य क्रमेलक कण्टकजालमेव।

पयसा सिक्तोऽपि नित्य न निम्बो मधुरायते।

परहस्तगत धनम्।

पिता स्वर्ग पिता धर्म:, पिता हि परम तप।

पितरि प्रीतिमापन्ने, प्रीयन्ते सर्व देवता।

प्रतिकर्तुमशक्तस्य, जीवितान्मरण वरं।

प्रकृति खलु सा महीयस

महते नान्यमसुन्नति यथा।
पर्वतस्य मूषिकप्रसवः । (This is an instance of the mountain in labour)
प्रहारेण धनञ्जय ।
प्राशु लभ्ये फले लोभ ।
प्राणांस्तु परित्यज्य मानमेवाभिरक्षतु ।
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ।
प्राप्तकालो न जीवति ।
नास्ति खलु दुष्कर दैवस्य ।
भाग्यं फलति सर्वत्र । (भाग करे काज)
पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारक ।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते । (Evil breeds suspicion)
पकोऽपि नभसि क्षिप्त. क्षेप्तु पतति मूर्धनि । (Slander hurts the slanderer आसमान पर थूका अपने मुंह पर)
पिठरं क्वथदतिमात्र निजपार्श्वानेव दहतितराम् ।(Anger burns)
पावको लोहसङ्गेन मुद्गरैरभिहन्यते । (गेहूँ के साथ घुन पिस जाता है)
पिशाचानाम् पिशाचभाषयैवोत्तरं देयम् (In Rome do as the Romans do)
पय पानं भुजङ्गानां केवल विषवर्धनम् ।
पाणौ पयसा दग्धे तक्रं फूत्कृत्य पामर पिबति । (A burnt child dreads the fire)
पत्तने सति ग्रामे रत्नपरीक्षा युज्यते किम् ? (घोड़े मरे तो गधों को राज मिले)
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मति क्षीयते । (जब-बुरे दिन आते है, अकल जाती रहती है)

प्रायः समापन्नविपत्तिकाले, धियोऽपि पुंसां मलिना भवन्ति ।
प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः । (जहां जायेगा रूखा वहीं पडेगा सूखा)
प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते । (जहां नहीं लाभ, वहां क्या काम)
पुत्रः शत्रुरपण्डितः । (मूर्ख पुत्र शत्रु होता है)
पङ्कप्रक्षालनन्याय । (प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् )
पङ्ग्वन्धन्याय (नष्टाश्वदग्धरथन्याय )
पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति ।
परस्यपद्रौ ज्वलदग्नि न पुनः पादयोरधः ।
पिष्टपेषणन्याय ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ?
फलेन परिचीयते ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।
बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ॥
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् । (Good men prove their usefulness by deeds and not by words)
बह्वारम्भे लघुक्रिया (Much ado about nothing)
बालानां रोदनं बलम् ।
बुभुक्षितं न प्रतिभाति किञ्चित् (भूखे को कुछ नहीं सुहाता)
बलो बलीयान् न तु नीतिमार्गः । (Might is right)
बुद्धिर्यस्य बलं तस्य, निर्बुद्धेस्तु कुतो बलम् ।
बुद्धिर्बलं बुद्धिमताम् ।
बन्धनभ्रष्टः कपोतश्चिल्लामुखे पतति (Out of frying pan into the fire)
ब्राह्मणस्य ब्राह्मणो गतिः ।

भक्षितेऽपि लशुने न शान्तो व्याधि । (फोड़ा ढोल पाया पोल । (Even the commission of sin has not brought me nearer the fulfilment of my object)

भिन्नरुचिर्हि लोक (Tastes differ)

भावग्राही जनार्दन । (भगवान् भाव के भूखे हैं)

भूमेर्गरीयसी माता स्वर्गादुच्चतर पिता, जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।

भवति विज्ञतम. क्रमशो जन. ।

भवानीभ्रुकुटी भगी,

भवोवेत्ति न भूधर. ।

भवितव्यं भवत्येव ।

भस्माच्छादितवह्निवत ।

भाग्य फलति सर्वत्र, न विद्या न च पौरुष ।

भुजगस्य विष दन्ते सर्वांग दुर्जने विषम् ।

भूयोऽपि सिक्त. पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति । (गधा मांजने से गाय नहीं होता)

भस्मन्याज्याहुति. । (-अरण्य रोदन न्यायः)

भूयान् परार्थ. खलु देहलाभ ।

मधुरेण समापयेत् ।

मध्वभावे गुडं दद्यात् ।

मन·पूत समाचरेत् ।

मन एव मनुष्याणां, कारण बन्धमोक्षयो ।

महाराजा: पलायन्ते, मशकानां तु का गति ।

मिष्टान्नमितरे जना: ।

मूर्खस्य नास्त्यौषधम् ।

महान् महत्स्वेव करोति विक्रमम् । (जोर जोरावर पर जचता है)

मन्त्र वा साधयेच्छरीरं वा पातयेत् । (Do or die)

मनोराज्यविजृम्भनम् ।

महाजनो येन गत स पन्था । (बडों की राह भली)

मर्कटस्य सुरापान ततो वृश्चिकदशनम् । (एक करेला, दूसरा नीम चढा।

मन्दोऽप्यविरतोद्योग सदा विजयभाग्भवेत् ।

मनोरथानामगतिर्न विद्यते ।

मृगा मृगै सङ्गमनुव्रजन्ति (Birds of the same feather flock together)

मुनीनाञ्च मतिभ्रम ।

मौन सम्माते लक्षण ।

मौन स्वीकार लक्षण । (Silence is half consent)

मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोति ।

मेदोऽस्थिमासमज्जासृक्संघातेऽस्मिस्त्वचाऽऽवृते शरीरनाम्नि का शोभा सदा बीभत्सदर्शने ।

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता ।

य पलायते स जीवति ।

यथा दृष्ट तथा लिखितम्, लेखके नास्ति दूषणम् ।

यथा पूर्व तथा परम् ।

यस्य देवस्य यद्रूप तथा तद् भूषणवाहनम् ।

यथा नियुक्तोऽस्मि तथा करोमि ।

यथारण्य तथा गृहम् ।

यदुपते क्व गता मथुरापुरी ।

युक्तियुक्तमुपादेयं वचन बालकादपि ।

या यस्य प्रकृति स्वभावनियता केनापि न त्यज्यते । (it is hard to break an old hog of her habit)

युक्तिहीनविचारे तु धर्महानि प्रजायते ।

येन केन प्रकारेण कार्यसिद्धिर्गरीयसी ।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥
योग्य योग्येन युज्यते ।
यथा देशस्तथा वेषः । (जैसा देश वैसा भेष)
यथा वृक्षस्तथा फलं (Think a man according to his rank जैसा मुँह वैसी चपेट)
यतो धर्मस्ततो जयः ।
यथोपार्जनं व्ययं कुरु । (Cut your coat according to the cloth)
यच्छीलः स्वामी तच्छीलास्तस्य प्रकृतयः ।
यथा राजा तथा प्रजा ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।
यादृशी शीतला देवी तादृशो वाहनः खरः । (जैसे को तैसा)
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।
✓ याचको याचकं दृष्ट्वा श्वानवद् घुर्घुरायते । (Two of a trade seldom agree)
✓ यत्न विना रत्नं न लभ्यते । (No pains no gains सेवा बिन मेवा नहीं)
यथा कर्म तथा फलम् ।
य एव करोति स एव भुङ्क्ते ।
योगाद्रूढिर्बलीयसी ।
यो यद् वपति बीजं हि लभते सोऽपि तत्फलम । (As you sow so shall you reap)
यो यच्छ्रद्धः स एव सः ।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तंगताः ।
राजद्वारे श्मशाने यस्तिष्ठति स बान्धवः ।
रूपयौवन सम्पन्ना विशालकुल सम्भवा ।

रत्नाकरादृते कुतश्चन्द्रलेखाया. प्रसूति ।

लोक·प्रयागवासी कूपे स्नानं समाचरति ।(Familiarity breeds contempt)

लोचनाभ्यां विहीनस्य दर्पणो कि करिष्यति ।

लक्षणप्रमाणाभ्या वस्तुसिद्धि ।

लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति । (Man is the architect of his own fate)

वन्ध्या· खलु देवता ।

विषादृते किमन्यद् विषधरस्य मुखान्निष्क्रामति ।

वर्तमानेन कालेन वर्तयन्ति मनीषिण । (In Rome do, as the Romans do)

विद्याहीना न शोभन्ते निर्गन्धा इव किंशुका ।

वकध्यानम् ।

वक. परमदारुण ।

वक परमधार्मिक. ।

वचने को दरिद्र ।

वरं भिक्षाशित्व न च परधनस्वादनसुखम् ।

वरमेको गुणी पुत्रो, न च मूर्खशतान्यपि ।

वाणिज्ये वसति लक्ष्मी ।

विद्या कामदुघा धेनु, सन्तोषो नन्दनं वरम् ।

विद्यारत्नं महाधनम् ।

विद्वान् सर्वत्र पूज्यते ।

विनाश्रयं न तिष्ठन्ति, कवयो वनिता लता ।

विशिष्टाश्च विशिष्टताम् ।

वृद्धस्य तरुणी विषम् ।

व्याधितस्यौषधम् पथ्यम् ।

विना पुरुषकारेण दैवं न सिध्यति । (God helps those who help themselves)

विषवृक्षोऽपि संवर्ध्य स्वयंछेत्तुमसाम्प्रतम् (स्वय पाले को क्या मारना)

विषकुम्भः पयोमुखः । (A wolf in lamb's garb)

विनाशकाले विपरीतबुद्धिः । (जब बुरे दिन आते हैं अकल जाती रहती है)

वीरभोग्या वसुन्धरा । (Might is right जिसकी लाठी उसकी भैंस)

वक्तुं सुकरं, कर्तुं दुष्करम् । ( Easier said than done—कहना आसान करना कठिन ) ।

वृद्धा नारी पतिव्रता ( सौ चूहे खाकर बिल्ली चली हज को ) ।

वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।

वृश्चिकविषभीतः सर्पेण दष्टः । ( Out of frying pan into the fire ) ।

वृश्चिकभिया पलायमान आशीविषमुखे निपतितः ।

वरमद्य कपोतः श्वो मयूरात् ( A bird in hand is worth two in the bush नौ नकद न तेरह उधार ) ।

वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः ।

वृद्धिमिष्टवतो मूलमपि ते नष्टम् ।

विषस्य विषमौषधम् ।

वैधिरह्यो बलवानिति मे मतिः ।

विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।

शठे शाठ्यं समाचरेत् ( Tit for tat ) ।

शरीरमाद्यं खलु धर्मसाधनम् ।

शतं जीव ।

शतं वद (एकं) मा लिख ।

शम्भोर्जटाजूटतटाधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम्। (बड़ों की छाया छोटों की माया)।
शतमारी भवेद्वैद्यः। सहस्रमारी चिकित्सकः।
शनै पर्वत लंघनम्।
शिरो नास्ति शिरोऽव्यथा।
शीलं सर्वत्र भूषणं।
शुभस्य शीघ्रमशुभस्य कालहरणम्।
शनै पन्था शनैः पर्वतलंघनम् (Slow and steady wins the race)।
शून्यपात्रं शब्दायते समधिकम् (An empty vessel makes much noise थोथा चना बाजे घना)।
शिरसि मसीपटलं दधाति दीप· (चिराग तले अन्धेरा)।
शीर्षे सर्पो देशान्तरे वैद्य।
श्व· कार्यमद्य कुर्वीत।
श्रेयांसि बहुविघ्नानि।
श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि।
षट्कर्णो भिद्यते मन्त्र।
सञ्चयी नावसीदति।
सत्पुत्र· कुलदीपक।
सर्वं परवशं दु खम्। सर्वमात्मवशं सुखम्।
सर्व स्वार्थं समीहते।
सहायो बलवत्तर।
साधूनां दर्शनं पुण्यं तीर्थभूता हि साधव।
सारल्यं सरले कुर्यात्।
सम्पत्तौ च विपत्तौ च महातामेकरूपता।
संहति· कार्यसाधिका (Union is strength)।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्त· करणप्रवृत्तय। (The

tendencies of the minds of the good are a decisive factor in matters of doubt ) ।

सितशर्करोपशमनीयत्वे रोगे को न कटुकौषध पाययेत् । (हाथी खुले तो दांत क्यों लगाये ) ।

सतां माने म्लाने मरणमथवा दूरसरणम् ।

स सुहृद् व्यसने यः स्यात् । ( A friend in need is a friend indeed ) ।

संशयात्मा विनश्यति (There is no future for a sceptic) ।

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डित. ( Something is better than nothing ) ।

सा लक्ष्मीरुपकुरुते यया परेषाम् ।

सुखं हि दुखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् ।

सुदृढस्यापि बन्धस्य पूर्वबन्ध' श्लथायते ।

सेवितव्यो महावृक्ष' फलच्छायासमन्वित. ।

स्त्रीबुद्धिः प्रलयङ्कारी ।

स्थानस्थितः कापुरुषोऽपि सिंहः ।

स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ।

स्वधर्मे निधनं श्रेय', परधर्मो भयावहः ।

स्वनामा पुरुषो धन्यः ।

स्वभावो यादृशो यस्य न जहाति कदाचन ।

स्वयमसिद्ध कथं परान् साधयेत् ।

सिंहावलोकितमिव ।

स्त्रीरत्नं दुष्कुलादपि ।

सहसा विदधीत न क्रियाम् (One should not act rashly)

साधुकारी साधुर्भवति (Noble is he who nobly does) ।

सानुषङ्गाणि कल्याणानि ( Good fortunes come in a train ) ।

सामानाधिकरण्यं हि तेजस्तिमिरयो: कुत: ( How can darkness and sunshine co-exist ) ।

सत्यमेव जयते नानृतम् ( Truth triumphs and not falsehood ) ।

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।

सुदुर्लभा सर्वमनोरमा गिरः ।

सूचिप्रवेशे मुसलप्रवेश: । (The thin end of the wedge)

सूची कटाहन्याय ।

स्वगुणाविष्क्रियादोषो नास्ति भूतार्थशासिन (A person stating facts does not offend by recounting his own merits )

स्वभावो दुरतिक्रम: । (You cannot go against your nature )

स्वहस्तेनांगारकर्षणम । (Digging for one's own grave)

स्वदेशगत. शशः परदेशकुञ्जरातिशयी ( अपनी गली मे कुत्ता भी शेर )

स्वप्नलब्धैर्मोदकैर्ग्रामसमुपनिमन्त्रयसि ।

सर्व. कान्तमात्मीयं पश्यति ( Every potter praises his own pot सभी को अपनी वस्तु अच्छी लगती है । )

सर्वे गुणा: काञ्चनमाश्रयन्ति ।

सिध्यन्ति कुत्र सुकृतानि बिना श्रमेण ।

संसर्गजा दोषगुणा भवन्ति । ( A black sheep infects the whole flock A man is known by the company he keeps )

सर्वमत्यन्तं गर्हितम् ( Too much of everything is bad )

सुखमुपदिश्यते परस्य ( दूसरे को उपदेश करना आसान है )

स्खलनधर्माणो मनुष्या । ( To err is human )

सचचारिणोऽनर्था (Misery never comes alone )
सद्यः साधु-समागम ।
स्वकर्मफलभुक् पुमान् ( As you sow so shall you reap)
साहसे श्री. प्रतिवसति । ( No venture, no gain )
सहैव दशभि' पुत्रैर्भारं वहति गर्दभी ।
स्थालीपुलाकन्याय' ।
सर्वस्याभ्यागतो गुरु ।
स्वांगैरेव विभूपिनाऽसि रहसि क्लेशाय किं मण्डनम् ।
सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ।
स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात् ।
हंसमध्ये बको यथा ।
हिताहितं वीक्ष्य निकाममाचरेत् ( Look before you leap
Cut your coat according to your cloth )
हितं मनोहारि च दुर्लभ वच ।
हरिस्मृति. सर्वविपद्विनाशिनी ।
हीनसेवा न कर्तव्या कर्तव्यो महदाश्रय. ।
हस्तकङ्कणं किं दर्पणे प्रेक्ष्यते ।

---

## २—सुभाषितेषु पद्यखण्डानि

### कालिदासस्य कुमारसम्भवात्

क्षुद्रेऽपि नूनं शरणं प्रपन्ने, ममत्वमुच्चैःशिरसां सतीव ॥१ । १२॥
विकारहेतौ सति विक्रियन्ते येपां न चेतांसि त एव धीरा ॥१ । ५६॥
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्ति'॥३।२८॥
प्रियेषु सौभाग्य फला हि चारुता ॥ ५ । १ ॥

क ईप्सितार्थस्थिरनिश्चयं मन., पयश्च निम्नाभिमुखं प्रतीपयेत्
॥ ५ । ५ ॥

शरीरमाद्यं खलु धर्मसाधनम् ॥ ५ । ३३ ॥

न रत्नमन्विष्यति मृग्यते हि तत् ॥ ५ ।४५ ॥

अलोकसामान्यमचिन्त्यहेतुकं, द्विषन्ति मन्दाश्चरितं महात्मनाम्
॥ ५ । ७५ ॥

प्राय प्रत्ययमाधत्ते स्वगुणेपूत्तमादरः ॥ ६ । २० ॥

## कालिदासस्य रघुवंशात्

हेम्न संलक्ष्यते ह्यग्नौ विशुद्धि. श्यामिकापि वा ॥ १ । १० ॥

क्रिया हि वस्तूपहिता प्रसीदति ॥ ३ । २६ ॥

यशस्तु रक्ष्यं परतो यशोधनै ॥ ३ । ४८ ॥

पदं हि सर्वत्र गुणैर्निधीयते ॥ ३ । ६२ ॥

आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ४ । ८६ ॥

पर्यायपीतस्य सुरैर्हिमांशो कलाक्षय श्लाघ्यतरो हि वृद्धे ॥५ १६॥

भिन्नरुचिर्हि लोक ॥ ६ । ३० ॥

रत्नं समागच्छतु काञ्चनेन ॥ ६ । ७९ ॥

प्रतिकारविधानमायुप सति शेषे हि फलाय कल्पते ॥ ८ । ४० ॥

अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिपु ॥ ८ । ४३ ॥

विषमप्यमृतं क्वचिद्भवेदमृतं वा विपमीश्वरेच्छया ॥ ८ । ४६ ॥

धिगिमां देहभृतामसारताम् ॥ ८ । ५१ ॥

अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ९ । ७४ ॥

तेजसां हि न वय समीक्ष्यते ॥ ११ । १ ॥

अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनाना हि यशो गरीय ॥१४।३५॥

आज्ञा गुरूणां ह्यविचारणीया ॥ १४ । ४३ ॥

## कालिदासस्य मेघदूतात्

याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ १ । ६ ॥

रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ १ । २० ॥
आपन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ १ । ५३ ॥
कस्यात्यन्तं सुखमुपनतं दु.खमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ २ । ४६ ॥

## भारवेः किरातार्जुनीयात्

"नहि प्रिय प्रवक्तुमिच्छन्ति मृषा हितैषिणः" ॥ १ । २ ॥
हितं मनोहारि च दुर्लभं वच. ॥ १ । ४ ॥
व्रजंन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिन.॥१।३०॥
विचित्ररूपा खलु चित्तवृत्तय" ॥ १ । ३७ ॥
ननु वक्तृविशेषनिःस्पृहा, गुणगृह्या वचने विपश्चितः ॥ २ । ५ ॥
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धय. ॥ २ । १५ ॥
सहसा विदधीत न क्रियामविवेक परमापदां पदम् ॥ २ । ३० ॥
स क्षत्रियस्त्राणसह. सता य. ॥ ३ । ४८ ॥
न हीङ्गितज्ञोऽवसरेऽवसीदति ॥ ४ । २० ॥
किमिवावसादकरमात्मवताम् ॥ ६ । १६ ॥
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ ७ । २८ ॥
आत्मवर्गहितमिच्छति सर्वः ॥ ६ । ४६ ॥
प्रेम पश्यति भयान्यपदेऽपि ॥ ६ । ७० ॥
उपनतमवधीरयन्त्यभव्या. ॥ १० । ५१ ॥
विमलं कलुषीभवच्च चेत कथयत्येव हितैषिणं रिपुं वा ॥१३ । ६॥
प्रकृत्यमित्रा हि सतामसाधवः ॥ १४ । २१ ॥
सहापकृष्टैर्महतां न संगतं भवन्ति गोमायुसखा न दन्तिनः ॥१४।२२॥

## माघस्य शिशुपालवधात्

श्रेयांसि केन तृप्यते ॥ १ । २६ ॥
सदाभिमानैकधना हि मानिनः ॥ १ । ६७ ॥
ज्ञातसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि ॥ २ । १२ ॥

महीयांसः प्रकृत्या मितभाषिणः ॥ २ । १३ ॥
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २ । २३ ॥
अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ॥ २ । २७ ॥
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ २ । ३८ ॥
कथापि खलु पापानामलमश्रेयसे यतः ॥ २ । ४० ॥
मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ॥ २ । ४५ ॥
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ २ । ६२ ॥
सर्वः स्वार्थं समीहते ॥ २ । ६५ ॥
उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ॥ २ । ८० ॥
अयथाबलमारम्भो निदानं क्षयसम्पदः ॥ २ । ४६ ॥
बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ॥ २ । १०० ॥
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥ ४ । १७ ॥
समय एव करोति बलाबलम् ॥ ६ । ४४ ॥
स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ ७ । ३८ ॥
जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ॥ १६ । २६ ॥
अथवाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ॥ १६ । ४३ ॥

## श्रीहर्षस्य नैषधात्

अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा ॥३ ।९३॥
पित्तेन दूने रसने सितापि तिक्तायते ॥३।९४॥
तदुदितः स हि यो यदनन्तरः ॥४ । ३ ॥
कर्म कः स्वकृतमत्र न भुङ्क्ते ॥ ५ । ६ ॥
आर्जवं हि कुटिलेषु न नीतिः ॥ ५ । १०३ ॥
मितं च सारं च वचो हि वाग्मिता ॥९ । ८ ॥
चकास्ति योग्येन हि योग्यसंगमः ॥ ९ । ५६ ॥
प्रेत्यास्मि कीदृग्भवितेति चिन्ता
सन्तापमन्तस्तनुते हि जन्तोः ॥१४ । ७४ ॥
अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणाः ॥१५ ।४॥

## पञ्चतन्त्रात्

अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति ।
अप्रकटीकृतशशिक्त: शक्तोऽपि जनस्तिरस्क्रियां लभते ।
अनिर्वेद. श्रियो मूलम् ।
अत्यादर: शंकनीय ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुव ।
अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।
अनागतं यः कुरुते न शोभते ।
अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च ।
अभिमत-सिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण ।
अपि कापुरुषो मार्गे द्वितीयः क्षेमकारक ।
आच्छादिते रवौ मेघैराच्छन्ना स्युर्गभस्तय ।
आत्मनः तिकूलानि परेषां न समाचरेत् ।
इह लोके हि धनिनां परोऽपि स्वजनायते ।
उपायेन हि यत्कुर्यात् तन्न शक्य पराक्रमै. ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ।
ऊष्मापि वित्तजो वृद्धि तेजो नयनि देहिनाम् ।
कण्टकनैव कण्टकम् ।
कालः सर्वजनान् प्रसारितकरो गृह्णाति दूरादपि ।
किं दूरं व्यवसायिनाम् ?
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कृषिः क्लिष्टा, विद्या गुरुविनयवृत्त्यातिविषमा ।
कृपणानुसारि च धनम् ।
कृशे कयास्ति सौहृदम ।
कोऽतिभार: समर्थानाम् ?
को विदेशः सुविद्याम् ?

कं श्रीर्न दर्पयति ?
क न निहन्ति मृत्यु. ?
कः पर प्रियवादिनाम् ?
गतानुगतिको लोको न लोक पारमार्थिकः ।
घातयिमेव निच परकार्य वेत्ति न प्रसाधयितुम् ।
छिद्रेष्वमर्था बहुलीभवन्ति ।
जठरं को न विभर्ति केवलम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जल कापुरुषा पिबन्ति
तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वत
तुल्ये बले तु बलवान् परिकोपमेति ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुला ।
दीर्घौ बुद्धिमतो बाहू ।
दुष्टे दुष्टं समाचरेत् ।
नष्टक्रियस्य कुलमर्थपरस्य धर्म., (नश्यति)
नक्र स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नर ।
नष्टं मृतमतिक्रान्त नानुशोचन्ति पण्डिता ।
नाश्मनि स्यात् क्षुरक्रिया ।
निर्वाते ज्वलितो वह्नि स्वयमेव प्रशाम्यति ।
पय. पान भुजंगानां केवलं विषवर्धनम् ।
पण्डितोऽपि वर शत्रुर्न मूर्खो हितकारक. ।
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ।
पैशुन्याद्भिद्यते स्नेह ।
प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम ।
बहूनामप्यसाराणां समवायो हि दुर्जय. ।
बलीयसा हीनबलो विरोध न भूतिकामो मनसापि वाञ्छेत् ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ।

महान् महत्स्वेव करोति विक्रमम् ।
मौनं सर्वार्थसाधनम् ।
मेघो गिरिदुर्गवर्षी च ।
मृदुना सलिलेन खन्यमानान्यवघृष्यन्ति गिरेरपि स्थलानि ।
यद्भविष्यो विनश्यति ।
यदस्मदीय न हि तत्परेषाम् ।
यस्य बुद्धिर्बलं तस्य, निर्बुद्धेस्तु कुतो बलम् ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।
लुब्धस्य नश्यति यशः, पिशुनस्य मैत्री,
वर बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।
वाञ्छाविच्छेदन प्राहु स्वास्थ्य शान्ता महर्षयः ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।
विद्याफलं व्यसनिनः, कृपणस्य सौख्यम् (नश्यति) ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ।
सतां साप्तपदं मैत्रम् ।
सकृदपि दृष्ट्वा पुरुष विबुधा जानन्ति सारतां तस्य ।
स शोच्यते यो न करोत्यनागतम् ।
सर्वनाशे समुत्पन्ने अर्द्ध त्यजति पण्डितः ।
सन्तापयन्ति कमपथ्यभुज न रोगाः ?
सुतप्तमपि पानीयं शमयत्येव पावकम् ।
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।
हस्ततुलयापि निपुणा पलप्रमाणं विजानन्ति ।
हेतुरत्र भविष्यति ।
क्षते प्रहारा निपतन्त्यभीक्ष्णम् ।

रत्नव्ययेन पापाणं को हि रक्षितुमर्हति ।
वक्ति जन्मान्तरप्रीतिं मनः स्निह्यदकारणम् ।
सत्त्वानुरूपं सर्वस्य धाता सर्वं प्रयच्छति ।
सर्वश्चित्तप्रमाणेन सदसद्वाभिवाञ्छति ।
हितोपदेशो मूर्खस्य कोपायैव न शान्तये ।
ज्ञानमार्गे ह्यहङ्कारः परिघो दुरतिक्रमः ।

## हितोपदेशात्

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ?
अनुहुंकुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ।
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः ।
कायः सन्निहितापायः ।
काचः काचो मणिर्मणिः ।
जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
धनाशा जीविताशा च गुर्वी प्राणभृतां सदा ।
न व्यापारशतेनापि शुकवत्पाठ्यते बकः ।
न गणस्याग्रतो गच्छेत् ।
नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ।
मुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः ।
यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ।
ज्ञानं भारः क्रियां विना ।

## विविध कवीनाम्

अनाक्रम्य जगत्सर्वं नो संध्यां भजते रविः।
अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा।
कातरा एव जल्पन्ति यद्भाव्यं तद्भविष्यति।
कीर्तिर्यस्य स जीवति।
गुणाः पूजास्थानं गुणिषु न च लिंगं न च वयः।
महतामाश्रय कार्यं फलं भाग्यानुसारत।
गद्य कवीनां निकष वदन्ति।
यस्यागम केवलजीविकायै त ज्ञानपण्य वणिजं वदन्ति।
शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान पुरुषः स एव।
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव।
नाधर्मश्चिरमृद्धये।
निसर्गतोऽन्तर्मलिना ह्यसाधव।
नित्य सनिहितो मृत्यु कर्तव्यो धर्मसग्रह।

---

## ३—सुभाषितेषु गद्यखण्डानि

### कालिदासस्य अभिज्ञानशाकुन्तलात्

अतिस्नेहः पापाशंकी।
अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम।
क उष्णोदकेन नवमल्लिकां सिञ्चति।
गुर्वपि विरहदु खमाशावन्ध साहयति।
सर्वः कान्तमात्मीय पश्यति।
स्निग्धजनसंविभक्त खलु दु.ख सह्यवेदनं भवति।

न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति ।

न खलु धीमतां कश्चिदविषयो नाम ।

ननु प्रवातेऽपि निष्कम्पा गिरयः ।

---

## कालिदासस्य विक्रमोर्वशीयात्

अनुत्सेकः खलु विक्रमालंकारः ।

छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यति ।

नास्त्यगतिर्मनोरथानाम् ।

सर्वमप्यौदरिकाणामभ्यवहार एव पर्य्यवस्यति ।

सर्वत्र खल्वात्मानुमानेन वर्तितुं युक्तम् ।

---

## शूद्रकस्य मृच्छकटिकात्

अहो धिग्वैषम्यं लोकव्यवहारस्य ।

ईदृशो दासभावो यत्सत्यं कमपि न प्रत्याययति ।

गुणः खल्वनुरागस्य कारणं न बलात्कारः ।

न चन्द्रादातपो भवति ।

पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः ।

साहसे श्रीः प्रतिवसति ।

---

## निरुक्तात्

नैव स्थाणोरपराधो यदेनमन्धो न पश्यति । पुरुषापराधः स भवति ।

बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः ।

नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया ।

आचार्य आचारं ग्राहयति ।

सैषा पुरुषगर्हा, न शास्त्रगर्हा ।

अर्थं वाचः पुष्पफलमाह ।

पुत्रः पुरु त्रायते । पुन्नरकं ततस्त्रायत इति वा ।

ऋषिर्दर्शनात् ।

पुरोहितः पुर एनं दधति ।

पुराणं कस्मात् । पुरा नवं भवति ।

---

## दण्डिनो दशकुमारचरितात्

अवज्ञासोदर्यं दारिद्र्यम् ।

आत्मानमात्मनानवसाद्यैवोद्धरन्ति सन्तः ।

न ह्यलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम् ।

सेयमाकृतिर्न व्यभिचरति शीलम् ।

इह जगति हि न निरीहदेहिनं श्रियः सश्रयन्ते ।

जलबुद्बुदसमाना विराजमाना संपत् तडिल्लतेव सहसैवोदेति, नश्यति च ।

श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि ।

दैव्याः शक्तेः पुरो न बलवती मानवी शक्तिः ।

---

## बाणस्य हर्षचरितात्

अतिरोषणश्चक्षुष्मानप्यन्ध एव जनः ।

अतिद्रुतवाहिनी चानित्यतानदी ।

उपयोगं तु न प्रीतिर्विचारयति ।

कुपितस्य प्रथममन्धकारीभवति विद्या, ततो भ्रुकुटिः ।

निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः ।

मतां हि प्रियंवदता कुलविद्या ।

न किंचिन्न कारयत्यसाधारणी स्वामिभक्तिः ।

न सन्त्येव ते येषां सतामपि सतां न विद्यन्ते मित्रोदासीन-शत्रवः ।

स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च ।

धनोष्मणा म्लायत्यलं लतेव मनस्विता ।

भुजे वीर्यं निवसति न वाचि ।

सपत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिरुन्नतिमायाति ।

सोऽयं कुरंगकैः कचग्रहः केसरिणः ।

हरिणार्थमतिक्षेपणः सिंहसंभारः ।

स्थायिनि यशसि शरीरधीर्वीराणाम् ।

सज्जनमाधुर्याणामभृतदास्यो दश दिशः ।

---

## बाणस्य कादम्बर्याः

अपुत्राणां किल न सन्ति लोकाः शुभाः ।

अहो दुर्निवारता व्यसनोपनिपातानाम् ।

अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम् ।

अनतिक्रमणीया हि नियतिः ।

आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रपातीनि शुभानि निमित्तानि ।

आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव ।

आजन्मक्रमाहितो बलवान् जननीस्नेहः ।

जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि ।

नहि शक्यं दैवमन्यथाकर्त्तुमभियुक्तेनापि ।

धर्मपरायणानां सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति ।

सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा ।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि।

सत्योऽयं लोकवादो यत्संपत्संपदं विपद्विपदमनुबध्नातीति।

सर्वथा न कञ्चन न स्पृशन्ति शरीरधर्माणमुपतापाः।

सर्वथा दुर्लभं यौवनमस्खलितम्।

सुखमुपदिश्यते परस्य।

नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः।

बहुप्रकाराश्च संसारवृत्तयः।

प्रायेण च निसर्गत एवानायतस्वभावभंगुराणि सुखानि, आयत स्वभावानि च दुःखानि।

स्वप्न इवाननुभूतमपि मनोरथो दर्शयति।

बहुभाषिणो न श्रद्दधाति लोकः।

केन कदावलोकितो ज्योत्स्नारहितश्चन्द्रमाः।

एतत्खलु प्रदीपेनाग्नेः प्रकाशनम्।

मिथ्यापि तत्तथा यथा गृहीतं लोकेन।

यस्यामेव वेलायां चित्तवृत्तिः, सैव वेला सर्वकार्येषु।

भृत्या अपि त एव ये संपत्तेर्विपत्तौ सविशेषं सेवन्ते।

लोकेऽपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते।

---

## ४—सुभाषितानां प्रयोगः

### अतिशयविशेषा मनुष्याणाम्

कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके
ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे।
किं केतकी फलति किं पनसः सुपुष्पः
किं नागवल्ल्यपि च पुष्पफलैरुपेता॥

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥

## अभ्यासस्य महिमा

जलमभ्यासयोगेन शैलानां कुरुते क्षयम्
कर्कशानां मृदुस्पर्श किमभ्यासान्न साध्यते ॥

## आपत्तिः

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम्।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति ॥
स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥
निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ॥
सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥
अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥

## आशा

आशाया ये दासास्ते दासाः सर्वलोकस्य।
आशा येषां दासी तेषां दासायते लोकः ॥
आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥

## उचितज्ञता

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा ।
उचितज्ञासि तुले ! किं तुलयसि गुञ्जाफलै कनकम् ॥

## कर्मशीलता

गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् ।
वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥
व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः ।
अधः कूपस्य खनकः ऊर्ध्वं प्रासादकारकः ॥
रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालिः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त ! नलिनीं गज उज्जहार ॥

## कार्यसिद्धिः

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥
शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः ।
बुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम् ॥
सिद्धं वा यदि वाऽसिद्धं चित्तोत्साहो निवेदयेत् ।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः ॥

## कालः

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता ॥
आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥

## कृशे कस्यास्ति सौहृदम्

'वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥

## खलः सुजनश्च

हस्त इव भूतिमलिनो यथा यथा लंघयति खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥

## गुणदोषौ

आरोप्यते शिला शैले यत्नेन महता यथा ।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥

## गुणाः

यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
नहि कस्तूरिकामोदः शपथेन विभाव्यते ॥
गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावो दुग्धविवर्जिताः ॥
आत्मायत्ते गुणग्रामे नैर्गुण्यं वचनीयता ।
दैवायत्तेषु वित्तेषु पुंसां का नाम वाच्यता ॥
किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥
गुणानर्चन्ति जन्तूनां न जातिं केवलं क्वचित् ।
स्फाटिकं भाजनं भग्नं काकिण्यापि न गृह्यते ॥

## तृष्णा

गलितिमुखमाक्रान्तं पलितैराङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥
धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥

## दारिद्र्यम्

भो दारिद्र्य ! नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥
दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥
माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिंगते ।
अर्थप्रार्थनशंकया न कुरुते संभाषणं वै सुहृत
तस्मात् द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥

## दुर्जनाः

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिंगनतत्परः प्रियकथाप्रश्नेषु दत्तादरः ।
अन्तर्गूढविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥

## धर्माचरणम्

न धर्मकालः पुरुषस्य निश्चितः
न चापि मृत्युः पुरुषं प्रतीक्षते ।
सदा हि धर्मस्य क्रियैव शोभना
सदा नरो मृत्युमुखेऽभिवर्तते ॥

नगरी नगरस्येव रथस्येव रथी सदा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥

## धैर्यम्

पतति व्यसने दैवाद्दारुणाद्दारुणात्मनि ।
संवर्मयति वज्रेण धैर्येण महतां मनः ॥
विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो नराः ॥
चलन्तु गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चितं मनः ॥

## नीचः

रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥

## न्यायप्रवृत्तो मनुष्यः

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥

## पण्डितः

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम् ।
बालस्याप्यर्थ-वद्वाक्यमुपयुञ्जीत पण्डितः ॥

## परोपकारिणः

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ।
इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशंकया ॥

## पुराणमित्येव न साधु सर्वम्

'पुराणमित्येव न साधु सर्व
न चापि काव्य नवमित्यवद्यम्'
सन्त परीक्ष्यान्यतरद्भजन्ते
मूढ परप्रत्ययनेयबुद्धि ॥

## भाग्यानि

नैवाकृति फलति नैव कुलं न शील
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षा ॥

## भीरुर्मनुष्यः

अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम ।
यच्च बाहुबल भीरोर्व्यर्थमेतत्त्रय भुवि ॥

## मरणम् (मृत्युर्वा)

मरण प्रकृति. शरीरिणां विकृतिर्जीवनमुच्यते बुधै ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ
पण्डिते चैव मूर्खे च बलवत्यपि दुर्बले ।
ईश्वरे च दरिद्रे च मृत्या सर्वत्र तुल्यता ॥
उद्घाटितनवद्वारे पञ्जरे विहगाऽनिल ।
यत्तिष्ठति तदाश्चर्य प्रयाणे विस्मयः कुत. ॥

## महान्तो मनुष्याः

नाल्पीयसि निबध्नन्ति पदमुन्नतचेतस ।
येषां भुवनलाभेऽपि नि:सीमानो मनोरथा ॥
सम्पदो महतामेव महतामेव चापद ।
वर्धते क्षीयते चन्द्रो न तु तारागण क्वचित् ॥

आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न सम्पत्सु।
अगुरोस्तथा न गन्धः प्रागास्ति यथाग्निगतिनस्य॥
कुसुमस्तवकस्येव द्वे गती स्तो मनस्विनाम्।
मूर्द्धनि वा सर्वलोकस्य विशीर्येत वनेऽथवा॥
महाजनस्य संपर्कः कस्य नोन्नतिकारकः।
पद्मपत्रस्थित तोयं धत्ते मुक्ताफलश्रियम्॥

## मानरक्षा

सम्पदा सुस्थिरमन्यो भवति स्वल्पयापि यः।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम्॥
उत्क्षिप्य टिट्टिभः पादावास्ते भंगभयाद्दिवः।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते॥

## मित्रता प्रेम च

अवज्ञास्फुटितं प्रेम समीकर्तुं क ईश्वरः।
संधिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम्॥
तदेवास्य परं मित्रं यत्र संक्रामति द्वयम्।
दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे॥
इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः।
तद्वत्सज्जनमैत्री विपरीतानाञ्च विपरीता॥
व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतगस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥
वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसघटने।
प्राक्प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते॥
न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥

## यशः

मासि मासि समा ज्योत्स्ना पक्षयोः शुक्लकृष्णयोः ।
तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते ॥

## योग्यताया अयोग्यतायाश्च मूलम्

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥
पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥

## यौवनं विषयाश्च

शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्यन्तपरितापिनः ॥

## लक्ष्मीवतां मदान्धता

लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभराक्रान्ते शेते नारायणः स्वयम् ॥

## लोभः

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च ।
द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥

## विधिः

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥
अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ।
सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम् ॥

## विमृश्यकारिता तदभावश्च

सहसा विदधीत न क्रियामविवेक. परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥

छायार्थं ग्रीष्ममंतप्तो यामेवाहं समाश्रित. ।
अजानता मया सैव पत्रैः शाखा वियोजिता ॥

किन्नु मे स्यादिद कृत्वा किं नु मे स्यादकुर्वत ।
इति संचिन्त्य मनसा प्राज्ञ. कुर्वीत वा न वा ॥

उचितमनुचित वा कुर्वता कार्यजात
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥

## विरहः (बाह्यैर्विपयैः)

स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विपयैर्विपश्चतम् ॥

## वीरः

अंगणवेदी वसुधा कुल्या जलधि स्थली च पातालम ।
वल्मीकश्च सुमेरु कृतप्रतिज्ञस्य वीरस्य ॥

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिनि युक्तमितोऽन्यतः प्रयातुम ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥

हस्ती स्थूलतनु. स चाङ्कुशवश किं हस्तिमात्रोऽङ्कुशो
वज्रेणाभिहता. पतन्ति गिरय किं शैलगात्र पविः ।
दीपे प्रज्वलिते विनश्यतितमः किं दीपमात्रं तमस्
तेजो यस्य विराजते स बलवान् स्थूलेपु कः प्रत्ययः ॥

एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः ।
स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥

## वैराग्यम्

यदि नामास्य देहस्य यदन्तस्तद् बहिर्भवेत् ।
दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥
दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥

## सन्तोषः

अकृत्वा परसन्तापमगत्वा खलमन्दिरम् ।
अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद् बहु ॥
आत्माधीनशरीराणां स्वपतां निद्रया स्वया ।
कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥
सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥
अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥

## सन्तोऽसन्तश्च

अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् ।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते ॥
वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥
अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः सुशान्ताः ।
निजघनमकरन्दस्यन्दपूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ॥

शरदि न वर्षति गर्जति, वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते, वदति न साधु: करोत्येव ॥

यन्त्रे निवेश्य सुतरामपि पीड्यमान-
स्तृष्णागृहीतहृदयै सहसे त्वमिक्षो !
यच्छन् रसं मधुरमेव नितान्तमेषि
मृत्युं ततस्त्वदपरः क इवात्र धन्य. ॥

अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते ।
विष महाहेरिव यस्य दुर्वच. सुदुःसहं संनिहितं सदा मुखे ॥

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्या ॥

उपचरितव्या :सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ।
यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥

परोपकारैकधियः स्वसुखाय गतस्पृहाः ।
जगद्धिताय जायन्ते तत्समाः साधवो भुवि ॥

## समवाय : (=संहतिः)

बहूनामल्पसाराणां समवायो दुरत्ययः ।
तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिन. ॥

सर्वे यत्र विनेतारः सर्वे पण्डितमानिन ।
सर्वे महत्त्वमिच्छन्ति तद् वृन्दमवसीदति ॥

## समुन्नतेः पन्थाः

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशय पुनरारुह्य यदि जीवति पश्यति ॥

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥

यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च ।
अवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥

अफलानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नारभेत विचक्षण ॥
दुष्प्राप्याणि च वस्तूनि लभ्यन्ते वाञ्छितानि च ।
पुरुषैः संशयारूढैरलसैर्न कदाचन ॥

### सम्पदः कथं दूरतो यान्ति

अतिदाक्षिण्ययुक्तानां शंकितानां पदे पदे ।
परापवादभीरूणां दूरतो यान्ति सम्पदः ॥

### सरलताया हानिः

नात्यन्त सरलैर्भाव्यं गत्वा पश्य वनस्थलीम् ।
छिद्यन्ते सरलास्तत्र कुब्जास्तिष्ठन्ति सर्वदा ॥

### सुखं दुःखं च

प्राथमिकी घनवृष्टिः प्राप्ता शिखिना निदाघतप्तस्य ।
आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥

### सुजनः

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचि हिमकरोद्योत ॥

### सेवा

धनमस्तीति वाणिज्य किञ्चिदस्तीति कर्षणम् ।
सेवा न किञ्चिदस्तीति भिक्षा नैव च नैव च ॥

### हंसस्य नीरक्षीरविवेकः

नीरक्षीरविवेके हंसालस्य त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥